आनन्दाश्रमसंस्कृतग्रन्थावलिः

ग्रन्थाङ्कः १३

# तैत्तिरीयोपनिषद्भाष्यवार्तिकं सुरेश्वराचार्यकृतं सटीकम् ।

एतत्पुस्तकमानन्दाश्रमस्थपण्डितैः संशोधितम् ।

तच्च

महादेव चिमणाजी आपटे

इत्यनेन

पुण्याख्यपत्तने

आनन्दाश्रममुद्रणालये

आयसाक्षरैर्मुद्रयित्वा

प्रकाशितम् ।

# अथ तैत्तिरीयोपनिषद्भाष्यवार्तिकस्य प्रस्तावना।

इह खलु भारते वर्षे सुरेश्वराचार्यप्रणीतं वार्तिकद्वयं तिष्ठतीति सुचिरं प्रवृत्तिरासीत्। एतद्वेदान्तसारभूतग्रन्थसमग्रसटीकादर्शपुस्तकालभ्यत्वादुताऽऽदर्शपुस्तकसंचयप्रयत्नशैथिल्यादुत वेदान्तामृतास्वादानभिज्ञत्वाद्वा न केनाप्येतावत्कालपर्यन्तमेकतरमपि वार्तिकं प्रकाशितम्। एतादृशैर्विद्वज्जनानन्दकारणभूतैर्ग्रन्थैरप्रसिद्ध्यन्धकारे नावस्थातव्यमिति मनसि कृत्वा दुर्लभाप्रसिद्धग्रन्थप्रकाशनैकहेतुरानन्दाश्रमाख्यमुद्रणयन्त्रालयाधिपतिरिदं तैत्तिरीयकसारभूतमद्वैतानन्दपरिप्लुतं श्रीमच्छंकरभाष्यविवेचनरूपं सुरेश्वराचार्यप्रणीतं वार्तिकं प्रकाशतामनैषीत्।

अथ कोऽयं सुरेश्वराचार्यः कथं स वेदान्तशास्त्रकृतादरः कर्मवाद्यपि तुरीयाश्रमदीक्षां गृहीत्वा श्रीमच्छंकराचार्याणां शिष्यत्वं स्वीकृतवानिति विचारः प्रस्तूयते। अथ कदाचिच्छंकराचार्याः श्रीमद्द्वैपायननियोगाद्विरोधवादिगर्वाङ्कुरोन्मूलनार्थं दक्षिणां दिशं प्रतस्थिरे। ततः साधितकर्मकाण्डो भट्टपाद इति प्रथितः कुमारिलभट्ट एव प्रथमं जेय इति मनसि कृत्वा ते तीर्थराजं प्रयागं जग्मुः। तत्र त्रिवेणीतीरे कृतविश्रामा आचार्या गुरुन्मथनप्रसक्तमहादोषपपरिहरिष्णुर्भट्टपादस्तुषानलं प्रविष्ट इति लोकवार्तां शुश्रुवुः। तां वार्तां श्रुत्वाऽऽचार्याः सत्वरं गच्छन्तस्तुषराशिसंस्थं कुमारमद्राक्षुः। अथ भट्टपादोऽपि दृष्टिपथावतीर्णान्परमगुरून्दृष्ट्वा परितुष्टचित्तो भूत्वा शिष्यगणैस्तान्पूजयामास। अथ गृहीतसपर्या भगवन्तः कुमारिलमिदमूचुः। भो भट्ट शुद्धाद्वैतमार्गप्रदर्शकोऽहं प्रसङ्गार्थमागतोऽस्मीति। तन्निशम्य भट्टपादः प्राह। भो गुर्ववज्ञादोषनिरसनार्थं तुषाग्निदेहदहनेऽहं गृहीतदीक्षोऽस्मि। वेदोक्तसंकल्पितव्रतत्यागेन यद्यवकीर्णो भवेयं तर्हि सद्भिर्विनिन्द्यो भवितास्मि। यद्यद्वैतमार्गप्रकाशनैकहेतुर्भगवांस्तर्हि मण्डनमिश्रनामा विश्वरूप इत्याख्यया भुवि प्रसिद्धो ममाऽऽवुत्तो विजेयः। स च यायजूकपरिषत्प्रमुखो महागृही कर्मवादी काण्वशाखीय उदग्देशेषु माहिष्मत्याख्यायां नगर्यां प्रतिवसति। तस्मिञ्जिते सर्वं जगज्जितं भविष्यतीति। एव मुक्त्वा स भट्टपादः श्रीमच्छंकररूपमप्रेक्षमाणः प्राणानत्यजत्।

अथ त्यक्तमर्त्यलोके भट्टपादे मण्डनमिश्रं विजिगीषवः श्रीमद्गुरवो माहिष्मतीं नगरीं ययुः। तत्र गत्वा मण्डनमिश्रगृहं पिहितद्वारं दृष्ट्वा व्योममार्गेणैव तत्माविशन्। अथ श्राद्धविधौ प्रवृत्तो मण्डनमिश्रस्तं यतीन्द्रं दृष्ट्वा संवृतद्वारमपि मद्गृहं प्राप्तोऽयं को भवेदिति मनसि कृत्वा तं यतिश्रेष्ठं साश्चर्यं पृष्टवान्को भवानिति। स मस्करीन्द्रो विवादभिक्षामिच्छन्भवत्संनिधिमागतोऽस्मीति तमुवाच। अथ मण्डनमिश्रोऽपि तं तथा कर्तुमनुमेने। ततः स यतीन्द्रो मण्डनमिश्रस्य वादोत्सुकतां विज्ञाय तमुवाच भो यद्यहं पराजितः स्यां तर्हि संन्यासं परित्यज्य गृहस्थाश्रमी भवेयमिति। अथ मण्डनमिश्रोऽपि तन्निशम्य भवनामभृत्यतिमुवाच। भो यद्यहं पराजयभाग्भवेयं तर्हि संन्यासमार्गं स्वीकुर्यामिति। एवं कृतप्रतिज्ञयोस्तयोर्विवदतोर्बहवो दिवसा व्यतीताः। अन्ते च शंकराचार्यैर्मण्डनमिश्रः पराजितः। अथ संप्राप्तपरिभवाय मण्डनमिश्राय तत्प्रतिज्ञानुसारेण मुमुक्षुसार्थवाहशंकराचार्याः संन्यासदीक्षां ददुः। तथा च माधवीये शंकरविजये—

संन्यासगृह्यविधिना सकलानि कर्माण्यह्नाय शंकरगुरुर्विदुषोऽस्य कुर्वन्।

कर्णे जगौ किमपि तत्त्वमसीति वाक्यं कर्णे जपन्निखिलसंसृतिदुःखहानेः॥ १॥—इति।

तदाप्रभृत्येव मण्डनमिश्रः सुरेश्वराख्यां लब्ध्वा श्रीमच्छंकराचार्याणां शिष्यत्वं स्वीकृतवान्। अथ दिनेषु गच्छत्सु सुरेश्वराचार्येणाऽऽत्मगुरुं प्रणम्येदमवोचि। भगवन्यन्मम करणीयमस्ति तत्त्वं मामनुशाधीति। अथ तद्वचनं श्रुत्वा शंकराचार्यास्तं प्रत्यवोचन्मम भाष्यस्य वार्तिकाख्यो निबन्धस्त्वया विधेय इति। गुरुवचनं श्रुत्वा स सुरेश्वराचार्यो भवदीयं शारीरभाष्यं सतर्कं द्रष्टुं यदि मे शक्तिर्नास्ति तथाऽपि भवतामनुग्रहादेव यथाशक्ति निबन्धनायाहं यत इत्युक्त्वाऽस्त्वेवमित्याचार्यपादाभ्यनुज्ञां मूर्ध्नाऽऽदाय च निर्जगाम।

अथ गते सुरेश्वरे चित्सुखाद्यैः शिष्यैः सर्वैरपि मिलित्वाऽऽचार्यान्प्रतीदमूचे। भगवन्सुरेश्वराचार्य आजन्मनः कर्मणि योजितात्मा खलु। एतादृशो जनो यदि युष्मद्भाष्ये निबन्धं करिष्यति तर्ह्यसंशयं सर्वमेव भाष्यं कर्मपरं भविष्यतीति। एवं बहुविधानि निन्दावचनानि निगद्यमानेन सुरेश्वरेण भगवतां भाष्ये निबन्धो नैव विधेय इति सर्वेऽपि भगवतो भाष्यकारान्निर्बन्धेन पृष्टवन्तः। अथ सर्वेषां वचनमाकर्ण्याद्वैतामृतास्वादपरा भगवन्त आचार्या

यदेकस्मिन्कार्ये सर्वे प्रतिकूला भवन्त्यतो ममापि संशय उत्पन्न इत्युक्त्वा सुरेश्वराख्यं स्वशिष्यं रहस्याहूयेदं बभाषिरे । भो भिक्षो मदीयभाष्ये वार्तिकं मा कार्षीः । इमे मे दुर्विदग्धाः शिष्यास्तत्र सहन्त इति । एतद्वचनमाकर्ण्य प्रमाणीकृतगुरुवचनः सुरेश्वरः सविनयं गुरूनवोचत् । भगवन्यदि पुरा मया गृहस्थाश्रमिणा नैयायिकादौ प्रबन्धा विहितास्तथाऽपीतः परं भवत्पादपङ्कजसेवां विलङ्घ्य न किंचिदपि चिकीर्षुरस्मीति । एतद्विनयोपेतं सुरेश्वरवचनं निशम्य ज्ञानप्रदीपध्वस्ताज्ञानान्धकारास्तुरीयाश्रमिश्रेष्ठा भगवन्त आचार्यास्तमिदमूचुः । भो भिक्षो यद्येव तर्हि किंचित्कर्तुं त्वामज्ञापयामि । मम तैत्तिरीयशाखा वर्तते । तस्या अन्तर्गतो भाष्यलक्षणो मम निबन्धोऽप्यस्ति । तस्मान्मत्कृते तस्य वार्तिकं त्वया क्रियताम् । त्वमपि काण्वशाखाध्याय्यसि । तच्छाखान्तर्गतमपि मे भाष्यं वर्तते । तस्यापि वार्तिकं त्वया विधेयमिति । तथा च माधवीये शंकरविजये—

सत्यं यदात्थ विनयिन्मम याजुषीया शाखा तदन्तर्गतभाष्यनिबन्ध इष्टः ।
तद्वार्तिकं मम कृते भवता प्रणेयं सच्चेष्टितं परहितैकफलं प्रसिद्धम् ॥ १ ॥
तद्वत्त्वदीया खलु काण्वशाखा ममापि तत्रास्ति तदन्तभाष्यम् ।
तद्वार्तिकं चापि विधेयमिष्टं परोपकाराय सतां प्रवृत्तिः ॥ २ ॥

एवं गुरुभिराज्ञप्तः सुरेश्वराख्यो मस्करीन्द्रो वार्तिकद्वयं चकार । अनेनैव विद्वद्वर्येण न्यायसागरेण सुरेश्वराचार्येण गुर्वाज्ञानुरोधेन नैष्कर्म्यसिद्ध्याख्यो द्वैतमतनिवर्हणरूपो ग्रन्थः कृतः । अन्येऽपि केचिन्न्यायप्रतिपादका ग्रन्था अनेन कृता इति भगवद्भिर्भाष्यकारैः सह तस्य संवादादेव ज्ञायते । काण्वशाखीयबृहदारण्यकवार्तिकमचिरेणैव प्रकाशं गमिष्यति । इदं तैत्तिरीयवार्तिकमविद्यामूलनाशकं ब्रह्मज्ञानप्रकाशकं विद्वज्जनप्रेमास्पदं भूयादित्येव प्रार्थना ।

लेले इत्युपाह्वस्य—

वामनसूनोः काशीनाथस्य

तैत्तिरीयोपनिषद्भाष्यवार्तिकस्याऽऽदर्शपुस्तकानि येषां मिलितानि तेषां नामानि पुस्तकानां संज्ञाश्च प्रदर्श्यन्ते ।

---

( क. ) इतिसंज्ञितम्–तैत्तिरीयवार्तिकं सटीकं वडलीग्रामनिवासिनां श्रीयुतानां वे. शा. सं. रा. रा. चिदम्बरदीक्षितकुलोत्पन्नानां मार्तण्डदीक्षितानाम् । लेखनकालः शके १८०९

( ख. ) इतिसंज्ञितम्–तैत्तिरीयवार्तिकं सटीकं वटोदरनिवासिनां श्रीयुतानां पटवर्धनोपाह्वानां रा. रा. कृष्णराव भीमाशंकर इत्येतेपाम् ।

( ग. ) इतिसंज्ञितम्–तैत्तिरीयवार्तिकं सटीकं करवीरपुरनिवासिनां वे. शा. सं. रा. रा. द्रविडोपाह्वानां नानाशार्मणाम् ।

( घ. ) इतिसंज्ञितम्–तैत्तिरीयवार्तिकं सटीकं विंचूरपुरनिवासिनां श्रीयुतानां रा. रा. रावसाहेब अण्णासाहेब इत्येतेपाम् । लेखनकालः शके १६९०

( ङ. ) इतिसंज्ञितम्–तैत्तिरीयवार्तिकं सटीकं पुण्यपत्तननिवासिनां श्रीयुतानां खाजगीवाले इत्युपाह्वानां तात्यासाहेब इत्येतेपाम् ।

( च. ) इतिसंज्ञिता–तैत्तिरीयवार्तिकटीका विंचूरपुरनिवासिनां श्रीयुतानां रा. रा. रावसाहेब अण्णासाहेब इत्येतेपाम् । लेखनकालः शके १६३३

# शुद्धिपत्रम् ।

| पृष्ठाङ्कः । | पङ्क्त्यङ्कः । | अशुद्धम् । | शुद्धम् । |
|---|---|---|---|
| २ | १५ | देशस्यै | देश्यस्यै |
| " | १७ | शिरस्तै | शिरसस्तै |
| २ | २७ | नरति | निरति |
| " | " | कीर्तिमत्वं | कीर्तिमत्त्वं |
| ३ | १९ | हि शव्दे | हिशव्दे |
| " | २६ | साध्यत्वे | साध्यत्वेन |
| ४ | ६ | यथा भूतार्थ | यथाभूतार्थ |
| ५ | २३ | व्यंजकत्वे | व्यञ्जकत्वे |
| ६ | १४ | कत्वं दूप | कत्वं तद्रूप |
| " | १५ | गजावि | गोजावि |
| " | १९ | स्वात्मा क्रिया | स्वात्मक्रिया |
| " | २१ | इष्टफ | इष्टानिष्टफ |
| ८ | ८ | को यस्माद | कोपः स्याद |
| " | १३ | प्राणविरोधः | प्रमाणविरोधः |
| " | १९ | शयामीतिः | शया मीतिः |
| " | २४ | कर्मसाधनम् | कर्म साधनम् |
| ९ | १२ | त्यत्वं वारयति | * * |
| " | " | स्वफला | स्वफला- |
| " | २२ | सति यत्कृतकं | सति कृतकं |
| १० | २ | स्यातचा | स्यात्तचा |
| " | ८ | नित्ययो | नित्यत्वयो |
| १२ | ९ | हितासु | हि तासु |
| " | २१ | धीनत्त्व | धीनत्व |
| १३ | ३० | त्मकत्त्वात्त्वा | त्मकत्वात्त्वा |
| १४ | ११ | ध्यात्मिको- | ध्यात्मिको |
| १५ | ६ | दर्शयन्वर्ण | दर्शयन्वर्णः |
| १६ | २५ | महत्वं | महत्त्वं |
| १९ | १९ | त्याचमृत | त्यादावमृत |
| २० | २३ | मेधाकास्य | मेधाकामस्य |
| २३ | २७ | द्वीतीया | द्वितीया |
| २४ | ९ | महत्वा | महत्त्वा |
| " | १० | " | " |
| " | ११ | " | " |
| ३० | ६ | फलवत्वा | फलवत्त्वा |
| " | ९ | पाङ्कश्च | पाङ्क्तं च |
| ३७ | २५ | सामथ्यमस्ती | सामर्थ्यमस्ती |
| ४० | २० | समुच्चर्यो | समुचयो |
| ४४ | १५ | सा फलोक्ति- श्रुतिर्मुक्ति- द्वारेण | ता श्रुतिर्मुक्ति- फलोक्तिद्वा- रेण |
| ४७ | २ | त्यतोज्ञाना | त्यतो ज्ञाना |
| ४८ | ४ | परमार्थिकं | पारमार्थिकं |
| ४८ | २७ | त्यर्थं सू॰ | ह्यर्थं सू॰ |
| ४९ | २३ | व्यावृत्तसिद्धे | व्यावृत्त्यसिद्धे |
| ५१ | ४ | लक्ष्यस्य | लक्षणस्य |
| " | " | दन्यतस्य | दन्यत्तस्य |
| ५४ | १५ | वद्वस्तु | वद्वस्तु |
| ५५ | १० | वाक्य स्यक्ष- णिका | वाक्यस्य क्ष- णिका |
| ५७ | ६ | सह शव्दो | सह ब्रह्मशव्दो |
| ५८ | २२ | मित्याह | मित्याद |
| ६१ | १९ | ज्ञानवत्त्व | ज्ञानत्व |
| ६२ | " | तद्रानं | तज्ज्ञानं |
| ६३ | ५ | ब्रह्मंज्ञाना | ब्रह्म ज्ञाना |

*इत्य न नित्ययनामित्याशङ्क्याऽऽह । न चेति । न तावत् प्रमाणजन्या क्रिया मोक्षस्यानन्यत्वं वारयति ।

| पृष्ठाङ्कः। | पङ्क्त्यङ्कः। | अशुद्धम्। | शुद्धम्। |
|---|---|---|---|
| ६४ | ७ | धर्मवत्वा | धर्मवत्त्वा |
| ६७ | ९ | शब्दे न | शब्देन |
| ७० | ४ | तस्मादिति | तस्मादितीति |
| ७१ | २८ | मत्याऽऽह | मत्याह |
| ७३ | ३ | तिमि**व | तिमिरादिव |
| ७७ | ११ | तयोँर्जन्य | तयोर्जन्य |
| ७८ | १० | त्मसूत्र | त्मकसूत्र |
| ,, | २२ | स्वंमसि | स्वमसि |
| ,, | २३ | देवांविद्या | देवाविद्या |
| ,, | ,, | स्वमसि | स्वंमसि |
| ,, | २९ | ९ (क. ख.) स्वमसि° | ९ (ग. घ.) °देव सि° |
| ,, | ३० | १० (ग.घ.) °देव सि° | १० (क.ख.) स्वमसि° |
| ८० | ४ | बुद्धचेशै | बुद्धचंशै |
| ,, | २० | स्पर्शेने | स्पर्शने |
| ९३ | ७ | व्यपदेशसि | व्यपदेशसि- |
| ९५ | ५ | अन्न | अन्न- |
| १०२ | २३ | सर्वे इतिं | सर्वं इति |
| १०३ | ९ | परत्म | परमात्म |
| ,, | २६ | महत्वा | महत्त्वा |
| ,, | ३१ | ६ (घ. घ.) | ६ (ग. घ.) |
| १०४ | ११ | त्तत्कर्तृत्वा | त्तत्कर्तृत्वा |
| १०५ | १२ | न्महत्व | न्महत्त्व |
| १०८ | १५ | परमोत्मनः | परमात्मनः |
| ,, | १८ | श्रुतिते | तिश्रुते |
| १११ | १३ | पांतद्धेतो | पांत्तद्धेतो |
| ११३ | २७ | °सत्त्वान्नको° | सत्त्वान्न को° |
| ११८ | १९ | कोंयव्यापि | कार्यव्यापि |
| ११९ | ९ | सत्यनने | सत्यनेन |
| १२० | १४ | विक्षितत्वे | विवक्षितत्वे |
| १२२ | १४ | यत्कार्यं- | यत्कार्यं |
| १२३ | १९ | व्यांवहारिक | व्यावहारिक |
| १३९ | ४ | सातियश | सातिशय |
| १४१ | ४ | साधुत्व | साधुत्वं |
| ,, | ११ | शयवत्वा | शयवत्त्वा |
| १५६ | २७ | भर्वतात्या | भवतीत्यैं |
| १६२ | ५ | तदप्येप | तदप्येप |
| १६४ | १७ | हते एव | हत एव |
| १६५ | ५ | भावनयारेन्य | भावनयोरन्य |
| १६६ | १६ | सद्भावोफलब्धे | सद्भावोपलब्धे |
| १६८ | १५ | लवन्ते | लम्वते |
| १६९ | २८ | सिरित्याह | सिद्धिरित्याह |
| १७० | १७ | व्यवहाभृमौ | व्यवहारभृमौ |
| ,, | २६ | °व्यस्य सू | °व्यस्य रू° |
| ,, | २२ | °लवत्वा° | °लवत्त्वा° |
| १७३ | १० | दर्थाव्यतिरेके | दर्थाद्व्यतिरेके |
| ,, | १६ | संष्टा | संसृष्टा |
| ,, | २९ | °द्रम्य ब्र° | °द्रम्यब्र° |
| १७५ | ८ | ज्ञानादरेपि | ज्ञानादेरपि |
| ,, | २१ | स्वयंप्रकाशं | स्वयंप्रकाशत्वं |
| १७६ | १२ | वाक्यार्थे | वाक्यार्थ |
| ,, | २४ | °र्थं ब्रह्म | °र्थब्रह्म |
| १८६ | २३ | र्वस्तुनोभेदो | र्वस्तुनो भेदो |
| १८७ | ४ | वाऽऽत्मनो | वात्मनो |
| १८८ | २७ | °वाक्यैर्विध्य° | °वाक्यैर्विध्य° |
| १८९ | २९ | °क्यार्थम° | °क्यार्थाम° |
| १९९ | ५ | उप्तत्त्यादि | उत्पत्त्यादि |
| २०६ | ७ | व्याचष्टे | व्याचष्टे |
| २०८ | ३१ | ४ (प.ख.) | ४ (क.ख.) |

# सुरेश्वराचार्यकृतं तैत्तिरीयोपनिषद्भाष्यवार्तिकम् ।

आनन्दगिरिकृतटीकासंवलितम् ।



---

सत्यं ज्ञानमनन्तमेकममलं ध्वस्तान्धकारं परं निर्द्वैतं हृदि पद्ममध्यनिलयं निःशेषधीसाक्षिणम् । वेदान्तोपनिविष्टबोधविषयं प्रत्यक्तया योगिनां भक्त्या तं प्रणिपत्य वेदशिरसो वक्ष्यामि सद्वार्तिकम् ॥ १ ॥

कृष्णाय सच्चिदानन्दतनवे परमात्मने ।
नमो विधीयते त्रेधा गुरवे च तदात्मने ॥१॥
श्रद्धाभक्ती पुरस्कृत्य संप्रदायानुसारतः ।
व्याख्यास्येऽहं यथाशक्ति तैत्तिरीयकवार्तिकम् ॥२॥

तैत्तिरीयकशाखोपनिषदस्तद्भाष्यस्य च वार्तिकमुक्तानुक्तदुरुक्तचिन्तात्मकं चिकीर्षुराचार्यश्चिकीर्षितस्य वार्तिकस्याविघ्नपरिसमाप्तिप्रचयगमनाभ्यां शिष्टाचारपरिपालनार्थं च शास्त्रीयवस्तुतत्त्वानुस्मरणपूर्वकं तन्नमस्काररूपं मङ्गलाचरणं मुखतः संपादयन्नर्थादपेक्षितमनुबन्धजातं च सूचयन्नुद्देशस्यैकदेशं प्रतिजानीते । सत्यमित्यादिना । तं प्रकृतं परमात्मानं प्रत्यञ्चं भक्तिश्रद्धाभ्यां प्रकर्षेण त्रिधा नत्वा वेदशिरस्तैत्तिरीयकोपनिषदः सदबाधितन्यायसंदृब्धं दुरुक्तादिचिन्तात्मकं वार्तिकं वक्ष्यामीति संबन्धः । उपनिषदः स्पष्टार्थतया वस्तुतो दुरुक्ताभावेऽपि दुरुक्तत्वभ्रान्त्या तच्चिन्तासिद्धिरनुक्तं तु गुणोपसंहारन्यायेन तत्र चिन्तयितुं शक्यते । उक्तचिन्ता तु सुकरैव प्रणतिविषयत्वेन प्रकृतस्य परमात्मनस्तत्पदार्थस्यानृतविरोधित्वेनावितथत्वं सन्मात्रत्वं सर्वकल्पनाधिष्ठानत्वमुपन्यस्यति । सत्यमिति । तस्यैव जाड्यविरोधित्वेन चिन्मात्रत्वं स्वयंप्रकाशत्वं दर्शयति । ज्ञानमिति । तस्यैव कालतो देशतश्चापरिच्छिन्नत्वेन सर्वगतत्वं नित्यत्वं च कथयति । अनन्तमिति । वस्तुतश्च परिच्छेदपरिहाराय

---

१(ख. ङ.) °कमकलं (°ग. घ.) °कमकलं । २ (क.) °मि तद्वा° । ३(ग. घ.) °य शा° । ४ (क.) मुख्यतः । ५ (ग. घ.) °क्तभ्रा° । ६ (ग. घ.) तत्सिद्धि° ।

सजातीयविजातीयभेदराहित्यमुदाहरति । ऐकमिति । एतस्यैव कार्यकारणसंस्पर्शशून्यत्वेन परमोत्कृष्टत्वमाचष्टे । ध्वस्तेति । समारोपितसकलविशेषविकलत्वमाह । निर्द्वैतमिति । तत्पदलक्ष्यमर्थमित्थमुपक्षिप्य त्वंपदार्थं निर्दिशति । हृदीति । हृदि पद्मो हृत्पद्मः प्रथमार्थे सप्तमीप्रयोगादलुक्समासाद्वा तस्य मध्यमेव निलयो यस्य तं बुद्धिस्थमात्मानमित्यर्थः । समष्टिबुद्धिविशिष्टं त्वंपदवाच्यमर्थमुक्त्वा तस्यैव लक्ष्यमर्थमाह । निःशेषेति । उक्तपदार्थद्वयविषयाणां पदानां मिथः सामानाधिकरण्येन सिद्धं पदार्थैक्यं वाक्यार्थभूतं शास्त्रीयं विषयं विवक्षन्नाह । वेदान्तेति । योगिनो ज्ञाननिष्ठाः संन्यासिनस्तेषां प्रत्यग्भावेन वेदान्तेषु तत्त्वमस्यादिवाक्येषु व्यवस्थितो यो बोधो ब्रह्माहमस्मीत्येवमात्मकस्तस्य विषयं परमात्मानं प्रत्यञ्चं प्रणिपत्य वार्तिकं वक्ष्यामीति योजना । अत्र चैक्ये विषये सूचिते विषयविषयिभावः संबन्धो ध्वनितः । ध्वस्तान्धकारमित्यादिना सर्वानर्थनिवृत्तिपरमानन्दप्राप्तिरूपे फले दर्शिते तत्कामोऽधिकारी सिध्यतीति द्रष्टव्यम् ॥ १ ॥

यस्येदं सकलामलेन्दुकिरणप्रख्यैर्यशोरश्मिभि-
र्व्याप्तं यश्च कृपालुतापरवशश्चक्रे हितं दुःखि-
नाम् । यद्वाणीकुलिशावरुग्णमतयः पेतुर्दिश-
स्तार्किका भक्त्या पूज्यतमं प्रणम्य तमहं त-
द्भाष्यनीतौ यते ॥ २ ॥

यस्य देवे परा भक्तिर्यथा देवे तथा गुराविति श्रुतेर्देवताभक्तिरिव गुरुभक्तिरपि विद्यायामन्तरङ्गसाधनमित्यङ्गीकृत्य विशिष्टगुणसंकीर्तनपूर्वकं गुरुविषयं प्रणामं प्रकुर्वन्नवशिष्टमुद्देश्यभागमभिदधाति । यस्येत्यादिना । तं भगवन्तं भाष्यकारं विशिष्टगुणविशिष्टं पूज्यतममस्मदाराध्यतमं भक्त्या श्रद्धया च प्रकर्षेण नत्वा तेनैव गुरुणा कृतस्य तैत्तिरीयकभाष्यस्य नीतिर्नयनं विभजनं तत्राहं यते यत्नं करोमि । दुरुक्त्यादिनिरूपणरूपं वार्तिकं संपादयामीति संबन्धः । उक्तानुक्तचिन्ता तावदिह सुघटैव दुरुक्तचिन्ताऽप्यापाततो घटते तत्राऽऽचार्यस्य निरतिशयकीर्तिमत्त्वं गुणमनुकीर्तयति । यस्येति । अशेषमपि खल्विदं विश्वं यस्य भगवतो भाष्यकारस्य यशोरूपै रश्मिभिर्व्याप्तमुपलभ्यते तानेव यशोरश्मीनशेषलोकानन्दयितृत्वेन विशिनष्टि । सकलेति । सकलस्य संपूर्णस्यामल-

१ (ग. घ. ङ. च.) एकेति । २ (ग.) °षयमाह° । ३ (ग. घ. ङ. च.) °तो बो° । ४ (ग घ. ङ च ) °भिवदाति ।

स्य मेघनीहारादिमलसंस्पर्शविकलस्येन्दोश्चन्द्रमसो ये किरणा रश्मयस्तत्प्रख्यैस्तत्तुल्यैरिति यावत् । तस्यैव भाष्यकृतो दुःखितानां संसारिणां दुःखमुपलभ्य कृपालुतया परवशस्याऽऽत्मतत्त्वज्ञानादन्यत्र तदुद्धरणमपश्यतस्तेषां हितं दुःखनिवृत्तिसाधनं प्रति प्रणेतृत्वं भाष्याद्यध्यात्मग्रन्थप्रणयनद्वारेण प्रसिद्धमित्याह । यथेति । सम्यग्दर्शनमार्गप्रतिरोधकत्वेन प्रवृत्तानां वैशेषिकवैनाशिकादीनां तार्किकाणां भाष्यकारवचनसामर्थ्यादेव निवृत्तिरिति गुणान्तरमाह । यद्वाणीति । यस्य वाणी यद्वाणी सैव कुलिशं वज्रं तेनावरुग्णा भग्रा मतिर्येषां ते तार्किका दिशः पेतुर्नष्टा इत्यर्थः । तमेवंविधं भाष्यकारं भक्त्या प्रणम्य तदीयभाष्यनीतौ यतेऽहमिति योजना ॥ २ ॥

## तैत्तिरीयकसारस्य मयाऽऽचार्यप्रसादतः ।
## विस्पष्टार्थरुचीनां हि व्याख्येयं संप्रणीयते ॥ ३ ॥

एवं परापरगुरुनमस्कारव्याजेन तैत्तिरीयोपनिषदस्तद्भाष्यस्य च वार्तिकं करोमीति श्लोकाभ्यामुक्तं तदेवं च स्वकीयग्रन्थस्य संप्रदायपूर्वकत्वं दर्शयन्प्रकटयति । तैत्तिरीयकेति । तैत्तिरीयकशाखोपनिषदस्तद्भाष्यस्य च भाष्यकारप्रसादादेवेयं व्याख्या वार्तिकाख्या संशयविपर्यासव्यतिरेकेणाबाधितन्यायवती क्रियते । ननूपनिषदर्थस्य भाष्येण भाष्यार्थस्य च तदक्षरैरेव प्रतिपत्तुं शक्यत्वात्किमनया व्याख्ययेत्याशङ्क्य विशेषेण ये स्पष्टमर्थं रोचयन्ते तेषामियं व्याख्योपयुक्तेत्याह । विस्पष्टेति । हि शब्देनास्या व्याख्याया न्यायसंदृब्धत्वेनोपनिषत्तद्भाष्यार्थप्रकटीकरणसामर्थ्यं चोत्यते ॥ ३ ॥

## दुरितक्षयहेतूनि नित्यानि ब्राह्मणे ययुः ।
## काम्यानि चेह कर्माणि दृष्टादृष्टफलानि तु ॥ ४ ॥

ननु विधिकाण्डेनैवोपनिषदो गतार्थत्वात्तत्प्रयोजनस्य कर्मवशादेव संभवादवशिष्टार्थाभावादुपनिषदस्तद्भाष्यस्य च पृथग्व्याख्यारम्भो वृथेत्याशङ्क्य नित्यानित्यादिभाष्यमाश्रित्य कर्मकाण्डार्थमनुवदति । दुरितेति । संचितस्य दुरितस्य क्षयः साध्यत्वे हेतुरनुष्ठापको येषां नित्यनैमित्तिककर्मणां तानि ब्राह्मणशब्दिते विधायके काण्डे पूर्वस्मिन् ग्रन्थे सिद्धानि न हि तानि निःश्रेयःप्रयोजनानि धर्मेण पापमपनुदतीति श्रुतेरुपार्जितदुरितनिबर्हणार्थत्वावगमात्तथा च अथातो धर्मजिज्ञासेति सूत्रकृता धर्मग्रहणेन सिद्धवस्तुविचारस्य पर्यु-

ण्यानि पूर्वकाण्डेऽपि गतार्थानि किंतु कामनानिबन्धनान्यपि चित्राकारीर्या-
दीनि दृष्टफलान्यदृष्टफलानि च दर्शपूर्णमासज्योतिष्टोमादीनि तत्रैव सिद्धानि
न च तान्यपि मोक्षार्थानि स्वर्गकामः पशुकाम इतिवन्मोक्षकामः सन्निदं कर्म
कुर्यादित्यश्रवणादतः संसारफलमेव कर्मेत्यभिमेत्याह । काम्यानिचेति ॥ ४ ॥

विद्या प्रस्तूयतेऽथोर्ध्वं यथा भूतार्थबोधिनी ।
कर्मोपादानहेतूंस्तान्सैवोच्छेत्तुमलं यतः ॥ ५ ॥

कर्मकाण्डार्थमुक्त्वा तत्राविचारितमुपनिषदर्थं वदन्पूर्वोत्तरकाण्डयोः संगति-
मिदानीमित्यादिभाष्येण दर्शयति । विद्येति । ऐहिकैर्जन्मान्तरीयैर्वा पुण्यक-
र्मभिरन्तःकरणशुद्ध्यनन्तरं तत्परिपाकतो विवेकवैराग्यसिद्धेरूर्ध्वं मुमुक्षुत्वे सत्य-
पेक्षितमोक्षसिद्ध्यर्थमुपनिषच्छब्दिता विद्या मारभ्यते। सा च यथाभूतस्य ब्रह्मा-
त्मैकत्वस्य प्रकटीभावहेतुरतो हेतुहेतुमल्लक्षणः संबन्धो द्वयोरपि काण्डयोरित्य-
र्थः। ननु कर्मणां पुरुषार्थहेतुत्वमसिद्धेर्मुमुक्षुं मत्यपि विशिष्टं कर्मैवोच्यतां किमिति
विद्या प्रस्तूयते तत्राह । कर्मेति । अन्वयव्यतिरेकाभ्यां कर्मानुष्ठाने कामादयो हे-
तवस्तानुच्छेत्तुं विद्यैव शक्नोति । तत्कारणाविद्यानिराकरणहेतुत्वादतो विद्यैव
मुमुक्षुं मत्यारब्धुं योग्येत्यर्थः ॥ ५ ॥

स यथाकाम इत्येवं योऽकामश्चेति सादरम् ।
कामाकामैकहेतू नो बन्धमोक्षौ श्रुतिर्जगौ ॥ ६ ॥

कामादीनां बन्धकारणकर्मप्रवृत्तिहेतुत्वं विवक्षित्वा कामादिनिवृत्त्या मोक्षो
भवतीत्यर्थादुक्तम् । तत्र कामादिना बन्धे तन्निवृत्त्या मोक्षे च प्रमाणमाह।स य-
थेति ॥ ६ ॥

अपविद्धद्वये तत्त्वे सर्वदैवात्मरूपके ।
विपर्ययोऽनभिज्ञानात्ततः कामैः क्रियास्ततः ॥ ७ ॥

कामादेरपि कार्यत्वेन कारणापेक्षायां तत्कारणप्रदर्शनपूर्वकं तस्य प्रवर्तकत्वे-
न बन्धहेतुत्वं प्रकटयति। अपविद्धेति। प्रत्यगात्मनोऽपरिज्ञानं मिथ्याज्ञानंकारणं
तस्मात्कामादेस्ततश्च शुभाशुभव्यामिश्रप्रवृत्तिद्वारा सुखदुःखप्राप्तिरित्यर्थः॥७॥

यदज्ञानात्प्रवृत्तिर्या तज्ज्ञानात्सा कुतो भवेत् ।
तस्मात्सर्वप्रवृत्तीनामलं विद्योपशान्तये ॥ ८ ॥

१ (च.) 'निवार'। २ (ङ.) 'माः । ३ ।

प्रतीचः स्वात्मन्यज्ञानान्मिथ्याज्ञानं तद्धेतुकामादिवशात्प्रवृत्तिरित्युक्तमयुक्तम् । विदुषोऽपि प्रवृत्तिदर्शनादित्याशङ्क्याह । यदज्ञानादिति । ज्ञानादूर्ध्वं बाधितानुवृत्तिव्यतिरेकेण ज्ञानहेतुकप्रवृत्तेरसंभवे फलितमाह । तस्मादिति ॥ ८ ॥

मोक्षार्थी न प्रवर्तेत तत्र काम्यनिषिद्धयोः ।
नित्यनैमित्तिके कुर्यात्प्रत्यवायजिहासया ॥ ९ ॥

ज्ञानान्मुक्तिरित्युक्ते सत्यैकभविकन्यायेन मीमांसकस्य शङ्कां काम्यप्रतिषिद्धयोरित्यादिभाष्योक्तामुद्भावयति । मोक्षार्थीति ॥ ९ ॥

इति मीमांसकंमन्यैः कर्मोक्तं मोक्षसाधनम् ।
प्रत्याख्यायाऽऽत्मविज्ञानं तत्र न्यायेन निर्णयः ॥१०॥

आरब्धफलं तु कर्मभोगादेव क्षयं गच्छतीत्यङ्गीकृत्य यथावर्णितचरितस्य ज्ञानव्यतिरेकेण मोक्षो भवतीति शरीरान्तरोत्पादे हेत्वभावादिति फलितमाह । इति मीमांसकंमन्यैरिति । युक्तिपर्यालोचनायां नायं पक्षः संभवतीति दूषयति । तत्रेति ॥ १० ॥

नैतदेवं भवेन्न्याय्यं विरुद्धफलदायिनाम् ।
संभवात्कर्मणां पुंसो भूयसां शास्त्रदर्शनात् ॥११॥

तदेव न कर्मानेकत्वादित्यादिभाष्यावष्टम्भेन स्पष्टयति । नैतदिति । यद्यपि मुमुक्षुर्वर्तमाने देहे काम्यं निषिद्धं वा बुद्धिपूर्वं नारभते तथापि संचितस्यानेकस्य कर्मणः संभवादागामिनि देहे हेत्वभावस्यासिद्धिरित्यर्थः । साधारणेन मायणेनाभिव्यक्तानि सर्वाण्येव कर्माणि संभूयैकं शरीरं कुर्वन्ति । तत्र सर्वकर्मणामुपभोगेन क्षीणत्वान्नास्ति संचितं कर्मेत्येतन्निराकर्तुं विरुद्धफलदायिनामित्युक्तम् । स्वर्गनरकफलानां ज्योतिष्टोमब्रह्महत्यादीनामेकस्मिन्देहे भोगासंभवात्प्रमाणासंभवात्मायणस्य सर्वकर्माभिव्यंजकत्वे च मानाभावाद्बलवता प्रतिबद्धस्य दुर्बलस्यावस्थानं सिध्यतीत्यर्थः । मायणाभिव्यक्तेन बलवता कर्मणा प्रथममारम्भकेण प्रतिबद्धं दुर्बलं कर्मानारम्भकत्वमवशिष्टमित्यत्र प्रमाणमाह । शास्त्रदर्शनादिति ॥ ११ ॥

अनारब्धफलानीह सन्ति कर्माणि कोटिशः ।
तद्य इहेतिवचसो गम्यतां कर्मणां स्थितिः ॥१२॥

---

१ (ग. घ.) °जिघास° २ (ग. घ. च.) °कक° । ३ (घ.) देहहेत्व° । ४ (ङ.) °वात्मा° । ५ (ग.) °भत्ररूपप्रमाणम° । ६ (ग घ.) °तिषिद्ध° । ७ (च.) °म्मकरणेन निब° ।

ण्यानि पूर्वकाण्डेऽपि गतार्थानि किंतु कामनानिबन्धनान्यपि चित्राकारीर्यादीनि दृष्टफलान्यदृष्टफलानि च दर्शपूर्णमासज्योतिष्टोमादीनि तत्रैव सिद्धानि न च तान्यपि मोक्षार्थानि स्वर्गकामः पशुकाम इतिवन्मोक्षकामः सन्निदं कर्म कुर्यादित्यश्रवणादतः संसारफलमेव कर्मेत्यभिमेत्याह । काम्यानिचेति ॥ ४ ॥

**विद्या प्रस्तूयतेऽथोर्ध्वं यथा भूतार्थबोधिनी ।**
**कर्मोपादानहेतूंस्तान्सैवोच्छेत्तुमलं यतः ॥ ५ ॥**

कर्मकाण्डार्थमुक्त्वा तत्राविचारितमुपनिषदर्थं वदन्पूर्वोत्तरकाण्डयोः संगतिमिदानीमित्यादिभाष्येण दर्शयति । विद्येति । ऐहिकैर्जन्मान्तरीयैर्वा पुण्यकर्मभिरन्तःकरणशुद्ध्यनन्तरं तत्परिपाकतो विवेकवैराग्यसिद्धेरूर्ध्वं मुमुक्षुत्वे सत्यपेक्षितमोक्षसिद्ध्यर्थमुपनिषच्छब्दिता विद्या प्रारभ्यते। सा च यथाभूतस्य ब्रह्मात्मैकत्वस्य प्रकटीभावहेतुरतो हेतुहेतुमल्लक्षणः संबन्धो द्वयोरपि काण्डयोरित्यर्थः। ननु कर्मणां पुरुषार्थहेतुत्वप्रसिद्धेर्मुमुक्षुं प्रत्यपि विशिष्टं कर्मैवोच्यतां किमिति विद्या प्रस्तूयते तत्राह । कर्मेति। अन्वयव्यतिरेकाभ्यां कर्मानुष्ठाने कामादयो हेतवस्तानुच्छेत्तुं विद्यैव शक्नोति । तत्कारणाविद्यानिराकरणहेतुत्वादतो विद्यैव मुमुक्षुं प्रत्यारब्धुं योग्येत्यर्थः ॥ ५ ॥

**स यथाकाम इत्येवं योऽकामश्चेति सादरम् ।**
**कामाकामैकहेतू नो बन्धमोक्षौ श्रुतिर्जगौ ॥ ६ ॥**

कामादीनां बन्धकारणकर्मप्रवृत्तिहेतुत्वं विवक्षित्वा कामादिनिवृत्त्या मोक्षो भवतीत्यर्थादुक्तम्। तत्र कामादिना बन्धे तन्निवृत्त्या मोक्षे च प्रमाणमाह।स यथेति ॥ ६ ॥

**अपविद्धद्वये तत्त्वे सर्वदैवात्मरूपके ।**
**विपर्ययोऽनभिज्ञानात्ततः कामैः क्रियास्ततः ॥ ७ ॥**

कामादेरपि कार्यत्वेन कारणापेक्षायां तत्कारणप्रदर्शनपूर्वकं तस्य प्रवर्तकत्वेन बन्धहेतुत्वं प्रकटयति। अपविद्धेति। प्रत्यगात्मनोऽपरिज्ञानं मिथ्याज्ञानकारणं तस्मात्कामादेस्ततश्च शुभाशुभव्यामिश्रप्रवृत्तिद्वारा सुखदुःखप्राप्तिरित्यर्थः॥७॥

**यदज्ञानात्प्रवृत्तिर्या तज्ज्ञानात्सा कुतो भवेत् ।**
**तस्मात्सर्वप्रवृत्तीनामलं विद्योपशान्तये ॥ ८ ॥**

---

१ (च.) °निवार°। २ (ङ.) °माः । ३ (च.) °नकर°।

कर्मणो न ततो निवृत्तिरविरोधादिति वदन्पदिनामेत्यादिभाष्यं व्याचष्टे । पापस्येति ॥ १६ ॥

कामश्च कर्मणो हेतुस्तस्योच्छित्तेर्न संभवः ।
प्रत्यग्बोधमृते यस्मादसम्यगिदमुच्यते ॥१७॥

यत्तु काम्यानि कर्माणि वर्जयेन्मुमुक्षुरिति तदिदानीं न च कर्महेतूनामित्यादिभाष्येण दूषयति । कामश्चेति । यस्मात्कामस्य कर्महेतोरज्ञानकार्यत्वात्तत्त्वज्ञानमन्तरेण निवृत्तेरसंभवस्तस्माद्यथावर्णितचरितस्य ज्ञानमन्तरेण मुक्तिरित्ययुक्तमतो ज्ञानादेव मोक्षो न कर्मणेत्यर्थः ॥ १७ ॥

यद्वचनारम्भफलं तस्मै कर्म सर्वं विधीयते ।
आप्तत्वादात्मनः कर्म नैव स्यादाप्तये ततः ॥१८॥

किंच मोक्षस्य कर्मसाध्यत्वे न तावदुत्पाद्यत्वं नित्यत्वान्नापि संस्कार्यत्वं निर्गुणत्वान्निर्दोषत्वाच्च न च विकार्यत्वं कूटस्थत्वादाप्यत्वमपि नोपपद्यते तस्मादात्मत्वेन नित्याप्तत्वादतो मोक्षे कर्म निरर्थकमित्याह । यद्धीति । आत्मव्यतिरिक्तं फलं स्वर्गपशुपुत्रादि ॥ १८ ॥

नित्यानां चाक्रियाऽभावः प्रत्यवायस्ततः कुतः ।
न ह्यभावाद्भवेद्भावो मानं यस्मान्न विद्यते ॥१९॥

यदुक्तमकरणनिमित्तप्रत्यवायपरिहारार्थानि नित्यानि कर्माणीति तत्र नित्यानां चेत्यादिभाष्येणोत्तरमाह । नित्यानां चेति । आगामिदुःखं प्रत्यवायस्तस्य स्वरूपस्य नाभावो निमित्तं निषिद्धाचरणनिमित्तत्वाद्दुःखस्येत्यर्थः । अभावाद्भावोत्पत्त्यसंभवं मानाभावेन साधयति । नहीति ॥ १९ ॥

पूर्वोपचितकर्मभ्यस्तस्मात्कर्तारमेति या ।
प्रत्यवायक्रिया तस्या लक्षणार्थः शता भवेत् ॥२०॥

अकुर्वन्विहितं कर्म निन्दितं च समाचरन् । प्रसज्जंश्चेन्द्रियार्थेषु नरः पतनमृच्छतीतिशतृप्रत्ययादकरणस्यापि प्रत्यवायनिमित्तत्वं प्रमितमित्याशङ्क्याह । पूर्वेति । तस्मादित्यसतः सदुत्पत्त्यसंभवादित्यर्थः ॥ २० ॥

---

१ (ग. घ. ङ) °र्महेतुर्नेत्त° । २ (ग. घ.) °ये स्वतः । ३ (ग. घ.) माप्योत्त° ४ (क.) तस्माल्लक्ष° ।

नित्यानामक्रिया यस्माल्लक्षयित्वैवं सत्वरा ।
प्रत्यवायक्रियां तस्माल्लक्षणार्थे शता भवेत् ॥ २१ ॥

उक्तमेवार्थमतः पूर्वोपचितेत्यादिभाष्यावष्टम्भेन स्पष्टयति । नित्यानामिति । यदि यथावन्नित्यनैमित्तिकानुष्ठानं स्यात्तदा संचितदुरितक्षयोऽपि भवेन्न चाष विहितमकार्षीत्ततः प्रत्यवायी भविष्यतीति शिष्टैर्लक्ष्यते तेन शतृप्रत्ययस्यान्यथापि सिद्धत्वान्न तद्बलादकरणस्य प्रत्यवायहेतुत्वसिद्धिरित्यर्थः ॥ २१ ॥

सर्वप्रमाणकोपयस्मादभावाद्भावसंभवे ।
तस्मादयत्नतः स्थानमात्मनीत्यतिपेलवम् ॥२२॥

ननु लक्षणहेत्वोः क्रियाया इति शतृप्रत्ययस्योभयत्र विधाने सति किमिति हेतुत्वमेव न गृह्यते तत्रान्यथेत्यादिभाष्यं व्याचष्टे सर्वेति । सर्वस्य भावरूपस्य कार्यस्य भावरूपं कारणमिति प्रत्यक्षादिभिरवधारितं शतृप्रत्ययादभावस्य हेतुत्वाभिधाने सर्वमार्णविरोधः स्यादित्यर्थः । अस्मत्पक्षे त्वकरणज्ञानस्य प्रत्यवायज्ञापकत्वं न च ते ज्ञातादकरणात्प्रत्यवायोत्पत्तिः । केवलात्प्रत्यवायाभावप्रसङ्गाद्योग्यानुपलब्धिरपि ज्ञातैवाभावप्रमितिहेतुः । प्रतिबन्धकाभावस्य तु कारणत्वमन्योन्याश्रयत्वादप्रामाणिकमित्यभिप्रेत्य यस्मादकरणनिमित्तप्रत्यवायपरिहारार्थं न नित्यं कर्म किंतु श्रुतिप्रामाण्यात्पितृलोकादिप्राप्तिफलं तस्मान्न यथोक्तचरितस्य मुक्तिरित्युपसंहरति तस्मादिति ॥ २२॥

निर्धूताऽतिशयाप्रीतिः कर्महेतुरिति त्वया ।
यदभाणि तदन्याय्यं यथा तदभिधीयते ॥२३॥

स्वर्गकामवाक्ये स्वर्गशब्देन निरतिशयप्रीतेर्मुक्तेरुक्तत्वात्तद्धेतुत्वेन कर्मविधानात्कर्मसाध्यैव मुक्तिरिति द्वितीयं पूर्वपक्षं भाष्योक्तमनुभाष्य दूषयति । निर्धूतेति ॥ २३ ॥

मुक्तेः कौटस्थ्यरूपत्वान्न तस्याः कर्मसाधनम् ।
स्वर्गादिवदनित्या स्याद्यदि स्यात्कर्मणः फलम् ॥२४॥

मोक्षस्य कर्मकार्यत्वानुपपत्तिं नहीत्यादिभाष्येण साधयति । मुक्तेरिति ।

१ ( ग घ. ) °त्यानां चाक्रि° । २ ( ङ. ) °त्वैति स° । ३ ( ग घ. ङ. ) °त्यानां चेति । ४ ( ग. घ. ) °क्षेऽक° । ५ ( ग. घ. ) ° [illegible] °प्रत्यन्मवेज्ञा° ।

आत्मत्वेन मोक्षस्य कूटस्थनित्यत्वान्न कर्मसाध्यतेत्युक्त्वा विपक्षे दोषमाह । स्वर्गादिवदिति ॥ २४ ॥

## अनित्यफलदायित्वं ज्ञानहीनस्य कर्मणः ।
## कूटस्थफलदायित्वं विद्येतस्येतिचेन्मतम् ॥२५॥

विद्यासहितानामित्यादिभाष्येण कर्मसाध्यत्वेऽपि मोक्षस्य नानित्यत्वमिति समुच्चयवाद्याह । अनित्येति ॥ २५ ॥

## नैवमारभ्यमाणस्य ह्यनित्यत्वसमन्वयात् ।
## न च प्राप्तमनित्यत्वं विद्या वारयितुं क्षमा ॥२६॥

विद्यासहितेनापि कर्मणा मोक्षश्चेदारभ्यते तर्हि यत्कृतकं तदनित्यमितिन्यायान्मोक्षानित्यत्वं दुर्निवारमिति न विरोधादित्यादिना निरस्यति । नैवमिति । सहायीभूतविद्यासामर्थ्यादनित्यत्वं वारयति । अकारकत्वात् । उपासना तु स्वफलानित्यत्वमपि वारयितुमशक्ता कथं कर्मफलानित्यत्वं वारयतीत्यर्थः ॥ २६ ॥

## प्रध्वंसाभाववच्चेत्स्यात्कर्मकार्यमपि ध्रुवम् ।
## भावात्मकत्वान्मोक्षस्य नैव मेऽप्युपपद्यते ॥२७॥

कर्मकार्यत्वे मोक्षस्यानित्यत्वं यत्कृतकं तदनित्यमितिव्याप्तिदर्शनादित्यत्र व्याप्तिभङ्गं शङ्कते । प्रध्वंसेति । यद्भावरूपं कार्यं तदनित्यमितिव्याप्तेस्तव मोक्षस्य निरतिशयप्रीतेर्भावरूपत्वादारभ्यत्वे स्यादेवानित्यत्वमिति दूषयति । भावेति ॥ २७ ॥

## कार्यं प्रध्वंसतोन्यद्यत्तदनित्यं क्रियोत्थितेः ।
## घटादिवत्प्रतिज्ञायां विशिष्टत्वाददोषता ॥ २८ ॥

यद्भावत्वे सति यत्कृतकं तदनित्यमित्येतदेव साधयति । कार्यमिति । अनित्यमिति प्रतिज्ञायां कार्यत्वहेतोर्भावत्वेन विशिष्टत्वात्प्रतिज्ञाहेत्वोर्व्याप्तिभङ्गदोषवत्ता नास्तीति फलितमाह । प्रतिज्ञायामिति ॥ २८ ॥

---

१ (ग. घ.) °लकारित्वं° । २ (ग. घ.) °ति नावि° । ३ (घ. ङ.) °मप्युप° । ४ (ग. घ. च.) °वत्वा° । ५ (ङ. च.) °त्वमपीति । ६ (ग. घ.) °वत्वं ना° ।

प्रध्वंसाच्छकलादि स्यातत्त्वानित्यं घटादिवत् ।
कल्पनामात्रतोऽभावो नैवारभ्यः स कर्मभिः ॥२९॥

प्रध्वंसस्य कार्यत्वेऽपि नित्यत्वमभ्युपगम्योक्तं तदेवासिद्धमित्याह । प्रध्वंसादिति । नाशक्रियातः शकलादिकार्यं जायते तच्च घटादिवदनित्यमतो न भवदभिप्रेतो ध्वंसस्तत्कार्यत्वं वास्तीत्यर्थः । कस्तर्हि भवन्मते प्रध्वंसाभावस्तत्राह । कल्पनेति । प्रध्वंसस्यास्मन्मते शशविषाणवद्विकल्पमात्रत्वान्नित्यत्वानित्यत्वयोरभावान्नासौ व्यभिचारभूरित्यर्थः ॥ २९ ॥

आविर्भावतिरोभावैर्धर्मिण्यां मृदि सर्वदा ।
धर्मा घटादयः सर्वे वर्तन्ते न त्वभावगाः ॥ ३० ॥

प्रध्वंसस्य शशविषाणकल्पत्वे घटादीनां सदा मृदादिषु विद्यमानत्वात्कपालाद्युत्पत्तावनुपलब्धिर्न सिद्ध्येदित्याशङ्क्याह । आविर्भावेति । विद्यमानमपि घटादिकार्यं विरोधिकार्यनिरुद्धत्वान्नोपलभ्यते कदाचिदित्यर्थः ॥ ३० ॥

नास्त्यभावस्य संबन्धः क्रियया वा गुणेन वा ।
निरात्मकत्वान्नैवालं संबद्धुं केन चित्क्वचित् ॥३१॥

प्रध्वंसाभावस्य गुणो नित्यत्वं प्रागभावस्य चानित्यत्वं नाशक्रियावत्त्वमितरस्य चोत्पत्तिक्रियावत्त्वमिति परस्य मतं तदपि न युक्तमित्याह । नास्तीति । तदेव स्फुटयति । निरात्मकत्वादिति ॥ ३१ ॥

तस्मात्स्यात्कल्पनामात्रो व्यवहारप्रसिद्धये ।
प्रध्वंसादिरभावोऽयं शिलापुत्रादिवन्मृषा ॥ ३२ ॥

प्रध्वंसादावभावे निरात्मके धर्मधर्मिभावस्य दुर्भणत्वात्कल्पनामात्रत्वमेवेत्युपसंहरति । तस्मादिति । चतुर्विधाभावव्यवहारसिद्ध्यर्थमविद्याकल्पितोऽभावो न वास्तवोऽस्तीत्यर्थं ॥ ३२ ॥

तस्मादविद्याव्युच्छित्तौ स्यादवस्थानमात्मनि ।
नचाविद्याप्रहाणं स्याद्ब्रह्मविद्यामृते क्वचित् ॥३३॥

काम्यप्रतिषिद्धवर्जनाद्युपायादात्मन्यवस्थानलक्षणस्य मोक्षस्य दुर्वचनत्वादविद्यातत्कार्यनिवृत्तौ तथाविधकैवल्यं ज्ञानादेवेत्युपसंहरति । तस्मादिति ॥३३॥

---

१ (ग) °त्कार्यं वा°। २ (ग घ) °षाणादिव°। ३ (क) °रइत्य°। (ग घ) °द्याविच्छि°(ङ) °द्याद्युच्छि°; ५ (ग घ) °न्यप्यव°।

तस्माद्विद्याऽऽश्रये ज्ञेया प्रारब्धोपनिषत्परा ।
सैवाविद्यापनुत्त्यर्था विद्या चैवात्मगामिनी ॥ ३४ ॥

यतो ब्रह्मात्मैकत्वज्ञानादेव संसारकारणात्माविद्यानिवृत्तिस्तस्मादात्मज्ञानार्थत्वेनोपनिषदारम्भः संभवतीत्यारम्भमुपसंहरति । तस्माद्विद्येति । तामेव विद्यां विशिनष्टि । सैवेति ॥ ३४ ॥

विद्यासंशीलिनां यस्माद्गर्भजन्माद्यशेषतः ।
उपमृद्नाति विद्येयं तस्मादुपनिषद्भवेत् ॥३५॥

ब्रह्मविद्यायामुपनिषच्छब्दप्रसिद्धिरपि विद्याया एव निःश्रेयससाधनत्वे प्रमाणमित्यभिप्रेत्योपनिषदिति विद्येत्यादिभाष्यं व्याचष्टे । विद्येति । सकारणसंसारस्य शिथिलीकरणादत्यन्तविनाशहेतुत्वाद्वा ब्रह्मविद्योपनिषच्छब्दवाच्येत्यर्थः॥३५॥

उपेत्य वा निषण्णं तच्छ्रेय आत्यन्तिकं यतः ।
तस्मादुपनिषज्ज्ञेया ग्रन्थस्तु स्यात्तदर्थतः ॥३६॥

आत्यन्तिकं श्रेयो ब्रह्म तद्विद्यानिमित्तमात्मनि निषण्णमात्मानं गमयत्यनया वा विद्यया ब्रह्मविद्योपनिषच्छब्दवाच्येत्याह । उपेत्येति । ब्रह्मविद्या चेदित्थमुपनिषच्छब्देनोच्यते कथं तर्हि ग्रन्थे तच्छब्दं प्रयुञ्जते तत्राह । ग्रन्थस्त्विति ॥३६॥

प्राणवृत्तेस्तथा चाह्नो देवता याभिमानिनी ।
मित्रः शन्नः सुखं भूयादिति ब्रह्मेह याच्यते ॥३७॥

एवमुपनिषदस्तद्भाष्यस्य च व्याख्येयत्वं प्रतिपाद्य प्रतिपदं व्याख्यामारभते । प्राणवृत्तेरिति । शन्नो मित्र इत्यत्र मित्रशब्देन प्राणवृत्तेरह्नश्चाभिमानी देवतात्मोच्यते स च नोऽस्माकं सुखकृद्भवत्विति सूत्रात्मकं ब्रह्म मुमुक्षुणा प्रार्थ्यते सप्तम्या वाक्यं गृह्यते ॥ ३७ ॥

रात्रेरपानवृत्तेश्च वरुणश्चाभिमानभाक् ।
शन्नो भवतु सर्वत्र चक्षुस्थश्चार्यमा रविः ॥ ३८ ॥

शं वरुण इत्यत्रापि वरुणशब्देनापानवृत्ते रात्रेश्चाभिमानभागी देवतात्मा कथ्यते । स चास्माकं सुखकृद्भवत्विति पूर्ववदेव सूत्रात्मकब्रह्मप्रार्थनामभिप्रेत्याह । रात्रेरिति । एवमुत्तरत्रापि ब्रह्मैव प्रार्थनाविषयभूतमित्याह । सर्वत्रेति । शन्नो भवत्वर्यमेत्यत्रार्यमा चक्षुरभिमानी रविरादित्य इत्याह । चक्षुस्थश्चेति ॥ ३८ ॥

---

१ ( ग. घ. ) °द्या चैवा° । २ ( ग. घ. ) °मित्युपप्रे° । ३ ( क. च. ) °दि ति° । ( ङ. च. ) °कं परं ब्र° । ५ ( ङ. ) °र्थ्यत इहेति स° । ६ ( ग. घ. ) °पर्याभू° ।

बले तु भगवानिन्द्रो वाचि बुद्धौ बृहस्पतिः ।
विष्णुश्चोरुक्रमः शन्नो विस्तीर्णक्रमणो ह्यसौ ॥ ३९ ॥

शंन इन्द्रो बृहस्पतिरित्यत्र बलाभिमानी देवतात्मेन्द्रो बृहस्पतिर्वागभिमानी बुद्धयभिमानी चेत्याह । बल इति । शन्नो विष्णुरित्यत्र विष्णुर्नाम पादाभिमानी देवतात्मा स चास्माकं सुखकृदस्तु तदाह । विष्णुश्चेति । तस्योरुक्रमत्वं स्फोरयति । विस्तीर्णेति ॥ ३९ ॥

अध्यात्मदेवताः सर्वा मित्राद्याः शं भवन्तु नः ।
सुखकृत्सु हितासु स्याद्विघ्नोपशमनं ध्रुवम् ॥ ४० ॥

व्याख्यातानां वाक्यानां संपिण्डितमर्थमाह । अध्यात्मेति । किमिति यथोक्ता देवताः प्रार्थ्यन्ते ब्रह्म जिज्ञासुभिरित्याशङ्क्य तासु हीत्यादिभाष्यार्थमाह । सुखकृत्स्विति ॥ ४० ॥

श्रवणं धारणं चैवमुपयोगश्च सिध्यति ।
ज्ञानस्याप्रतिबन्धेन प्रार्थनीयमतो भवेत् ॥ ४१ ॥

तासु देवतासु सुखकृत्सु सतीषु वेदान्तश्रवणार्थं मुमुक्षूणामविघ्नेन गुरुपादोपसर्पणं सिध्यति ततश्च वेदान्तानां तात्पर्यावधारणं श्रवणं श्रुतस्याविस्मरणं धारणमुपयोगः शिष्येभ्यो निवेदनम् ॥ ४१ ॥

ब्रह्मविद्योपसर्गाणां शान्त्यर्थं वायुरूपिणे ।
ब्रह्मजिज्ञासुना कार्ये नमस्कारोक्तिकर्मणी ॥ ४२ ॥

नमो ब्रह्मण इत्यादिवाक्यस्य तात्पर्यमाह । ब्रह्मविद्येति ॥ ४२ ॥

सर्वक्रियाफलानां हि ब्रह्माधीनत्वहेतुतः ।
वायवे ब्रह्मणे तस्मै प्रह्वीभावोऽस्तु सर्वदा ॥ ४३ ॥

किमिति वायुरूपिणे ब्रह्मणे नमस्कारवन्दनक्रिये क्रियेते अन्यस्मै कस्मैचिद्देवतात्मने विघ्नोपशमनार्थे ते किं न स्यातामित्याशङ्क्य सर्वक्रियाफलानामित्यादिभाष्यार्थमाह । सर्वेति । कर्मफलस्य सर्वस्य सूत्रब्रह्माधीनत्वात्तस्यैव नमस्कारवन्दनक्रिये नान्यस्येत्यर्थः ॥ ४३ ॥

---

१ (क) ॰स्तीर्णाक्र॰ । २ (च) ॰न्दने क्रियेते ।

पारोक्ष्येण नमस्कृत्य प्रत्यक्षेण नमस्क्रिया ।
परोक्षसाक्षाद्रूपाभ्यां वायुरेवाभिधीयते ॥ ४४ ॥

नमो ब्रह्मण इत्येतावतैव वायुरूपिणे ब्रह्मणे नमस्कारस्य सिद्धत्वादुत्तरवाक्यमकिंचित्करमित्याशङ्क्याह । पारोक्ष्येणेति । स ब्रह्मेत्याचक्षत इतिश्रुतेः । ब्रह्मणः सूत्रस्यादौ पारोक्ष्येण नमस्कारः कृतस्तस्यैव वायुशब्देन प्रत्यक्षतया निर्देशः । प्राणस्य प्रत्यक्षत्वादतो न पौनरुक्त्यमित्यर्थः । साक्षात्त्वासाक्षात्त्वाभ्यां वायुब्रह्मणोर्भेदमाशङ्क्याह । परोक्षेति ॥ ४४ ॥

प्रत्यक्षं ब्रह्म हे वायो त्वमेवासीति संस्तुतिः ।
त्वामेवातो वदिष्यामि साक्षात्त्वमुपलभ्यसे ॥ ४५ ॥

त्वमेव प्रत्यक्षं ब्रह्मासीत्यस्य तात्पर्यमाह । प्रत्यक्षमिति । हे वायो तव सूत्ररूपेण पारोक्ष्येऽपि प्राणरूपेणापरोक्षमस्ति चक्षुरादि हि रूपदर्शनाद्यनुमेयत्वाद्व्यवहितं साक्षिवेद्यं प्राणस्त्वव्यवधानेन साक्षिवेद्यः सन्निहितश्च भोक्तुरिति प्रत्यक्षो विवक्ष्यते प्राणेकृतेनाशनादिना शरीरादेर्बृंहणप्रसिद्धेर्ब्रह्मत्वं च तवातिव्यक्तमतस्त्वमेव प्रत्यक्षं ब्रह्मासीति वायुदेवतास्तुतिरत्र विवक्षितेत्यर्थः । त्वामेव प्रत्यक्षं ब्रह्म वदिष्यामीत्यस्य तात्पर्यमाह । त्वामेवेति । यथा कश्चन राजदर्शनार्थी राज्ञो दौवारिकं कंचिदुपलभ्य त्वमेव राजेति ब्रूते तथा हार्दस्य ब्रह्मणो द्वारपालं प्राणं प्रतीत्य हार्दं ब्रह्म दिदृक्षुर्मुमुक्षुरभिवदति त्वामेव प्रत्यक्षं ब्रह्म वदिष्यामीति यतस्त्वं साक्षिणा साक्षादुपलभ्यसे तस्मात्त्वामेवाहं ब्रह्म वदिष्यामीति ब्रह्मवदनक्रिया प्राणदेवताया स्तुतिरेवेत्यर्थः ॥ ४५ ॥

यथाशास्त्रं यथाकार्यं बुद्धौ सुपरिनिश्चितम् ।
ऋतं त्वदधीनत्वाद्वदिष्यामीति संगतिः ॥ ४६ ॥

ऋतं वदिष्यामीत्यस्य तात्पर्यार्थमाह । यथाशास्त्रमिति । अग्निहोत्रादिलक्षणं कार्यं कर्तव्यं कर्मानतिक्रम्य तदेव शास्त्रानुरोधेन बुद्धौ सुपरिनिश्चितमनुष्ठेयत्वेन निर्धारितमृतमित्युच्यते तच्च तदधीनत्वात्तदात्मकत्वाच्च त्वामेव वदिष्यामीति देवतास्तुतिरेवेत्यर्थः ॥ ४६ ॥

प्रयोगस्थं तदेवर्तं सत्यमित्यभिधीयते ।
तदपि त्वदधीनत्वाद्वदिष्याम्येव सांप्रतम् ॥ ४७ ॥

स्तुत्यन्तरमाह । प्रयोगस्थमिति । ऋतमेवानुष्ठीयमानं सत्यमुच्यते तदपि त्वदात्मकत्वात्त्वामेव वदिष्यामीति वाक्ययोस्तुल्यार्थयोरपुनरुक्ततेत्यर्थः ॥ ४७ ॥

---

१ (ग.घ.) °स्कृत्वा प्र° । २ (ङ.) °णवृत्तेना° (च.) °णकृताश° । ३ (ङ.) °व मे रा° । ४ (क.ख.) °क्रियया । ५ (ग.घ.ङ.च.) °त्यस्यार्थे° । ६ (ग.घ.च.) °त्वात्त्वामे° ।

विद्यार्थिना स्तुतं सन्मां ब्रह्मावतु गुरुं च मे ।
विद्याग्रहणवक्तृत्वशक्तिभ्यां नौ सदाऽवतु ॥ ४८ ॥

तन्मामवत्वित्यादिवाक्यस्यार्थमाह । विद्यार्थिनेति । उक्तप्रकारेण मया स्तुतं सद्ब्रह्म मा माऽऽचार्यं चावतु रक्षत्विति प्रार्थनायां केन रूपेण रक्षेत्विति विवक्षायामाह । विद्याग्रहणेति । श्रुत्यादिद्वारेणाऽऽचार्योपदिष्टस्य तत्त्वस्य ग्रहणे सामर्थ्यं यथा मम श्रोतुर्न विहन्यते यथाऽऽचार्यस्य वक्तृत्वसामर्थ्यममतिहतं भवति तथा शिष्याचार्ययोः शरीरद्वयं तथा रक्षणीयमित्यर्थः ॥ ४८ ॥

विद्याप्राप्त्युपसर्गाणां त्रिः शान्तिरभिधीयते ।
आचार्यशिष्ययोस्तस्यां ब्रह्म ज्ञातुं हि शक्यते ॥४९॥

आचार्यस्य विद्योपदेशार्थं विद्याग्रहणार्थं च शिष्यस्य प्रवृत्तस्याध्यात्मिको-ज्वरादिनिमित्तः सह चक्षुःश्रोत्रादिनिमित्तश्चाधिभौतिको' व्याघ्रचोरादिभयनिमित्तो वर्षगर्जनादिप्रयुक्तश्चाधिदैविको विघ्नः संभाव्यते तस्य त्रिविधस्योपसर्गस्य विघ्नस्य परिहारार्थं त्रिः शान्तिरुच्यते तस्यां विघ्नोपशान्तौ सत्यामेव ज्ञानोपदेशतद्ग्रहणसंभवादितिपुनरुक्तिशङ्कां वारयति । विद्येति ॥ ४९ ॥

अर्थज्ञानप्रधानत्वाद्वेदान्तानां विपश्चिताम् ।
पाठे त्वयत्नो मा प्रापदिति शिक्षाऽभिधीयते ॥५०॥

प्रथमं शिक्षाध्यायारम्भे हेतुमाह । अर्थज्ञानेति । वेदान्तानां ब्रह्मात्मपरत्वात्कर्मकाण्डस्य च कर्मपरत्वाद्बुद्धिपूर्वकारिणामध्ययने स्वरोष्मव्यञ्जनेष्वनास्थासंभवाद्विवक्षितार्थासिद्धिः स्यादित्याशङ्क्य तन्निवृत्त्यर्थमेतदध्यायप्रवृत्तिरित्यर्थः ॥ ५० ॥

शिक्ष्यते ज्ञायते साक्षाद्वर्णाद्युच्चारणं यया । स्याद्वा
कर्मणि शिक्षेति व्याख्यास्यामोऽधुना तु ताम् ॥५१॥

शिक्षाशब्दस्य द्विधा व्युत्पत्तिं संभावनया दर्शयति । शिक्ष्यत इति । लक्षणशास्त्रस्यान्यत्रैव सिद्धत्वादिह कर्मव्युत्पत्तिरेव ग्राह्येत्यङ्गीकृत्य वाक्यार्थमाह । स्याद्वेति ॥ ५१ ॥

---

१ ( क. ) °वाक्यार्थं° । २ ( क. ख. ङ. ) °क्षत्विति° । ३ ( घ. ङ. ) °को व । ४ ( ग. घ. ङ. च. ) °ङ्का परिहरति वि° । ५ ( ग. घ. च ) °स्य क° ।

अकारादिर्भवेद्वर्ण उदात्तादिः स्वरस्तथा ।
ह्रस्वदीर्घप्लुता मात्रा प्रयत्नश्च बलं स्मृतम् ॥५२॥
समता सामवर्णानां वैषम्यस्य विवर्जनम् ।
सन्तानः संहिता तु स्यादितिशिक्षोपदिश्यते ॥५३॥

शिक्षितव्यानेव विभज्य दर्शयन्वर्ण स्वर इत्यादि व्याकरोति । अकारादिरितिद्वाभ्याम् । वर्णादीनामेकस्यापि वैगुण्ये फलपर्यन्तं ज्ञानं न सिध्यति मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्या प्रयुक्तो न तमर्थमाहेतिदर्शनादतो वर्णादयः सर्वे शिक्षितव्या भवन्तीत्यर्थः ॥ ५२ ॥ ५३ ॥ इति प्रथमोऽनुवाकः ॥ १ ॥

सूक्ष्मार्थानुप्रवेशाय बहिः प्रवणचेतसाम् ।
संहिताविषयं तावत्स्थूलोपासनमुच्यते ॥ ५४ ॥

अधुनेत्यादिभाष्यार्थमाह । सूक्ष्मार्थेति । अध्येतारो हि बहिरेव ग्रन्थप्रवृत्तचित्तास्तेषामर्थज्ञाने सूक्ष्मे बुद्धिप्रवेशसिद्ध्यर्थं संहितावर्णानां संनिकर्षस्तद्विषयमुपासनं स्थूलशब्दसंस्पृष्टमादावुच्यते संनिधानाचात्र स्वशाखासंहितैव ग्राह्येत्यर्थः ॥ ५४ ॥

संहितादिनिमित्तं यद्यशस्तन्नौ सहास्त्विति ।
आचार्यशिष्ययोस्तद्वद्ब्रह्मवर्चसमावयोः ॥ ५५ ॥

समस्तोपनिषच्छेषः शं नो मित्र इत्यादिराशीर्वादः संवृत्तः। संप्रति संहितोपनिषच्छेषमाशीर्वादान्तरं सह नौ यशः सह नौ ब्रह्मवर्चसमिति वाक्याभ्यामुच्यते तद्व्याचष्टे । संहितादीति ॥ ५५ ॥

यशः ख्यातिः प्रकाशः स्याद्वृत्तस्वाध्यायहेतुजम् ।
ब्रह्मवर्चसमित्याहुस्तेजो यत्तन्निबन्धनम् ॥ ५६ ॥

यशोब्रह्मवर्चसशब्दयोरर्थभेदं कथयति । यश इति । श्रुतिस्मृत्युक्तकारित्वं वृत्तं स्वाध्यायश्च नियमाध्ययनं ताभ्यां जातं यशः तच ख्यातिः प्रकाशश्चेति व्यवह्रियते । ताभ्यामेव हेतुभ्यां जातं त्वग्व्याप्तं तेजो ब्रह्मवर्चसमिति व्यवहरन्तीत्यर्थः ॥ ५६ ॥

---

१ (क. ख.) मात्राः प्र°। २ (क. ख.) विसर्जं°।

शिष्यस्याशीरियं ज्ञेया नाचार्यस्य कृतार्थतः ।
अनाप्तपुरुषार्थानामाशीर्वादो हि युज्यते ॥ ५७ ॥

सेयं प्रार्थना शिष्यस्याचार्यस्य वेत्याकाङ्क्षायां शिष्यस्य हीत्यादिभाष्यार्थमाह । शिष्यस्येति । कृतार्थोऽपि कस्मादाचार्यो न प्रार्थयते तत्राह । अनाप्तेति ॥ ५७ ॥

वेदाध्ययनविज्ञानादनन्तरमिदं यतः ।
नेदीयः संहिताज्ञानमतस्तदभीधियते ॥ ५८ ॥

अथातःशब्दयोरर्थमाह । वेदेति ॥ ५८ ॥

संहिताविषयं ज्ञानमिहोपनिषदुच्यते । पञ्चाधि-
करणां तां तु व्याख्यास्यामोऽधुना स्फुटम् ॥५९॥

आनन्तर्यमथशब्दार्थो हेत्वर्थश्चातः शब्द इत्युक्त्वा संहिताया इत्यादि व्याचष्टे । संहितेति । पञ्चस्वधिकरणेष्वित्यस्यार्थमाह । पञ्चेति । पञ्चस्वितिसप्तमी तृतीयार्थे परिणम्यते । अधिकरणशब्दश्च विषयपर्यायः । पञ्चभिः पदार्थैर्विशेषितं ज्ञानं वर्णेषु प्रतिमायां विष्णुदृष्टिरिव कर्तव्यमित्यर्थः ॥ ५९ ॥

अधिलोकमधिज्योतिरधिविद्यमधिप्रजम् ।
अध्यात्मं चेति लोकादेर्महत्त्वात्तद्विदो जगुः ॥
ता महासंहिताः सर्वा इति ता य उपासते ॥६०॥

विषयानेव विविच्य दर्शयति । अधिलोकमिति । लोकानधिकृत्य ध्येयत्वेनोपादायेत्येतज्ज्योतिःशब्देनाग्न्यादिर्गृह्यते विद्याशब्देन विद्याहेतुराचार्यादिर्विवक्षितः । प्रजाशब्देन प्रजाहेतुः पित्रादिरुक्तः । अध्यात्ममित्यात्मानं भोक्तारमधिकृत्य यज्जिह्वादि प्रवर्तते तदुच्यते सर्वत्र चात्र तदभिमानिनी देवतैव ग्राह्या ततोऽन्यस्योपास्यत्वासंभवादित्यर्थः । संहितोपनिषदां महत्त्वं संहितात्वं चार्थवादोक्तमुपपाद्य तासां कर्तव्यत्वमुत्पत्तिविधिना दर्शयति । लोकादेरिति । लोकादिमहावस्तुविषयत्वाद्वेदाक्षरसंहिताविषयत्वाच्च महत्त्वं संहितात्वं चोपनिषदां विज्ञेयं ताश्च कर्तव्या इत्यर्थः । ये चोपनिषदस्तात्पर्येणानुवर्तन्ते तेषां वक्ष्यमाणं भवतीति द्रष्टव्यम् ॥ ६० ॥

---

१ ( क. ख. ङ. ) °दि गृह्य° । २ ( ग. घ. ङ. च. ) °दि व° ।

दृष्टिक्रमविधानार्थास्त्वथशब्दा अमी स्मृताः।
लोकादीनधिकृत्योक्तेरधिलोकाद्यतो भवेत् ॥६१॥

अथाधिलोकमित्यादौ सर्वत्राथशब्दाः सन्ति तेषामर्थमाह। दृष्टीति। कर्तुरेकत्वादनुष्ठेयानां बहुत्वादवश्यंभाविनि क्रमे हृदयस्याग्रेऽवद्यत्यथ जिह्वाया अथ वक्षस इतिवत्तद्विशेषनियमार्था वाक्येष्वथशब्दा इत्यर्थः। अधिलोकादिशब्दवाच्यत्वं कथमुपासनानामित्याशङ्क्याह। लोकादीनिति ॥ ६१ ॥

पृथिव्यग्निरथाचार्यो माता या चाधरा हनुः।
पूर्वं स्यात्संहितारूपं दिवादित्याद्यथोत्तरम् ॥६२॥

संहिताया यत्पूर्वमक्षरं तत्र पृथिवीदृष्टिरग्निदृष्टिराचार्यदृष्टिर्मातृदृष्टिरधराहनुदृष्टिश्च कर्तव्येतिविनियोगविधिं दर्शयति। पृथिवीति। यच्चोत्तरं संहिताक्षरं तत्र द्युलोकदृष्टिरादित्यदृष्टिरन्तेवासिदृष्टिः पितृदृष्टिरुत्तराहनुदृष्टिश्च कर्तव्येत्याह। दिवेति ॥ ६२ ॥

पूर्वो वर्णः पूर्वरूपमुत्तरश्चोत्तरं स्मृतम् ॥६३॥
संहिताया इति ज्ञेयं ततोऽन्या काऽत्र संहिता ॥
संधिः स्यान्मध्यमं छिद्रमाकाशादिस्तथैव च ॥६४॥

के ते पूर्वोत्तरे संहिताया रूपे यत्र पृथिव्यादिदृष्टिरित्याशङ्क्याह। पूर्व इति। उक्ताक्षरातिरेकेण संहितारूपस्य दुर्निरूपत्वमाह। तत इति। अक्षरयोर्मध्यमं छिद्रं संधिस्तत्र च पूर्ववदाकाशदृष्टिर्जलदृष्टिर्विद्यादृष्टिः प्रजादृष्टिर्वाग्दृष्टिश्च कर्तव्येत्याह। संधिरिति ॥ ६३ ॥ ६४ ॥

संधत्ते येन संधानं वाय्वादिरिहकीर्यते।
इतीमा इतिवाक्येन प्रदर्श्यन्ते यथोदिताः ॥६५॥

पूर्वोत्तराक्षरयोः संबन्धहेतुर्यत्नविशेषः संधानं तत्र वायुदृष्टिर्विद्युद्दृष्टिः प्रवचनदृष्टिः प्रजननेन्द्रियदृष्टिर्जिह्वादृष्टिश्च कार्येत्याह। संधत्त इति। इत्थं संहितोपासनप्रकारा उक्ता इति विनियोगविधिमितीमा इतिवाक्यार्थकथनेनोपसंहरति। इतीमा इति ॥ ६५ ॥

---

१ (च.) इयं विधिक्रमेण दृ°। २ (ग घ.) °विना° क्रमेण दृ°। ३ (ग. घ. ङ. च) °त्वमित्याह।

वेदोपास्ते तु यस्त्वेताः फलं तस्येदमुच्यते ।
शास्त्रार्पितधियोपेत्य ह्यातादात्म्याभिमानतः ॥
चिरासनं भवेदर्थे तदुपासनमुच्यते ॥६६॥

यथा दर्शादयः पञ्चयागाः समुचित्य फलसाधनमधिकारांशेनाभेदात्तथा पञ्चोपनिषदः समुच्चिताः प्रजादिफलकामस्यानुष्ठेया इत्यधिकारविधिं य एवमेता इत्यादिवाक्यस्यार्थकथनेन कथयति । वेदेति । प्रजादि स्वर्गान्तमिदमापरामृश्यते । उपासनशब्दार्थमाह । शास्त्रेति । श्रुतिस्मृतिसिद्धेऽर्थे तदीयं साक्षात्करणं यावदुत्पद्यते तावद्विजातीयप्रत्ययानन्तरिततसजातीयप्रत्ययसन्ततिकरणमुपासनमित्यर्थः ॥ ६६ ॥

संधीयतेऽसौ स्वर्गान्तैः प्रजादिभिरसंशयम् ।
महतीः संहिता वेद यो यथोक्ताः समाहितः ॥६७॥

फलकामिनाऽनुष्ठीयमानं संहितोपासनं कामितफलाय संपद्यते फलानभिसंधिनो त्वनुष्ठीयमान तदेव ब्रह्मविद्यार्थं भवतीत्यभिप्रेत्य वेदोपास्ते यस्त्वित्यादिनोक्त मपश्चयति । संधीयत इति ॥ ६७ ॥ इति द्वितीयोऽनुवाकः ॥ २ ॥

यश्छन्दसामितिज्ञानं मेधाकामस्य भण्यते ।
आवहन्तीति तद्वत्स्याच्छ्रीकामस्येह लिङ्गतः ॥६८॥

यश्छन्दसामित्यारभ्य श्रुतं मे गोपायेत्यन्तस्य ग्रन्थस्य तात्पर्यमाह। यश्छन्दसामिति । तेन हि ज्ञानमोंकारोपासनमधिकृत्य जपो मेधाकामस्योच्यते । स मेन्द्रो मेधया स्पृणोत्विति लिङ्गान्मेधाहीनेन ब्रह्मणोऽवगन्तुमशक्यत्वात्तत्कामस्य जपोऽपि ब्रह्मविद्यार्थो भवतीत्यर्थः। आवहन्तीत्यारभ्यानुवाकसमाप्त्यन्तस्य ग्रन्थस्य तात्पर्यमाह । आवहन्तीति । यथा जपो मेधाकामस्याभिधीयते तथैवावहन्तीत्यादिना सर्वेणानुवाकेन श्रीकामस्य होमो विवक्षितः स्यात्ततो मे श्रियमावहेति लिङ्गात् । न हि श्रीविहीनेन चित्तशुद्ध्यर्थं यागाद्यनुष्ठातुं शक्यते ततः श्रीकामस्य होमोऽपि परंपरया ब्रह्मविद्योपयोगीत्यर्थः ॥ ६८ ॥

१ ( ग घ °ते म स । २ ( ग. घ. ) °नाऽनु° । ३ ( ग घ. ) °स्येति लि°।

छन्दःशब्दास्त्रयो वेदास्तत्प्रधानत्वकारणात् ।
ऋषभो विश्वरूपश्च सर्ववाग्व्याप्तिकारणात् ॥ ६९ ॥

वेदत्रयं छन्दःशब्दवाच्यं तस्मिन्वेदत्रये प्रधानत्वमोंकारस्यास्ति तस्मादेव कारणादृषभशब्दादोंकारो गृह्यते । तद्यथा शङ्कुनेत्यादिश्रुतेरोंकारस्य सर्वात्मकत्वश्रवणाद्विश्वरूपश्चासाविति पदत्रयस्यार्थमाह । छन्दःशब्दा इति ॥ ६९ ॥

अमृतेभ्योऽसौ वेदेभ्यः प्रतिभातः प्रजापतेः ।
ओंकारस्य हि नित्यत्वान्नाञ्जसोत्पत्तिरुच्यते ॥७०॥

छन्दोभ्योऽधीत्यादेरर्थमाह। अमृतेभ्य इति ।अमृतादिति पदमपि बहुवचनसामानाधिकरण्याद्बहुवचनत्वेन योज्यते संबभूवेति जन्मवाचके पदे श्रूयमाणे किमिति प्रजापतिर्लोकानभ्यतपदित्यादिश्रुत्यन्तरमनुसृत्य श्रेष्ठत्वेन प्रतिभानं व्याख्यायते तत्राह । ओंकारस्येति ॥ ७० ॥

ओंकारः सर्वकामेशः स इन्द्रः परमेश्वरः ।
मेधया प्रज्ञया मां स स्पृणोतु प्रीणयत्विति ॥७१॥

समेन्द्रो मेधयेत्यादेरर्थमाह । ओंकार इति ॥ ७१ ॥

अमृतत्वैकहेतोः स्यामात्मज्ञानस्य धारणः ॥७२॥
विचक्षणं च मे भूयाच्छरीरं देव सर्वदा ।
मनः प्रल्हादिनी मे स्याज्जिह्वा मधुरभाषिणी ॥७३॥

अमृतस्येत्याद्यमृतशब्देनामृतहेतुत्वादात्मज्ञानमुच्यते तस्याहं त्वत्प्रसादाद्धारयिता स्यामिति प्रार्थनान्तरमाह । अमृतत्वेति ॥ ७२ ॥

शरीरं मे विचर्षणमित्यस्यार्थमाह । विचक्षणं चेति । जिह्वा मे मधुमत्तमेत्यस्यार्थमाह । मन इति । यदि हि शरीरपाटवं न स्यात्तदा मेधाफलस्यात्मज्ञानस्य सिद्ध्यर्थं श्रवणाद्यनुष्ठानयोग्यता न मे सिध्येत् । यदि च मदीयं वागिन्द्रियं परुषभाषणे व्याप्रियेत तदा ज्ञानोपदेष्टर्यपि तत्संभवान्न मे ज्ञानं संभवेदतस्तदुभयं प्रार्थ्यते मुमुक्षुणेत्यर्थः ॥ ७३ ॥

---

१ ( ग घ ) °शब्दम्र° । २ ( ग घ च ) °शब्द इ° । ३ ( ग घ च ) °नसि° ।

कर्णाभ्यां चैव वेदार्थं भूरि विशृणुयामहम् ।
ब्रह्मणश्चासि कोशस्त्वमसेरिव परात्मनः ॥७४॥

कर्णाभ्यामित्यादेरर्थमाह । कर्णाभ्यामिति । ओंकारस्य शब्दमात्रत्वेनाचेतनत्वात्कथं मेधादिप्रदाने सामर्थ्यं कथं चेन्द्रशब्दवाच्यत्वमित्याशङ्क्याऽऽह । ब्रह्मणश्चेति । ओंकारस्य ब्रह्मोपलब्धिस्थानत्वेन ब्रह्मसंनिकर्षात्तत्र सर्वमुपपन्नमित्यर्थः ॥ ७४ ॥

अपविद्धैषणा यस्मात्त्वयि पश्यन्ति तत्परम् ।
अभिधानप्रतीकत्वद्वारेणास्योपलब्धये ॥
त्वमेव हेतुतां यासि तस्मात्कोशस्त्वमुच्यसे ॥७५॥

ब्रह्मकोशत्वमोंकारस्य साधयति । अपविद्धेति । त्वयीति सप्तमी निमित्तार्था । कथमोंकारं निमित्तीकृत्य विरक्ता मुमुक्षवो ब्रह्म पश्यन्तीत्यपेक्षायामाह । अभिधानेति ॥ ७५ ॥

लौकिकप्रज्ञया यस्मान्मेधया पिहितस्ततः ।
नोपासते पराक्चित्तास्त्वां देवममृतप्रदम् ॥७६॥

ब्रह्माभेदेन मुमुक्षूणामपेक्षितमेधादिदाने चेदोंकारः सामर्थ्यमश्नुते तर्हि किमिति सर्वैरेव मेधार्थिभिरसौ नोपास्यते तत्राह । लौकिकेति । विषयाभिनिवेशो लौकिकप्रज्ञा ॥ ७६ ॥

रागद्वेषादिहेतुभ्यः श्रुतं गोपाय मे प्रभो ॥७७॥
येन श्रुतेन संपन्नस्त्वामेव प्रविशाम्यहम् ।
प्रापयन्त्यावहन्तीतिर्विस्तारार्थोत्तरा क्रिया ॥७८॥

श्रुतमित्यादेरर्थमाह । रागद्वेषादीति । ज्ञानसाधनं श्रवणादिकमनुतिष्ठतो मे यथा रागादिर्ज्ञानप्रतिबन्धकं न भवति तथा त्वया कर्तव्यमित्यर्थः । मेधाकामस्य जपार्थान्मन्त्रान्व्याख्याय श्रीकामस्य होमार्थान्मन्त्रान्व्याचिख्यासुरावहन्ती वितन्वानेतिपदद्वयस्य क्रमेणार्थमाह । प्रापयन्तीति ॥ ७७ ॥ ७८ ॥

---

१ ( क. ख. ) °क्रिया प्र° । २ ( ग. घ. ) °षादा° । ३ ( क. ख. ) °क्रियेति । ४ ( क. ख. ग. घ. ) विस्तरा° ।

कुर्वाणामुभयं देव चिरमावह मे श्रियम्।
ततो वेदार्थविज्ञानादन्नपानान्तदायिनीम् ॥७९॥

कुर्वाणेत्यादेरर्थमाह। कुर्वाणामिति। उभयं वस्त्राधानयनं तद्विस्तारं चेत्यर्थः। देवेत्योंकारो ब्रह्माभेदेन संबोध्यते। वेदार्थविज्ञानादनन्तरमितिशेषः। तदभावे श्रीरनर्थाय संभाव्यते ॥ ७९ ॥

लोमशां पशुभिर्युक्तां प्रत्येकं सर्वदेति च।
मन्त्रान्तज्ञापनार्थाय स्वाहाकारोऽयमुच्यते ॥८०॥

लोमशामित्यादेरर्थमाह। लोमशामिति। अजाव्यादियुक्तत्वं श्रियो लोमशत्वं स्वतस्तदयोगात्सर्वदा वासांसि सर्वदा गाः सर्वदाऽन्नपाने च मामावहन्तीं विस्तारयन्तीं कुर्वाणां श्रियमावहेत्यन्वयं सूचयति। प्रत्येकमिति। स्वाहाकारप्रयोगस्याभिप्रायमाह। मन्त्रान्तेति ॥ ८० ॥

तथैव चोत्तरत्रापि स्वाहा तत्संभवाद्भवेत्।
दैवेन मानुषेणैव वित्तेनाऽऽमुत्रिकैहिकम् ॥
कर्म कर्तुमलं यस्मात्प्रार्थ्यते तेन तद्द्वयम् ॥ ८१ ॥

उत्तरेष्वपि मन्त्रेषु स्वाहाकारो मन्त्रान्तज्ञापनायैव भवेत्तत्र तत्र स्वाहाकारेण मन्त्रान्तज्ञापनसंभवादित्याह। तथैवेति। ननु किमर्थं मुमुक्षुणा ज्ञानं धनं च प्रार्थ्यते तत्राऽऽह। दैवेनेति। दैवं वित्तं ज्ञानम्। मानुषं सुवर्णादि ॥ ८१ ॥

आयन्तूद्दिश्य मां सर्वे अधीति श्रवणार्थिनः ॥ ८२ ॥
प्रकृष्टयार्थं प्रमायन्तु यत्नतो ब्रह्मचारिणः।
संभूय कोटिशश्चैव मामेवायन्तु सत्वराः ॥ ८३ ॥

आमायन्त्वित्यादेरर्थमाह। आयन्त्विति ॥ ८२ ॥

प्रमायन्तु ब्रह्मचारिणः स्वाहा शमायन्तु ब्रह्मचारिणः स्वाहेतिवाक्यद्वयं केचित्पठन्ति तस्यार्थमाह। प्रकृष्टयर्थमिति ॥ ८३ ॥

---

१ (ग. घ.) मन्त्रान्तेषु। २ (क. ख.) °कृष्टार्थे। ३ (क. ख.) कृष्टार्थे°।

जनेऽसानि यशश्चेति पूर्वस्यैतत्प्रयोजनम् ।
वस्यसोऽहं सकाशाच्च श्रेयान्स्यां गुणतोऽधिकः ॥
वसीयसो वस्यस इतीलोपश्छान्दसो भवेत् ॥८४॥

किमर्थमनेकब्रह्मचार्यागमं प्रार्थ्यते तत्राह । जनेऽसानीति । बहवो ब्रह्मचारिणो यदि मत्तो विद्यामाददीरन्विद्वत्सभायां तदा मम ख्यातिर्भवतीत्यर्थः । श्रेयानित्यादेरर्थमाह । वस्यसोऽहमिति । वस्यस इति वसीयस इत्यस्मिन्नर्थे ईकारलोपश्छान्दसः । वसीयसः सकाशादहं श्रेष्ठः स्यामित्यर्थः ॥ ८४ ॥

ईयसुन्वसितुर्वा स्यात्स्याद्वा वसुमतः परः
अभीष्टोऽतिशयो यस्मात्सजातीयाद्गुणोन्नतेः ॥८५॥

वसितुः पुरुषाद्धनवतो वा पुरुषादुत्तरत्रायमीयसुन्प्रत्ययो न धातोरुपरिष्टादितिविवक्षितत्वादित्याह । ईयसुन्निति । तत्र हेतुमाह । अभीष्ट इति । गुणश्रेष्ठतया सजातीयेभ्यः श्रेष्ठत्वस्य विवक्षितत्वादित्यर्थः । अथवा वस निवासे वस आच्छादन इति धातुद्वयादुप्रत्ययः । ताच्छील्यार्थे वसुर्वसनशीलः पराच्छादनशीलो वा वसुरित्यतिशयेन वसुर्वसीयानुक्तस्तस्माद्वसीयसोऽहं श्रेष्ठः स्याम् । वसुमान्वा वसुशब्देन लक्ष्यते । ततो वसुमत्तरादहं श्रेष्ठो भूयासमित्यर्थः ॥८५॥

ब्रह्मणः कोशभूतं त्वां भगवन्प्रविशाम्यहम् ।
मां च सर्वात्मभावेन प्रविशेश प्रसीद मे ॥८६॥
ऐकात्म्यमावयोरस्तु भेदहेतुं विनाशय ।
अनन्तभेदे त्वय्येव निमृजे दुष्कृतं ततः ॥८७॥

पूर्वोक्तस्य प्रार्थनस्य प्रयोजनमाह । ब्रह्मण इति । मुमुक्षोः श्रेष्ठत्वे सत्योंकारवाच्येन ब्रह्मणा सहैकत्वमपेक्षितं सेत्स्यतीत्यर्थः । तस्मिन्नित्यादेरर्थमाह । अनन्तेति । यस्मादहं त्वदात्मभूतोऽस्मि तस्मात्त्वन्निमित्तमेव मम पापक्षयः स्यादित्यर्थः ॥ ८६ ॥ ८७ ॥

---

१ (ङ) °क्षित्वां । २ (ग घ) °य. । शीलेऽर्थे सुवेश्मसु वस° (च.) °यः । ।लेऽर्थे सुखेन वसुर्वस° । ३ (ख) °र्थे नेश्मसु वस° (ङ.) °र्थे स्ववेश्मसु वस° ।

द्रुतमापो यथा यन्ति निम्नेन मकरालयम् ।
तथैवायन्तु मां सर्वे समन्ताद्ब्रह्मचारिणः ॥८८॥
यस्मिन्नहानि जीर्यन्ते सोऽब्दोऽहर्जर उच्यते ।
अहर्जरे यथा मासा यन्ति संवत्सरात्मनि ॥८९॥

यदुक्तं ब्रह्मचारिणो मामायन्त्विति तत्र दृष्टान्तद्वयं श्रुत्युक्तं व्याचष्टे । द्रुतमित्यादिना ॥ ८८ ॥ ८९ ॥

आसन्नगृहपर्यायः प्रतिवेशं इहोच्यते ।
प्रतिवेश इवासि त्वं सर्वदुःखापनोदकृत् ॥ ९० ॥

प्रतिवेशोऽसीत्यत्र प्रतिवेशशब्दार्थमाह । आसन्नेति । संनिहितगृहवदशेषदुःखनिवृत्तिहेतुस्त्वमितिवाक्यार्थं कथयति । प्रतिवेश इति ॥ ९० ॥

प्रतिप्राणिप्रवेशाद्वा प्रतिवेशोऽसि कीर्त्यसे ।
मां प्रत्यतः प्रभाहि त्वं प्रमापद्यस्व चाञ्जसा ॥९१॥

आकाशवत्सर्वप्राण्यनुप्रवेशाद्वा प्रतिवेशस्त्वमित्यर्थान्तरमाह । प्रतिप्राणीति । प्रभा भाहीत्यादेरर्थमाह । मां प्रतीति । यतस्त्वं सर्वगतोऽतो मां प्रति प्रभाहि त्वत्स्वरूपं प्रकटय मां च प्रपद्यस्वेत्यर्थः । प्रकृतेषु मन्त्रेषु ब्राह्मणोत्पन्नत्वात्तद्व्याख्यावादार्पेयादि नाऽनुसंधेयम् ॥ ९१ ॥ इति तृतीयोऽनुवाकः ॥ ३ ॥

उपासनमथेदानीं व्याहृत्यात्मन उच्यते ॥
स्वाराज्यफलसिद्ध्यर्थं महिमाऽतोऽस्य कीर्त्यते ॥९२॥

ओंकारवाच्यत्वेन तत्प्रतीकत्वेन वा ब्रह्मणो ध्येयत्वमुक्तम् । जपार्था होमार्थाश्च मन्त्रा व्याख्याताः । संप्रति व्याहृत्यात्मनो ब्रह्मणोऽपरस्योपासनं विशिष्टफलं वक्तव्यमित्युत्तरानुवाकस्य तात्पर्यमाह । उपासनमिति । यतो व्याहृत्यात्मनो ब्रह्मणोऽत्रोपासनं विवक्षितमतः समनन्तरवाक्येन तथाविधब्रह्मणः स्तुतिर्विवक्षितेत्याह । महिमेति ॥ ९२ ॥

भूर्भुवः स्वरितिज्ञेयाः प्रसिद्धा व्याहृतीर्नरैः ।
तिस्रस्तासां चतुर्थी तु मह इत्यृपिरभ्यधात् ॥९३॥

एवं तात्पर्यमुक्त्वाऽक्षरार्थं कथयति । भूरिति । व्याहृतीरितिद्वितीया प्रथमार्थे तासामित्यादिवाक्यत्रयस्यार्थमाह । तासामिति ॥ ९३ ॥

१ (क. ख. ग. घ.) °वायान्तु । २ (ग. घ.) °शगिरोच्य° । ३ (घ. च.) °त्पर्यार्थमा° । ४ (क. ख. ग. घ.) °तुर्थी तु ।

महाचमसगोत्रत्वाद्गोत्रार्थस्तद्धितो भवेत् ।
माहाचमस्योतः साक्षान्महो वेदयते पराम् ॥९४॥

तद्धितार्थमाह । महाचमसेति ॥ ९४ ॥

उपासनाङ्गतार्थोऽयमृषिनामग्रहो भवेत् ।
आर्षेयस्मृतिसंमिश्रमुपासनमिहोच्यते ॥ ९५ ॥

ऋषिनामग्रहणस्य प्रयोजनमाह । उपासनेति ॥ ९५ ॥

चतुर्थी व्याहृतिर्येयं ब्रह्मेत्येवमुपास्यताम् ।
महत्त्वाद्ब्रह्म सा ज्ञेया आत्मा चाप्नोति येन सा ॥९६॥

तद्ब्रह्मेत्यस्यार्थमाह । चतुर्थीति । तस्या महत्त्वाद्ब्रह्मत्वं सर्वव्यापकत्वाच्चाऽऽत्मत्वमित्येतदाह । महत्त्वादिति ॥ ९६ ॥

आदित्यचन्द्रब्रह्मान्नभूतेन व्यापिना यतः ॥९७॥
लोकदेवादयो व्याप्ता आत्मा तेन महो भवेत् ।
देवताग्रहणं चात्र परिशिष्टोपलक्षणम् ॥ ९८ ॥

सर्वव्यापकत्वं साधयति । आदित्येति ॥ ९७ ॥

व्याहृतीनां श्रद्धागृहीतत्वात्तत्त्यागेनोक्तं ब्रह्म बुद्धिं नारोहति । अतो व्याहृतिशरीरं हिरण्यगर्भाख्यं ब्रह्म हृदयान्तर्ध्येयत्वेनोक्त्वा महोव्याहृतावङ्गिब्रह्मदृष्टिर्महत्वव्यापकत्वसामान्यादितराश्च व्याहृतयस्तस्य पादाद्यवयवत्वेन कल्प्यन्ते । प्रथमा व्याहृतिः पादौ द्वितीया बाहू तृतीया शिर इति व्याहृत्यवयवं ब्रह्मोपासीतेत्युत्पत्तिविधिरित्युक्तम् । इदानीमङ्गान्यन्या देवता इत्यत्र देवताग्रहणस्य तात्पर्यमाह । देवतेति ॥ ९८ ॥

लोका देवास्तथा वेदाः प्राणाश्चाङ्गानि सर्वशः ।
मह इत्यस्य ज्ञेयानि व्याहृत्यात्मन एव हि ॥९९॥

परिशिष्टोपलक्षणे सिद्धमर्थमाह । लोका इति ॥ ९९ ॥

महीयन्ते यतः सर्वे आदित्याद्यात्मना परे ।
मह इत्येवमुक्तेन तस्मादात्मा भवेन्महः ॥१००॥

चतुर्थव्याहृतेर्व्यापकत्वेनाऽऽत्मत्वं पूर्वत्रोक्तम् । अधुना लोकादिवृद्धिहेतुत्वादात्मत्वमित्येतदाह । महीयन्तइति ॥ १०० ॥

१ (क. ट.) लोका दे°। २ (ङ.) °नोक्तं म°। ३ (ग.) कल्प्यन्ते । ४ (ङ.) °क्षगमिद्धमर्थं°। ५ (ग. घ.) °द्या यथा प°।

आत्मना हि महीयन्ते हस्ताद्यङ्गानि सर्वशः ।
यथा लोकादयस्तद्वदादित्याद्यात्मनैधिताः ॥ १ ॥

उक्तमर्थं दृष्टान्तेन साधयति । आत्मनेति । यथा देवदत्तस्य पादादीन्यङ्गानि मध्यभागश्चाङ्गी तेषामङ्गानां वृद्धिहेतुत्वादुच्यते तथा । महोव्याहृतिर्ब्रह्मणो हिरण्यगर्भस्य लोकाद्यात्मकस्य मध्यभागो लोकादेरादित्याद्यात्मना वृद्धिहेतुत्वादात्मेति चोच्यत इत्यर्थः ॥ १ ॥

अयं लोकोऽग्निर्ऋग्वेदः प्राणश्चेति चतुर्विधा ।
भूरिति व्याहृतिर्ज्ञेया तथैवान्या यथाक्रमम् ॥२॥

उत्पत्तिविधेरुक्तत्वादङ्गविशेषविधिमधुना कथयति । अयमित्यादिना॥ २ ॥

अन्तरिक्षं च वायुश्च साम चापान एव च ।
चतुर्धा भुव इत्येषा द्वितीया व्याहृतिर्मता ॥ ३ ॥
द्यौरादित्यो यजुश्चेति व्यानश्चेति चतुर्थ्यपि ।
महश्चेति पुरा प्रोक्ता चतस्रः स्युश्चतुर्विधाः ॥४॥

तथैवान्या इत्यादि विवृणोति । अन्तरिक्षमिति ॥ ३ ॥

व्यानश्चेत्यत्र तृतीया व्याहृतिर्मतेत्यनुपज्यते । महश्चेति चतुर्थ्यपि व्याहृतिः । एवं पूर्वव्याहृतिवदादित्यचन्द्रब्रह्मान्नभूतेनेत्यत्र चतुर्विधा प्रोक्तेत्याह । चतुर्थ्यपीति । प्रदर्शितप्रकारेण चतस्रो व्याहृतयश्चतुर्विधा भवन्तीति निगमयति । चतस्रः स्युरिति ॥ ४ ॥

उक्तानां पुनरुक्तिः स्यादुपासानियियंसया ।
यथोक्ता व्याहृतीरेता वेदोपास्ते तु यो नरः ॥
स वेद सकलं ब्रह्म वक्ष्यमाणविशेषणम् ॥ ५ ॥

अयं लोक इत्यादिना व्याहृतीनां प्रत्येकं चतुर्विधत्वमुक्तमेव किमितिपुनरुच्यते तत्राह । उक्तानामिति । व्याहृतीनां स्तुत्यर्थं चतुर्विधत्वं नोच्यते किंतु प्रत्येकं तासां चतुर्विधत्वेनोपासनं नियतमिष्यते। तथा षोडशकलस्य पुरुषस्योपास्यत्वमत्र सेत्स्यति । अधिकवचनस्यार्थविशेषसूचकत्वादित्यर्थः । अधिकारेविधिविवक्षया ता यो वेदेत्यादेरर्थमाह । यथोक्ता इति । व्याहृत्यनुवाकेनोक्ते ब्रह्मोपासने गुणविधानमनन्तरानुवाके भविष्यतीत्यभिमेत्य विशिनष्टि । वक्ष्यमाणेति ॥ ५ ॥

---

१ (क. ख.) °ति वोच्य°। २ (ग.घ.ङ.) °हश्चैवं पु°। ३ (ग. घ. च.) °वान्येता°। ४ (क.) °तुर्था। ५ (ग घ.) °रनिव°। ६ (ग. घ. च.) °नोक्तत्र°।

ब्रह्म वेद स इत्येवं पुनरुक्तं किमुच्यते ।
वक्ष्यमाणानुवाकार्थविवक्षुत्वाददोषता ॥ ६ ॥

तद्ब्रह्मेति ब्रह्मणश्चतुर्थव्याहृत्यात्मन उक्तत्वात्पुनरुक्तिरनर्थिकेतिशङ्कते । ब्रह्मेति । अनुवाकद्वयेनैकमुपासनं विवक्षितमिति वक्तुमुक्तानुवादान्नास्ति पुनरुक्तिरित्याह । वक्ष्यमाणेति ॥ ६ ॥

स य एषोऽन्तरित्यादि वक्ष्यमाणानुवाकगम् ।
वस्तूपास्यमिहैवेति स वेदेति पुनर्वचः ॥ ७ ॥

सत्यमित्यादिभाष्यमाश्रित्योक्तमेव प्रपञ्चयति । स य इति ॥ ७ ॥

एकवाक्यत्वमेतस्माद्द्वयोरप्यनुवाकयोः ॥ ८ ॥
लोका देवादयश्चास्मा उपासित्रे यथाबलम् ।
बलिं भोगं प्रयच्छन्ति फलमेतदुपासितुः ॥ ९ ॥

अतो वक्ष्यमाणानुवाकेनेत्यादिभाष्यार्थमाह । एकवाक्यत्वमिति । एतस्मादुपासनैक्यादित्यर्थः ॥ ८ ॥

सर्वेऽस्मै देवा बलिमावहन्तीत्यस्यार्थमाह । लोका इति । उपासित्रे स्वाराज्यमाप्तापेत्यर्थः ॥ ९ ॥ इति चतुर्थोऽनुवाकः ॥ ४ ॥

तिस्रो व्याहृतयो यस्य ब्रह्मणोऽङ्गान्यवादिषम् ।
स्थानादिसिद्धये तस्य परः संदर्भ उच्यते ॥ १० ॥

उत्तरानुवाक्यस्य तात्पर्यमाह । तिस्र इति । ताश्चेत्याध्यात्मिका दर्शिताः । ब्रह्मणो महाव्याहृत्यात्मकस्य स्थानादीत्यादिशब्देन गुणमार्गौ गृह्यते ॥ १० ॥

स यः परोक्षनिर्दिष्टः प्रत्यक्षेण स दर्श्यते ।
अन्तर्हृदय आकाशे पश्याऽऽत्मानं त्वमात्मना ॥ ११ ॥

स वेद ब्रह्मेति पूर्वस्मिन्ननुवाके परोक्षरूपेण निर्दिष्टं ब्रह्म प्रत्यक्षं हृदयाकाशे प्रदर्श्यत इति पदार्थव्याख्यानं करोति । स य इति । तस्मिन्नयं पुरुष इत्यस्य तात्पर्यमाह । अन्तरिति ॥ ११ ॥

---

१ (ग. घ. ङ.) °राज्यं प्रा°। २ (ङ.) ताश्च लोकाद्यात्मि°। (ग. घ. च.) ताश्चेत्याद्यात्मि° । ३ (ग. घ.) °णो व्या°।

पद्माकारो हि मांसस्य खण्डो हृदयमुच्यते ।
आकाशस्तस्य मध्ये यो बुद्धेरायतनं सदा ॥
तस्मिन्स पुरुषो ज्ञेयो मनोमय इहाञ्जसा ॥ १२ ॥

हृदयशब्दार्थमाह । पद्मेति । अन्तरित्यादेर्वाक्यार्थं कथयति । आकाश इति ॥ १२ ॥

शशिस्थराहुवत्साक्षान्मनस्येवोपलभ्यते ॥ १३ ॥
मनुते मनसा यस्मात्तेनायं स्यान्मनोमयः ।
स्याद्वा तदभिमानित्वात्तल्लिङ्गात्तन्मयः स्मृतः ॥१४॥

मनोमयत्वं तस्य श्रुत्योक्तमनेकधा साधयति । शशिस्थेति ॥ १३ ॥

मनुते विषयजातमितिशेषः । तल्लिङ्गात्तेन मनसा लिङ्गेन गम्यमानत्वादित्यर्थः ॥ १४ ॥

अमृतोऽमरणधर्मा स्याद्धिरण्यं ज्योतिरुच्यते ।
तन्मयोऽयं पुमान्ध्येयस्तत्प्राप्तौ द्वारथोच्यते ॥१५॥

शब्दद्वयस्यार्थमनूद्य गुणद्वयात्मकत्वेन ब्रह्मणो ध्येयत्वमाह । अमृत इति । अन्तरेणेत्यादिवाक्यस्य तात्पर्यमाह । तत्प्राप्ताविति । शरीरस्थित्यर्थकर्मसमाप्त्यानन्तर्यमथशब्दार्थः ॥ १५ ॥

ऊर्ध्वं प्रवृत्ता नाड्येका सुषुम्ना हृदयादधि ।
गत्वा तालुकयोर्विद्वान्मध्ये नोदानगर्भया ॥ १६ ॥
स्तनवल्लम्बते कण्ठे मांसखण्डस्त्वधोमुखः ।
इन्द्रस्यासौ स्मृतिर्ज्ञेया रेचकेन तया व्रजेत् ॥ १७ ॥

तमेव द्वारशब्दितं मार्गं तेनोपासकस्य गमनं च वाक्यं योजयन्दर्शयति । ऊर्ध्वमित्यादिना । या हृदयादारभ्य सुषुम्ना नाडी ध्येयस्येन्द्रस्यापरस्य ब्रह्मणः प्राप्तये प्रवृत्ता सा च स्मृतियोगशास्त्रानुसारेण ज्ञातव्या ॥ १६ ॥

यया चोपासको विद्वान्कण्ठे स्थितं स्तनसदृशमधोमुखं संलम्बमानं मांसखण्डं भित्त्वा तालुकयोर्मध्ये न गत्वा प्रकृतया स्मृत्योदानवायुपूरितया रेचकप्राणायामबलाद्व्रजेदिति योजना ॥ १७ ॥

---

१ (च.) °त्वेनैकस्य ब्र°। २ (ग.घ.ङ.) °रशब्दि°। ३ (ग.घ.) °न्द्रस्य प°।

तया गत्वाऽथ यायात्स यत्रकेशान्तो विवर्तते ।
भित्त्वा शिरःकपाले द्वे भूरित्यग्निं प्रपद्यते ॥ १८ ॥

द्वितीययाऽथ व्याहृत्या वायौ संप्रतितिष्ठति ।
आदित्ये सुवरित्येवं लोकेशे प्रतितिष्ठति ॥ १९ ॥

स्थित्वैवमङ्गभूतेषु प्रतितिष्ठत्यथाङ्गिनि ।
मह इत्यात्मनि स्थित्वा स्वाराज्यं प्रतिपद्यते ॥२०॥

किं व्रजेदित्यपेक्षायां यत्रेत्यादि व्याचष्टे । तयेति । फलप्राप्त्याभिमुख्यानन्तर्यमथशब्दार्थः । शिरःकपाले भित्त्वा मूर्धानं गत्वा तदनन्तरमङ्गाङ्गिभावेन स्थितं ब्रह्म प्राप्नोतीत्याह । भूरित्यादिना ॥ १८ ॥ १९ ॥ २० ॥

नान्यो राजाऽस्ति यस्येह राजा यः स्वयमेव तु ।
स स्वराट् तस्य भावश्च स्वाराज्यमिह कीर्त्यते ॥२१॥

आप्नोति स्वाराज्यमित्यत्र स्वाराज्यशब्दार्थमाह । नान्य इति । व्यवहारभूमिर्वाक्यं चेहशब्दाभ्यां परामृश्यते ॥ २१ ॥

मनो गीश्चक्षुषां चैव श्रोत्रविज्ञानयोरपि ।
आप्नोति पर्युपासीनः स्वाराज्यं नात्र संशयः ।
तत एतत्फलं दिव्यं यथोक्तोपासनाद्भवेत् ॥ २२ ॥

आप्नोति मनसस्पतिमित्यादि व्याकरोति । मनो गीरिति । एतत्ततो भवतीति व्याकुर्वन्फलमुपसंहरति । तत इति ॥ २२ ॥

व्याहृत्यात्मन एतस्य रूपसंक्रमयेऽधुना ।
उपासनविधित्सार्थे परो ग्रन्थोऽवतार्यते ॥२३॥

आकाशशरीरं ब्रह्मेत्यादेर्वाक्यस्य तात्पर्यमाह । व्याहृत्यात्मन इति । कुत्र हिरण्यगर्भरूपसंक्रान्तिरुपयुज्यते तत्राह । उपासनेति ॥ २३ ॥

---

१ (ग.) °त्वा या°। २ (ख, ग.) यत्र केशा°। ३ (ग. घ.) °यौ स प्र°। ४ (ग. घ. ङ.) °भैस्य रू°।

वियद्देहमिदं ब्रह्म वियत्सदृशमेव वा।
मूर्तामूर्तस्वभावं च त्रैलोक्याद्यात्मतो भवेत् ॥२४॥

तात्पर्यमुक्त्वा पदार्थमाह। वियदिति। इदं ब्रह्मेत्याकाशोपाधिकमुच्यते तस्य च वियता सूक्ष्मत्वव्यापित्वादिभिः सादृश्यं सत्यात्मेत्यस्यार्थमाह। मूर्तामूर्तेति। सच्चत्यच्चेति भूतपञ्चकं मूर्तामूर्तात्मकं सत्यं तदात्मा स्वभावो यस्य तद्ब्रह्म सत्यात्मेत्यर्थः ॥ २४ ॥

इन्द्रियारमणं चैव मनआनन्दमेव च।
शान्त्या समृद्धमत्यर्थं ब्रह्मैतदमृतं परम् ॥ २५ ॥

प्राणाराममित्यादेरर्थमाह। इन्द्रियेति। प्राणेष्विन्द्रियेष्वारमणमाक्रीडा यस्य यत्र वा तेषामारमणं तद्ब्रह्म प्राणारामं मनआनन्दमानन्दकरमेवं यस्य तद्ब्रह्म तथेत्यर्थः। शान्तिसमृद्धममृतमिति पदद्वयस्यार्थमाह। शान्त्येति ॥ २५ ॥

प्राचीनयोग्योपास्वेतद्यथाव्याख्यातलक्षणम्।
माहाचमस्य आचार्य अन्तेवासिनमुक्तवान् ॥ २६ ॥

उक्तविशेषणमपरं ब्रह्मात्मत्वेनोपास्यमित्याचार्यनियोगं शिष्यं प्रति दर्शयति। प्राचीनेति ॥ २६ ॥ इति पञ्चमोऽनुवाकः ॥ ५ ॥

पाङ्क्तस्वरूपेणैतस्य भूयोऽप्यन्यदुपासनम्।
उदारफलसिद्ध्यर्थं पृथिवीत्युच्यतेऽधुना ॥ २७ ॥

प्रकृतस्यैव ब्रह्मणो हिरण्यगर्भस्य पाङ्क्तस्वरूपेणोपासनं वक्तव्यमित्युत्तरानुवाकप्रवृत्तिरित्याह। पाङ्क्तेति ॥ २७ ॥

पञ्चभिर्यत आरब्धं जगत्पाङ्क्तमतो भवेत्।
यज्ञः कृप्तो भवेदेवं पाङ्क्तो यज्ञ इति श्रुतिः ॥ २८ ॥

कथं हिरण्यगर्भस्य पङ्क्तित्वमित्याशङ्क्य पञ्चभूतारब्धत्वाज्जगदात्मा हिरण्यगर्भः पाङ्क्तो भवतीत्याह। पञ्चभिरिति। एवं सति जगदात्मनो हिरण्यगर्भस्य यज्ञत्वमपि क्लृप्तं भवतीत्याह। यज्ञ इति ॥ २८ ॥

---

१ (क. ख.) °त्मनो भ°। २ (च.) °स्य वि°। ३ (ङ.) °ति। भू°। ४ (ग घ.) °मणं क्री°। ५ (क. ख. ङ. °न्दक°। ६ (क.) °र्भं कर्तव्य°।

यज्ञेन परिक्लृप्तेन त्रैलोक्यात्मानमश्नुते ।
पाङ्क्तत्वसिद्धये तस्मादारब्धैषा परा श्रुतिः ॥ २९ ॥

पत्नीयजमानपुत्रदैवमानुषवित्तैः पञ्चभिः संपाद्यतया यज्ञस्य पाङ्क्तत्वं वक्तव्यं जगतो यज्ञत्वं किमर्थं कल्प्यते तत्राह । यज्ञेनेति । पाङ्क्तात्मकयज्ञरूपप्रजापत्युपासनात्प्रजापतिरेव भवतीत्यर्थः । पाङ्क्तात्मकजगदुपासनस्य विशिष्टफलवत्त्वाज्जगतो वक्तव्यं पाङ्क्तत्वमित्युत्तरग्रन्थप्रवृत्तिरित्युपसंहरति । पाङ्क्तत्वेति ॥ २९ ॥

दिगन्तं लोकपाङ्क्तं स्यान्नक्षत्रान्तं च दैवतम् ।
आत्मान्तं भूतपाङ्क्तश्च विराडात्माधिकारतः ॥३०॥

वाक्यत्रयमाश्रित्य पङ्क्तिविभागं दर्शयति । दिगन्तमिति । कोऽसावात्मेतिस्प्रकरणादात्मशब्देन विराडुच्यत इत्याह । विराडिति ॥ ३० ॥

उपलक्षणमेतत्स्याद्देवतालोकपाङ्क्तयोः ।
अधिभूतमिति वक्ष्यामोऽथाध्यात्ममतः परम् ॥३१॥

इत्यधिभूतमित्यत्र भूतग्रहणस्य विवक्षितमाह । उपलक्षणमिति । अथाध्यात्ममित्यत्र तात्पर्यमाह । वक्ष्याम इति ॥ ३१ ॥

वायुपाङ्क्तं समानान्तं त्वगन्तं चैन्द्रियं तथा ।
चर्मादि धातुपाङ्क्तं च विश्वमेतावदुच्यते ॥ ३२ ॥

वाक्यत्रयमाश्रित्याध्यात्मिकं पाङ्क्तत्रयं विभजते । वायुपाङ्क्तमिति ॥ ३२ ॥

पाङ्क्तमेव जगत्सर्वमिति दृष्ट्वाऽभ्यधादृषिः ।
पाङ्क्तं वा इदमाब्रह्मस्तम्बं नान्यदिति स्म ह ॥३३॥

एतदधिविधायेत्यादेरर्थमाह । पाङ्क्तमेवेति । ऋषिर्वेदो वा यथोक्तदर्शनसंपन्नो वा कश्चित्। निपातद्वयं वस्त्वन्तरासत्त्वप्रसिद्ध्यर्थम् ॥ ३३ ॥

आध्यात्मिकेन पाङ्क्तेन संख्यासामान्यकारणात् ।
बलयत्यात्मभावेन पाङ्क्तं बाह्यमशेषतः ॥ ३४ ॥

उत्कृष्टदृष्टिर्निकृष्टे कर्तव्येतिन्यायादाध्यात्मिके पाङ्क्तत्रयमितरपाङ्क्तत्रयात्मना विद्यादित्यभिप्रेत्य पाङ्क्तपङ्क्तस्योपासनाप्रकारं दर्शयन्पाङ्क्तेनैव पाङ्क्तं स्पृणोतीत्यस्यार्थमाह । आध्यात्मिकेनेति ।. संख्यासामान्यं पञ्चसंख्यावत्त्वम् ॥ ३४ ॥
इति षष्ठोऽनुवाकः ॥ ६ ॥

---

१ (ग. घ.) °मिदं व°। २ (क. ख.) °दमर्थं । ३ (क. ख. ग. घ.) °न्तं चेन्द्रि°। ४ (ग. घ.) दिद स्म। ५ (ग. घ.) °त। कल्प° (ट.) °त। वल°।

सर्वोपासनशेषस्य प्रणवस्याधुनोच्यते ।
उपासनमलं यस्माद्ब्रह्मणोः प्राप्तये द्वयोः ॥ ३५ ॥

ओमिति ब्रह्मेत्याद्यनुवाकस्य तात्पर्यमाह । सर्वेति । उपासनाशब्देन शास्त्रीयं सर्वं कर्म लक्ष्यते । उपासनं परापरब्रह्मदृष्ट्येतिशेषः । तथोपासितेस्य प्रणवस्य तत्प्राप्तिसाधनत्वादितिहेतुमाह । अलमिति । वेदविहिताः सर्वाः क्रियाः प्रणवमुच्चार्य प्रवर्त्यन्ते तेन तस्य श्रद्धागृहीतत्वात्तत्परिहारेणोपदिष्टं ब्रह्म न बुद्धिमारोहेदतस्तमादायैतस्मिन्नुभयविधब्रह्मदृष्टिर्विधीयत इत्यर्थः ॥ ३५ ॥

परस्य ब्रह्मणो यस्मादपरस्य च चोद्यते ।
आलम्बनतया तस्मात्स एवात्राभिधीयते ॥ ३६ ॥

परापरब्रह्मदृष्ट्यालम्बनत्वेनोंकारस्य परं चापरं चेत्यादौ विधानान्न तदनुवादेन ब्रह्मदृष्टिरत्र विधित्सितेत्याह । परस्येति ॥ ३६ ॥

ॐमित्येतच्छब्दरूपं ब्रह्मेति मनसा सदा ।
धारयेत्स्तुतये तस्य परो ग्रन्थोऽवतार्यते ॥ ३७ ॥

ओंकारो ध्येयत्वेनात्रोच्यते न तु सर्वशेषत्वेनेत्येवं तात्पर्यमुक्त्वोमिति ब्रह्मेत्यस्यार्थं माह । ओमित्येतदिति । उपास्यत्वादोंकारस्य स्तुत्यर्हत्वं गृहीत्वा समनन्तरसंदर्भस्य स्तुतिपरत्वमाह । स्तुतय इति ॥ ३७ ॥

तद्यथा शङ्कुनेत्येवं सर्वमोमिति युज्यते ।
अभिधानादृते यस्मादभिधेयं न विद्यते ॥ ३८ ॥

ओमितीदं सर्वमित्योंकारस्य कथं सर्वत्वमुच्यते सर्वस्यैतत्कार्यत्वादित्याशङ्क्य तस्य सर्वत्वे श्रुतियुक्ती क्रमेण दर्शयति । तद्यथेति ॥ ३८ ॥

अनुज्ञानुकृतिस्तद्वत्सर्वत्रोमिति कीर्त्यते ।
ओश्रावयेत्यनुज्ञाता यत आश्रावयन्ति च ॥ ३९ ॥

ओमित्येतदनुकृतीत्यत्रानुकृतिशब्देनानुज्ञा लोकवेदयोरुच्यते । तथा च तस्य सर्वात्मत्वेनोत्कर्षवदनुज्ञारूपत्वाच्चोत्कर्षः सिध्यतीत्याह । अनुज्ञेति । अप्योश्रावयेत्यादेरर्थमाह । ओश्रावयेत्तीति । अतोऽनुज्ञारूपत्वमोंकारस्य प्रकटमितिशेषः ॥ ३९ ॥

१ (ग. घ.) °तम°। २ (क. ख.) °रोहयेद्°। ३ (ग. घ. ङ. च.) °स्तदादा° (च.) °स्तदारोहायै°। ४ (ग. घ.) °न्तरं सं°। ५ (च.) °स्यानुकार्य°। ६ (क. ख. ङ.) °युक्तिक्र°।

प्रसौति ह्यनुजानाति ब्रह्मोमित्येव चर्त्विजम् ।
प्रवक्ष्यन्ब्राह्मणो वेदमोमित्येवं प्रयुज्यते ॥ ४० ॥

ओमिति ब्रह्मा प्रसौतीत्यस्यार्थमाह । प्रसौतीति । ओमिति ब्राह्मण इत्यादेरर्थमाह । प्रवक्ष्यन्निति ॥ ४० ॥

उपाप्नवानि ब्रह्मेति स च वेदमवाप्नुयात् ॥ ४१ ॥
परात्मा वा भवेद्ब्रह्म स तदोंकारपूर्वकम् ॥
प्राप्नोत्येव न संदेह उपासीतात ओमिति ॥ ४२ ॥

किमभिसंधायोंकारपूर्वकं वेदाध्ययनं करोति तत्राह । उपाप्नवानीति । ब्रह्मशब्देन वेदो गृह्यते ॥ ४१ ॥

ब्रह्मशब्दस्यार्थान्तरमुक्त्वा तत्रापि वाक्यं योजयति । परात्मेति । उपासकः सर्वेनाम्ना परामृश्यते ॥ ४२ ॥ इति सप्तमोऽनुवाकः ॥ ७ ॥

यथोक्तोपासनादेव स्वाराज्यफलसंश्रयात् ।
नैष्फल्ये कर्मणां प्राप्ते तत्साफल्यार्थ उत्तरः ॥४३॥

आप्नोति स्वाराज्यमित्युपासनादेव स्वाराज्यश्रवणात्कर्मणामानर्थक्यमाशङ्क्य तदर्थवत्त्वं वक्तुमृतं चेत्याद्युत्तरानुवाकप्रवृत्तिरित्याह । यथोक्तेति ॥ ४३ ॥

स्वाध्यायोऽध्ययनं ज्ञेयं तथाचाध्यापनं परम् ।
आधातव्या यथाशास्त्रमग्नयः श्रेयसे तथा ॥
होतव्यमग्निहोत्रं च कुर्याच्चातिथिपूजनम् ॥ ४४ ॥

ऋतसत्यशब्दयोरर्थस्य प्रथमानुवाके गतत्वादिदानीं स्वाध्यायप्रवचनशब्दयोरर्थमाह । स्वाध्याय इति । अग्नयश्चेत्यादेरर्थं कथयति । आधातव्या इति ॥ ४४ ॥

तथा संव्यवहारश्च मानुषं स्यादसंशयम् ॥ ४५ ॥
उत्पाद्या च प्रजा योग्या प्रजनं चर्तुसेवनम् ।
निवेशनं सुतस्येह प्रजातिरितिगम्यताम् ॥ ४६ ॥

मानुषं चेत्यादौ मानुषशब्दार्थमाह । तथेति । लौकिकः संव्यवहारो विवाहादिः ॥ ४५ ॥

प्रजाप्रजननशब्दयोरर्थमाह । उत्पाद्याचेति । प्रजातिशब्दार्थं विवक्षितं दर्शयति । निवेशनमिति ॥ ४६ ॥

---

१ (ग. घ. ङ.) °र्त्विजः । प्र° । २ (क.) ब्रह्मैव स । ३ (ग. घ.) °तोपासना° । ४ (ग. घ.) °वणात्प्र° । ५ (ग घ.) °त्किंकर्म° ।

उक्तेषु व्यापृतेनापि कार्ये एव प्रयत्नतः ।
स्वाध्यायंप्रवचने तेन प्रत्येकं च ग्रहस्तयोः ॥४७॥

पुनः पुनः स्वाध्यायप्रवचनग्रहणस्य तात्पर्यमाह । उक्तेष्विति ॥ ४७ ॥

वेदार्थबोधनं नास्ति स्वाध्यायेन विना यतः ।
तथा-प्रवचनेनातो धर्मार्थे च ग्रहस्तयोः ॥ ४८ ॥

कर्तव्यान्तरे व्यापृतेनापि स्वाध्यायप्रवचने कर्तव्ये इत्यत्र हेतुमाह । वेदार्थेति । अतस्तयोः प्रत्येकं ग्रहणमितिशेषः । प्रवचनेन विनेति संबन्धः । पुण्योपचयहेतुत्वाच्च प्रत्येकं ग्रहणं तयोरित्याह । धर्मार्थं चेति ॥ ४८ ॥

सत्यमेव तु वक्तव्यमिति सत्यवचा जगौ ।
राथीतरो मुनिस्तद्वत्तप एवेत्युवाच ह ॥ ४९ ॥
पुरुशिष्टस्य तनयः कर्तव्यं तु महातपाः ।
मुद्गलस्याऽऽत्मजश्चाह कर्तव्ये यत्नमास्थितैः ॥
स्वाध्यायप्रवचने एव ते एव तु तपो यतः ॥५०॥

ऋषीणां मतभेदोपन्यासेन स्वाध्यायप्रवचनयोरादरं सूचयति । सत्यमेवेत्यादिना ॥ ४९ ॥ ५० ॥ इत्यष्टमोऽनुवाकः ॥ ८ ॥

स्वाध्यायार्थश्च विज्ञेयः अहं वृक्षस्य रेरिवा ।
इत्यादिरुत्तरो ग्रन्थो विशुद्धिर्हि ततो धियः ॥५१॥

अहं वृक्षस्येत्यादिमन्त्राम्नायस्य तात्पर्यमाह । स्वाध्यायार्थश्चेति । अत्र हि प्रकरणे मन्त्रपाठो जपार्थो गृह्यते । इषेत्वेति शाखामाच्छिनत्तीतिवदन्यत्र विनियोजकश्रुत्याद्यनुपलम्भात्ं चाक्षितमसीत्यादिवदुपासनादि शेषत्वमस्य वक्तुं शक्यं ज्ञानसाधनक्रियाविधेः प्रक्रान्तत्वादित्यर्थः । मन्त्रजपस्य फलमाह । विशुद्धिरिति ॥ ५१ ॥

विशुद्धमनसो यस्मात्सम्यग्ज्ञानोदयो भवेत् ।
मन्त्राम्नायोऽयमारब्ध एतस्मात्कारणात्परः ॥५२॥

विशुद्धिप्रयोजनमाह । विशुद्धेति ॥ ५२ ॥

---

१ (क. ख.) °यत्र°। २ (क. ख.) °चनेग्र°। ३ (ग. घ.) °न्तरव्या°। ४ (ग. घ.) °त्रवाऽक्षि°।

उच्छित्तिलक्षणस्याहं विश्वस्य जगतः सदा ।
अस्य संसारवृक्षस्य रेरिवा जनकोऽस्म्यहम् ॥५३॥

अहं वृक्षस्य रेरिवेत्यस्यार्थं कथयति । उच्छित्तीति । अहमिति मन्त्रदृग्ब्रह्मभूतो गृह्यते ॥ ५३ ॥

कीर्तिः ख्यातिमर्म ज्ञेया गिरेः पृष्ठमिवोच्छ्रिता ।
ऊर्ध्वं तत्कारणं ब्रह्म पवित्रं भवहानतः ॥ ५४ ॥

कीर्तिः पृष्ठं गिरेरिवेत्यस्यार्थमाह । कीर्तिरिति । ऊर्ध्वपवित्र इत्यस्यार्थमाह । ऊर्ध्वमिति । तच्च पवित्रं भवेदितिसंबन्धः । पवित्रत्वं साधयति । भवेति । वाक्योत्पन्नबुद्धिवृत्तिद्वारेणेतिशेषः ॥ ५४ ॥

यस्य सोऽहं भवेदूर्ध्वं पवित्रं पावनं परम् ॥ ५५ ॥
वाजमन्नमिति ज्ञेयं तद्वतीव दिवाकरे ।
स्वमृतं परमं ब्रह्म बुद्धावस्यामहं सदा ॥ ५६ ॥

पवित्रत्वं स्पष्टयति । पावनं परमिति । यस्य ममेदं स्वरूपमुक्तलक्षणं ब्रह्म सोऽहमूर्ध्वपवित्रोऽस्मीति योजना ॥ ५५ ॥

वाजिनीवेत्यादेरर्थमाह । वाजमिति । यथान्नवत्यादित्ये प्रकटं ब्रह्माहमस्मीत्यादित्यो मन्यते तथाऽस्यां बुद्धौ स्वमृतं शोभनममृतमहमस्मीत्यर्थः ॥ ५६ ॥

द्रविणं धनमित्याहुरिह स्वात्मावबोधनम् ।
सवर्चसं सुदीप्तं स्यान्मोक्षामृतफलप्रदम् ॥ ५७ ॥

द्रविणमित्यस्यार्थमाह । द्रविणमिति । तत्रहेतुत्वेनोत्तरपदमवतार्य व्याचष्टे । सवर्चसमिति ॥ ५७ ॥

अक्षितोऽक्षीणरूपत्वाद्वेदानुवचनं त्विदम् ।
त्रिशङ्कोर्ब्रह्मभूतस्य ह्यार्षं संदर्शनं परम् ॥५८॥

सुमेधा अमृतोक्षित इत्यत्र पदद्वयस्य प्रसिद्धार्थत्वादविवक्षित इतिपदस्यार्थमाह । अक्षित इति । अक्षीणरूपत्वं षड्भावविकाररहितत्वमिति त्रिशङ्कोरित्यादेरर्थमाह । वेदेति । ऋषेस्त्रिशङ्कोर्ब्रह्मभावं प्राप्तस्य ब्रह्मवेदनमनु यदेतदार्षमात्मीयं परं दर्शनं तस्य स्वानुभावस्य प्रकटीकरणमेवं तद्वचनमित्यर्थः ॥ ५८ ॥

---

१ (क.) ॑वेत्यस्यार्थ॑। २ (ग. घ.) ॑तारयन्व्याच॑। ३ (ग. घ. ङ.) ॑रिरि॑। ४ (ङ.) ॑मेत॑।

पावनोऽस्य जपः श्रेयान्ब्रह्मज्ञानस्य जन्मने ।
मुमुक्षुः प्रयतस्तस्माज्जपेदेतत्समाहितः ।
कर्मप्रसङ्ग उक्तत्वादयमर्थोऽवसीयते ॥ ५९ ॥

मन्त्राम्नायोऽस्मिन्प्रकरणे जपार्थः स्यादित्युक्तमधिकविवक्षया पुनरनुवदति । पावनोऽस्येति । तदेवाधिकं दर्शयति । कर्मेति । ऋतं चेत्यादौ पूर्वत्र वेदमनूच्येत्यादावुत्तरत्र कर्माभिधानान्मध्ये मन्त्राम्नायो जपार्थ एवेति गम्यते । जपस्य कर्मत्वादित्यर्थः ॥ ५९ ॥

मुमुक्षोस्तत्परस्यैवं श्रौतस्मार्तेषु कर्मसु ।
आर्षं च प्रातिभं ज्ञानमाविर्भवति मोक्षदम् ॥६०॥

न केवलं जपस्यैव ब्रह्मज्ञानं फलं किंतु सर्वकर्मणामित्याह । मुमुक्षोरिति । ईश्वरार्थेषु श्रौतेषु स्मार्तेषु च कर्मसु फलाभिसंधिवर्जितस्येश्वरायेत्येवं तात्पर्येण प्रवृत्तस्य परिशुद्धबुद्धेर्मोक्षमेवापेक्षमाणस्यार्षं यथार्थं प्रातिभमुपदेशानपेक्षं मोक्षफलज्ञानमुद्भावयतीत्यर्थः ॥ ६० ॥ इति नवमोऽनुवाकः॥ ९ ॥

आरम्भो नियमार्थः स्यादात्मज्ञानोदयात्पुरा ।
श्रुतेर्वेदमनूच्येति श्रुतिश्चैवानुशास्ति हि ॥ ६१ ॥

वेदमनूच्यादेरनुवाकस्य तात्पर्यमाह । आरम्भ इति । ज्ञानस्याऽऽत्मविषयस्य मोक्षसाधनस्योदयात्पूर्वं नियमेनावश्यंभावेन कर्तव्यानि नित्यनैमित्तिकानि कर्माणीत्येको नियमः । तानि पूर्वमेव कर्तव्यानीत्यपरो नियमः । तस्योभयविधस्य नियमस्य सिद्ध्यर्थो वेदमनूच्येति श्रुतेरारम्भः स्यादित्यर्थः । ज्ञानात्पूर्वमवश्यमनुष्ठेयानि कर्माणीत्यस्मिन्नियमे प्रमाणमाह । श्रुतिश्चेति । विविदिषन्तीत्यादिका श्रुतिः । चशब्दात्कषायपङ्क्तिः कर्माणीत्यादिका स्मृतिश्च यथोक्तमर्थमभिवदतीत्यर्थः ॥ ६१ ॥

विद्योत्पत्त्यर्थमेतानि कर्तव्यानि मुमुक्षुणा ।
वक्ष्यमाणानि कर्माणि यावदात्मावबोधनम् ॥६२॥
आत्मज्ञानोदयादूर्ध्वं पुरुषार्थावसानतः ।
स्वतः सिद्धेश्च मोक्षस्य कर्मकाण्डमनर्थकम् ॥६३॥

तथापि प्रागेव कर्माणि कर्तव्यानीति नियमो न युज्यते । ज्ञानादूर्ध्वमपि यावज्जीवश्रुत्या तेषां कर्तव्यत्वादित्याशङ्क्याऽऽह । विद्येत्यादिना ॥६२॥६३॥

१ (ग. घ.) 'रक' । २ (ग. घ. ङ) 'स्यैव श्रौं' । ३ (क. ख.) विद्योत्पत्त्या'दि' ।

तस्मात्सर्वविशुद्ध्यर्थं कार्यं कर्म मुमुक्षुभिः ।
प्रागेव ब्रह्मविज्ञानान्नियमेनेति ह श्रुतिः ॥ ६४ ॥

उत्पन्ने ज्ञाने विवक्षितस्य मोक्षस्य सिद्धत्वादुत्तरकालं कर्तव्याभावात्प्रागेव कर्तव्यानि कर्माणीत्युपसंहरति । तस्मादिति ॥ ६४ ॥

आनर्थक्यापनुत्त्यर्थमृतादीनां पुरा श्रुतिः ।
नियमार्थमिहोक्तिः स्यादात्मज्ञानोदयार्थिनः ॥ ६५ ॥

ऋतं चेत्यादौ कर्माण्येव कर्तव्यत्वेनोक्तानि वेदमनूच्येत्यादिप्रकृतश्रुतावपि तान्यपि कर्तव्यत्वेनोच्यन्ते तेन पुनरुक्तिरित्याशङ्क्याऽऽह । आनर्थक्येति । उपासनादेव स्वाराज्यश्रवणादानर्थक्यं कर्मणामाशङ्क्य तत्परिहारार्थमृतं चेत्यादिरनुवाको वेदमनूच्येत्यादिस्तु नियमद्वयसिद्ध्यर्थ इति न पुनरुक्तिरित्यर्थः ॥ ६५ ॥

अध्याप्य निखिलं वेदमन्तेवासिनमादरात् ।
सत्यं वदेत्येवमादि गरीयाननुशास्ति हि ॥ ६६ ॥

संगतिं दर्शयित्वा वाक्यमवतारयति । अध्याप्येति । सत्यं वद धर्मं चरेत्याद्यनुशासनम् ॥ ६६ ॥

यथोपलब्धं यद्वाक्यं हिंसाकल्कविवर्जितम् ।
सर्वधर्मविदः प्राज्ञास्तत्सत्यं प्रतिजानते ॥ ६७ ॥

तत्र सत्यशब्दार्थमाह । यथोपलब्धमिति । हिंसाकल्काभ्यां विवर्जितम् । कल्को भावदोषः ॥ ६७ ॥

अग्निहोत्राद्यनुष्ठानं धर्ममाहुर्विपश्चितः ।
प्रमादं मा कृथास्तद्वत्स्वाध्यायं प्रति सर्वदा ॥ ६८ ॥

धर्मशब्दार्थमाह । अग्निहोत्रादीति । स्वाध्यायादित्यादेरर्थमाह । प्रमादमिति । विहिताकरणं प्रमादः । तद्वत्सत्यवदनाद्यनुष्ठानवदित्यर्थः ॥ ६८ ॥

तथाभिलषितां न्याय्यामाचार्यायाथ दक्षिणाम् ।
दत्त्वा दारांस्त्वमाहृत्य माच्छेत्सीः सुतसन्ततिम् ॥ ६९ ॥

आचार्यायेत्यादेरर्थमाह । तथेति । अध्ययननिर्वृत्त्याऽऽनन्तर्यमथशब्दार्थः ॥ ६९ ॥

१ (ग. घ.) °कालक°। २ (घ.) °दिश्रुतिर्नियं°। ३ (च.) °द्व्यर्थोवि°।

विस्मृत्याप्यनृतं नित्यं न च वक्तव्यमण्वपि ।
इत्यस्य प्रतिपत्त्यर्थं सत्यादीति पुनर्वचः ॥ ७० ॥

सत्यान्न प्रमदितव्यमित्यस्यार्थमाह । विस्मृत्यापीति ॥ ७० ॥

एवं शिष्टेष्वपि ज्ञेयं प्रसिद्धार्थत्वकारणात् ।
स्पष्टार्थ उत्तरो ग्रन्थः स्वयमेवावगम्यताम् ॥७१॥

उक्तं न्यायं धर्मान्न प्रमदितव्यमित्यादिवाक्येष्वतिदिशति । एवमिति । तेष्वक्षरार्थो न वक्तव्यो ग्रन्थस्य स्पष्टार्थत्वेन व्याख्यानानपेक्षत्वादित्याह । प्रसिद्धार्थत्वेति ॥ ७१ ॥

उक्तेभ्योऽन्यानि कर्माणि शिष्टाचारोपगानि तु ।
अनाशङ्कितदोषाणि त्वया कार्याणि यत्नतः ॥७२॥

यान्यनवद्यानीत्यादेरर्थमाह । उक्तेभ्य इति । सत्यादिभ्य इति यावत् ॥७२॥

समाशङ्कितदोषाणि शिष्टैराचरितान्यपि ।
सावद्यानि न कार्याणि कर्माणीह कदाचन ॥७३॥

नो इतराणीत्यस्यार्थमाह । समाशङ्कितेति ॥ ७३ ॥

श्रुतिस्मृत्यविरुद्धानि शिष्टाचारोपगानि च ।
अस्मत्कर्माणि कार्याणि न विरोधीनि कर्हिचित् ॥७४॥

यान्यस्माकमित्यादेरर्थमाह । श्रुतीति ॥ ७४ ॥

अस्मत्तो ब्राह्मणा ये स्युः श्रेयांसः शास्त्रवेदिनः ।
तेषामासनदानेन श्रमापनयनं कुरु ॥ ७५ ॥

ये के चास्मदित्यादेरर्थं कथयति । अस्मत्त इति । श्रेयांसः समा हीनाश्चेति द्रष्टव्यम् ॥ ७५ ॥

तेषामाख्यायिकायां वा न वाच्यं संभ्रमात्त्वया ।
तदुक्तसारं त्वादाय नापकार्यं यथाबलम् ॥ ७६ ॥

तस्यैवार्थान्तरमाह । तेषामिति । एतेषां कार्यविघाताय मम सामर्थ्यमस्तीति कृत्वा तेषामपकाराय न प्रयतितव्यमित्याह । नापकार्यमिति ॥ ७६ ॥

---

१ (ग.घ.) °तं नैव त्वया व°। २ (ख.ङ.) °त्यं नैव व°। ३ (ख.) °माना ह्री°।

श्रद्धयैव हि दातव्यमश्रद्धाभाजनेष्वपि ॥ ७७ ॥
श्रीर्विभूतिस्तया देयं देयं चापि सदा ह्रिया ।
भिया भयेन दातव्यं संविन्मैत्री तयाऽपि च ॥७८॥

श्रद्धया देयमित्यस्यार्थमाह । श्रद्धयैवेति । एवकारेण श्रद्धापूर्वकं दानं प्रशस्तं न त्वश्रद्धया दातव्यं तस्य फलविकलत्वादित्येतदुच्यते ॥ ७७ ॥

भिया देयमित्यादेरर्थमाह । श्रीरिति । ह्रिया स्वापेक्षया हीनधनेषु दानं दृष्ट्वा लज्जयेतियावत् । भिया राजादिभयेन विवाहादौ प्रसिद्धो लौकिकसंव्यवहारः संविन्मैत्रीतिचोच्यते ॥ ७८ ॥

एवं चेद्वर्तमानस्य श्रौतस्मार्तेषु कर्मसु ।
वृत्ते वा विचिकित्सा स्यात्संशयो मतिविभ्रमात् ॥
तस्मिन्कर्मणि वृत्ते वा विप्रा ये सूक्ष्मदर्शिनः ॥७९॥

अथ यदीत्यादेरर्थमाह । एवं चेदिति । श्रुतिस्मृत्यनुसारेण तत्र तत्र वर्तमानस्य कुतः संशयस्तत्राह । मतीति । संमर्शिन इत्यस्यार्थमाह । सूक्ष्मेति ॥ ७९ ॥

स्वतन्त्रा अभियुक्ताश्च ऋजवः कामवर्जिताः ।
यथा ते तत्र वर्तन्ते वर्तेथास्त्वं तथैव च ॥ ८० ॥

युक्तत्वं स्वातन्त्र्यमपरप्रयुक्तत्वमायुक्तत्वमभियुक्तत्वमलूक्षत्वमृजुत्वमक्रूरत्वं धर्मकामत्वमदृष्टार्थित्वम् ॥ ८० ॥

तथा शङ्कितदोषेषु यथोक्तमुपपादयेत् ।
आदेशोऽत्र विधिर्ज्ञेय उपदेशः सुताय च ॥८१॥

अथाभ्याख्यातेष्वित्यादेरर्थमाह । तथेति । अभिशस्तेष्वपि यथैवंविधाः पुरुषा वर्तन्ते तथा त्वयापि वर्तितव्यमित्यर्थः । एष आदेश इत्यस्यार्थमाह । आदेशोऽत्रेति । सत्यं वदेत्यादिनोक्तोऽर्थो विधिरादेशोऽनुष्ठेय इत्यर्थः । एष उपदेश इत्यस्यार्थमाह । उपदेश इति ॥ ८१ ॥

रहस्यं सर्ववेदानां वेदोपनिषदुच्यते ।
अनुशासनमीशस्य ज्ञेयमेतत्परात्मनः ॥ ८२ ॥

एषा वेदोपनिषदिति व्याचष्टे । रहस्यमिति । एतदनुशासनमिति व्याकरोति । अनुशासनमिति ॥ ८२ ॥

---

१ ( ग. घ. ) °दित्युच्य° । २ ( घ. ) °तव्यं प° । ३ ( क. ख. ) °भिप्रयु° ।

यस्मादेवमतः सद्भिर्यथोक्तं यत्नमास्थितैः ।
उपासितव्यं कर्तव्यमेवं चैतत्समाचरेत् ॥ ८३ ॥

उपास्यमुपासितव्यमिति पदद्वयस्यार्थं कथयति । यस्मादिति । यथोक्तमादेशोपदेशाख्यं यस्माद्वेदोक्तं तस्माद्यत्नमास्थितैः सद्भिरेतत्मार्गगतं सत्याद्युपासितव्यं कर्तव्यतया बुद्धौ ध्यातव्यम् । ततश्च यथाव्याख्यातं तथा कुर्यादित्येतदुपास्यमित्यनेन विवक्षितमित्यर्थः ॥ ८३ ॥ इति दशमोऽनुवाकः ॥ १० ॥

प्रमादोत्थादपन्यायाद्गुरुशिष्याभिसंगतेः ।
प्रसक्तो यस्तयोर्द्वेषस्तच्छान्त्यै शान्तिरुच्यते ॥८४॥

संहितोपनिषदारम्भे साधारणी शान्तिरुदाहृता संप्रति तदवसाने सगुणविद्यानामुक्तत्वात्तदसाधारणीं शान्तिमुदाहरति । प्रमादेति । अपरविद्यार्थिनः शिष्यस्य तदुपदेष्टुराचार्यस्य च परस्परसंगतिं निमित्तीकृत्य प्रमादकृतादपराधात्पापातिक्रमसंभवाद्यस्तयोर्मिथो द्वेषः शङ्क्यते तदुपशान्त्यर्थं शं नो मित्र इत्याद्या शान्तिरिहोक्तेत्यर्थः ॥ ८४ ॥

स्याज्ज्ञानं फलवद्यस्माच्छान्तान्तःकरणे गुरौ ।
तस्येश्वरेणानन्यत्वाद्भूयः शान्तिरियं ततः ॥ ८५ ॥
भाव्यं तु परिहाराय तन्मा मावीदितीरणम् ।
आत्मनो ब्रह्मतां यस्मात्स्वतः सिद्धां प्रवक्ष्यति ॥ १८६ ॥

इति शिक्षाया वार्तिकानि समाप्तानि ॥

गुरुशिष्ययोर्मिथो द्वेषे स्थितेऽपि को दोषः स्यात्तत्राऽऽह । स्यादिति । गुरौ प्रसन्नचित्ते सत्येव तदुपदिष्टं ज्ञानं तत्प्रसादादासादितं रागद्वेषादिरहितस्य शिष्यस्य सफलं संपद्यते तस्मात्तयोर्द्वेषस्थितिरयुक्तेत्यर्थः । आचार्यस्य बुद्धिप्रसादार्थं शिष्येण प्रयत्नवता भवितव्यमित्यत्र हेतुमाह । तस्येति । सह नाववत्वित्यादिशान्तिपाठस्य तात्पर्यमाह । भूय इति । यतस्तदपरं ब्रह्म मामाचार्यं चावीदरक्षदित्येवमीरणमिह मध्यमायां शान्तौ दृश्यते।ततः सगुणविद्याविषयशान्तेरतिप्रवृत्तत्वादियं शान्तिर्भूयो निर्दिश्यमाना निर्गुणविद्याविषया भविष्यति तत्रापि भाव्यं संभावितमेवोपसर्गजातमतस्तत्परिहारार्थं पुनः शान्तिरर्थवतीत्यर्थः । कुत्र तर्हि निर्गुणविद्या निगद्यते तत्राऽऽह । आत्मन इति । आत्मनस्त्वंपदलक्ष्यस्य तत्पदलक्ष्यब्रह्मतां नित्यसिद्धामविद्यातिरोधानव्यावृत्त्यर्थं यतो ब्रह्मविदित्याद्या श्रुतिर्वक्ष्यति । अतो निर्गुणविद्या वल्लीद्वये भविष्यतीत्यर्थः ॥ १८६ ॥

इति प्रथमवल्लीशिक्षावार्तिकटीका समाप्ता ॥

---

१ (क.ङ च.) °पः शक्यते । २ (ग.घ.) °वृत्तित्वा° । ३ (क.ख.) °स्तस्य परि° ।

## ब्रह्मवल्ली ।

कामादयो यदज्ञानात्तज्ज्ञानात्स्यादकामता ।
अतःपरं तदैकात्म्यं वक्ष्यतेऽज्ञानघस्मरम् ॥ १ ॥

सगुणविद्यामुक्त्वा निर्गुणविद्यां वक्तुमारभमाणो नमस्कारव्याजेन वल्लीद्वयार्थं संक्षिप्य कथयति ॥ १ ॥

नानागतमनैतिह्यं प्रत्यगेकमविक्रियम् ।
अनादेयमहेयं यन्नमस्तस्मै सदादृशे ॥ २ ॥

नानागतमिति । कालत्रयानवच्छिन्नं कूटस्थमहेयमनुपादेयं चिदेकतानमात्मतत्त्वं द्वाभ्यां वल्लीभ्यां प्रतिपाद्यं तस्मै त्रिविधोऽपि प्रह्वीभावो भक्तिश्रद्धाभ्यां भवत्वित्यर्थः ॥ २ ॥

यावन्त्युपासनान्यादावविरुद्धानि कर्मभिः ।
संहिताविषयादीनि स्युस्तान्यभ्युदयाय तु ॥ ३ ॥

नमस्कारव्याजेन वल्लीद्वयस्य तात्पर्यमुक्त्वा प्रागुक्तोपासनावशादेवापेक्षितमोक्षसिद्धेरलमात्मज्ञानार्थेनोपनिषदारम्भेणेत्याशङ्क्य पूर्वोक्तान्युपासनान्यनूद्य तेषामभ्युदयफलत्वमेव न मुक्तिफलत्वमित्येतदाह । यावन्तीति ॥ ३ ॥

न चैतावदवष्टम्भात्कामकर्मोद्भवत्वतः ।
सर्वानर्थैकबीजस्य मोहस्यास्ति निराक्रिया ॥ ४ ॥

उक्तानां केवलोपासनानां मुक्तिफलत्वाभावेऽपि कर्मसहितानां तासां मुक्तिफलत्वमित्याशङ्क्याऽऽह । न चेति । एतावच्छब्दे कर्मोपासनसमुच्चयो गृह्यते तद्बलेन सर्वस्मिन्नर्थे निरपेक्षकारणस्याज्ञानस्य नैव निवृत्तिस्तस्य संसारकारणकामकर्मप्रसवहेतुत्वात्तस्य सकार्यस्य विरोधिनो ज्ञानादेव निवृत्तिर्युक्तेत्यर्थः ॥४॥

तस्मात्संसारमूलस्य भृशमुच्छित्तयेऽधुना ।
यथाभूतार्थबोध्यात्मज्ञानं सम्यक्प्रवक्ष्यते ॥ ५ ॥

यतो ज्ञानादेवाज्ञानं निवर्तते ततस्तन्निवर्तकज्ञानार्थत्वेनोपनिषदारम्भः स्यादित्याह । तस्मादिति ॥ ५ ॥

नित्यकर्माद्यनुष्ठानाच्छुद्धान्तःकरणः पुमान् ।
विरक्तश्चाग्रजाल्लाभात्स्वप्रपुंत्रादिलाभवत् ॥ ६ ॥

ज्ञानार्थत्वेनोपनिषदारम्भेऽपि ज्ञानाधिकारी कः स्यादित्याशङ्क्य सर्वकर्मत्यजः संन्यासिनस्तदधिकारं वक्तुमन्तःकरणशुद्धिवैराग्ययोरधिकारिविशेषणत्वमाह। नित्येति ॥ ६ ॥

प्रत्यक्षागमलिङ्गैर्हि यद्यत्कर्मोद्भवं फलम् ।
तत्क्षयिष्णिवति विज्ञाय विरक्तो नरकाद्यथा ॥७॥

शुद्धबुद्धेर्वैराग्यं कथं सिध्यतीत्याशङ्क्य कर्मफलस्यानित्यत्वदर्शनादित्याह। प्रत्यक्षेति। कस्यचित्प्रत्यक्षेण कस्यचिद्यत्कृतकं तदनित्यमित्यनुमानेन कस्यचित्तद्यथेहेत्यादिनाऽऽगमेन कर्मफलस्य क्षयदर्शनात्ततो नरकादिव विरक्तो भवतीत्यर्थः ॥ ७ ॥

अपास्ताशेषदोषं यत्सर्वकामनिरासकृत् ।
तदनाप्तं तमोमात्रोप्रसिद्ध्यैव हि तद्यतः ॥ ८ ॥

साधनचतुष्टयसंपन्नस्य संन्यासिनो जिज्ञासोरेव मोक्षसाधनज्ञानेऽधिकारितेत्यत्र हेत्वन्तरमाह। अपास्तेति। मोक्षस्य ज्ञानव्यवहितत्वेन नित्यसिद्धत्वाज्ज्ञानार्थिनः संन्यासिनस्तत्राधिकारो भवतीत्यर्थः। तच्च तमःशब्दितमज्ञानं मानायोग्यत्वादनुभवादेव सिध्यतीत्यभिमेत्याऽऽह। प्रसिद्ध्यैवेति ॥ ८ ॥

तदनाप्तिकृदज्ञानध्वस्तयेऽलं न कारकम् ।
प्रत्यग्ज्ञानेऽधिकार्यस्मात्त्यक्तपूर्वोक्तसाधनः ॥ ९ ॥

मोक्षव्यवधिभूतस्याज्ञानस्य कर्मैव निवर्तकं न ज्ञानमित्याशङ्क्य ज्ञानस्य तद्विरोधित्वात्कर्मणस्तदविरोधित्वान्नैवमित्याह। तदनाप्तीति। ज्ञानस्याज्ञाननिवर्तकत्वात्कर्मणस्तदनिवर्तकत्वादस्मादेव हेतोस्त्यक्तकर्मा पूर्वोक्तविशेषणः संन्यासी ज्ञानाधिकारीत्युपसंहरति। प्रत्यगिति ॥ ९ ॥

त्याग एव हि सर्वेषां मोक्षसाधनमुत्तमम् ।
त्यजतैव हि तज्ज्ञेयं त्यक्तुः प्रत्यक्परं पदम् ॥१०॥
त्यज धर्ममधर्मं च तथा सत्यानृते अपि ।
न्यासो ब्रह्मेति च प्राह तैत्तिरीयश्रुतिस्तथा ॥ ११ ॥

संन्यासिनो ज्ञानाधिकारित्वे श्रुतिस्मृत्यानुकूल्यं दर्शयति। त्याग इति॥१०॥११॥

---

१ (ख.) °पुरादि°। २ (ग. घ.) °नष्ट°। ३ (क. ख.) °लक्ष°। ४ (ग. घ.) °त्रात्मभि°।

क्षयिष्णु साध्यं विज्ञाय निःशेषं कर्म साधनम् ।
तत्त्यागसाधनस्तस्मात्प्रत्यग्ज्ञाने प्रवर्तते ॥ १२ ॥

श्रुतिस्मृतिभ्यां फलितमर्थं कथयति ॥ क्षयिष्ण्विति ॥ १२ ॥

उत्पत्त्यादि स्वतश्चेत्स्यात्कर्मणा किं प्रयोजनम् ।
स्वत एव न चेत्तत्स्यादद स्यात्कर्मणाऽत्र किम् ॥१३॥

किंचोत्पत्त्याप्तिविकृतिसंस्कृतीनामन्यतमस्य मोक्षे स्वतः सत्त्वे स्वतोऽसत्त्वे च कर्मवैयर्थ्यात्कर्मत्यजो मुमुक्षुता विवक्षितेत्याह । उत्पत्त्यादीति ॥ १३ ॥

उत्पत्त्यादौ तु यच्छक्तं हेतुमात्रमपेक्षते ।
कर्मण्यपेक्षा तस्यैव घटोत्पत्तौ मृदो यथा ॥१४॥

मुक्तौ कर्मानर्थक्ये कुत्र तदर्थवत्त्वं तत्राऽऽह । उत्पत्त्यादौ त्विति ॥ १४ ॥

नित्यं न भवनं यस्य यस्य वा नित्यभूतता ।
न तस्य क्रियमाणत्वं खपुष्पाकाशयोरिव ॥ १५ ॥

उत्पत्त्यादि स्वतश्चेत्स्यादित्यादिनोक्तं प्रपञ्चयति । नित्यमिति ॥ १५ ॥

कर्तव्यता न साध्यस्य विदितत्वाद्विधीयते ।
दुःखत्वाच्च न यागस्य त्वुपायस्त्ववबोध्यते ॥ १६ ॥

ननु कर्मकाण्डस्य कर्मनियोगनिष्ठत्वेन तत्र प्रामाण्यवज्ज्ञानकाण्डस्यापि ज्ञाननियोगनिष्ठतया तत्र प्रामाण्यं नैयोगिकज्ञानसाध्यत्वान्मुक्तेर्न तत्र कर्मत्यजोऽधिकारः सिध्येदित्याशङ्क्य दृष्टान्तं दूषयति । कर्तव्यतेति । स्वर्गादिफलस्य पुरुषार्थत्वेन स्वानुभवसिद्धत्वान्न तत्र कर्तव्यता वैधी यागादेरपि धात्वर्थस्य क्लेशात्मकत्वात्कर्तव्यत्वायोगान्न तत्र कर्तव्यतां वक्तुं शक्यते । अतो यागादेरिष्टसाधनत्वमात्रमज्ञातं कर्मकाण्डेन बोध्यते । तथा ज्ञानकाण्डेनापि ब्रह्मात्मत्वमज्ञातमेव बोध्यमिति कर्तव्यतापरपर्यायस्य नियोगस्यानवकाशत्वाज्ज्ञानादेव केवलात्कैवल्यमिति कर्मत्यजस्तत्राधिकारसिद्धिरित्यर्थः ॥ १६ ॥

विजिज्ञासस्व तदिति ब्रह्मज्ञाने प्रवर्तकम् ।
जिज्ञास्य लक्षणोक्तिः स्याद्यतो वा इति च श्रुतिः ॥ १७ ॥

काण्डद्वये नियोगानङ्गीकारे कर्मणि ज्ञाने वा किं प्रवर्तकमित्याशङ्क्य रागस्य प्रवर्तकत्वमभिप्रेत्याऽऽह । विजिज्ञासस्वेति । यद्यपि ब्रह्मविशेषिते ज्ञाने रागस्य प्रवर्तकत्वमिष्टं तत्र ब्रह्मणो विशेषणस्य किं लक्षणमित्याशङ्क्याऽऽह । जिज्ञास्येति । जगदुत्पत्तिस्थितिलयकारणत्वं तस्य तटस्थलक्षणं सच्चिदानन्दात्मकं स्वरूपलक्षणं श्रुत्युक्तमित्यर्थः ॥ १७ ॥

कोशप्रत्यक्प्रवेशेन पूर्वपूर्वप्रहाणतः ।
कारकादिनिषेधेन ह्युपायो ब्रह्मवेदने ॥ १८ ॥

यथोक्तस्य ब्रह्मणो ज्ञाने साधनं दर्शयति । कोशेति । पूर्वपूर्वस्यान्नमयादिकोशस्य दृश्यत्वपरिच्छिन्नत्वादिना त्यागेन क्रियाकारकफलात्मकद्वैतनिरासेन कार्यकारणात्मककोशेषु प्रत्यक्त्वेनैवाऽऽत्मनो निश्चयेन पदार्थज्ञानं ब्रह्मज्ञाने साधनमतस्तदुपायचिन्तया न मनः खेदनीयमित्यर्थः ॥ १८ ॥

अविद्योद्भूततृष्णेन पुंसा यत्कल्पितं फलम् ।
अनन्तफलसिद्ध्यर्थं तदनूक्तिः प्रवृत्तये ॥ १९ ॥

वल्लीद्वयतात्पर्यादि च दर्शयित्वा प्रतिपदं व्याख्यामारभमाणो ब्रह्मविदाप्नोति परमितिप्रथमं प्रयोजनोपादानस्य तात्पर्यमाह । अविद्येति । स्वात्मभूतमेव नित्यप्राप्तं फलमविद्यातिरोधानादिदं मे स्यादित्यद्भूततृष्णावता मुमुक्षुणा परिच्छिन्नत्वेन प्राप्यत्वेन कल्पितं ब्रह्मज्ञानप्रयोजनं ब्रह्मविदाप्नोति परमित्यनूद्यते । तदनुवादश्च तदुपाये ज्ञाने मुमुक्षुप्रवृत्तिद्वारा परिपूर्णस्य फलस्य स्वरूपभूतस्याऽऽविर्भावाय भविष्यतीत्यर्थः ॥ १९ ॥

कर्तुः कर्माणि कार्यार्थमनात्मफलदानि हि ।
पुरोक्तानि यतो नासावन्यथाऽतः प्रवर्तते ॥ २० ॥

मोक्षसाधने मुमुक्षुप्रवृत्त्यर्थं मोक्षफलानुवादेऽपि पुरुषार्थसाधनत्वेन कर्मणां प्रसिद्धत्वात्तेष्वेव मुमुक्षुप्रवृत्तिरित्याशङ्क्याऽऽह । कर्तुरिति । कार्यं साध्यं फलं तत्सिद्ध्यर्थं यानि कर्माणि क्रियन्ते तानि कर्तुर्निर्वर्तकस्य यदनात्मभूतं फलं स्वर्गपशुपुत्रादि तत्प्राप्तिसाधनान्येव पुरा कर्मकाण्डे प्रोक्तानि कर्मफलस्य चतुर्विधत्वादात्मस्वभावभूतायामुक्तेस्तद्विलक्षणत्वाद्यस्मादेवं तस्मादसौ मुमुक्षुर्न कर्मसु रागेण प्रवर्तते, किंत्वन्यथा कर्मपरिहारद्वारेण मोक्षेच्छया ज्ञाने प्रवृत्तो भवतीत्यर्थः ॥ २० ॥

---

१ (ग.घ.) °त्पर्यं द° । २ (ग.घ.ङ.) °वर्तते । ३ (ङ.च.) °स्य चच° । ४ (ग घ. ङ. च.) °वर्तते ।

क्षयिष्णु साध्यं विज्ञाय निःशेषं कर्म साधनम् ।
तत्त्यागसाधनस्तस्मात्प्रत्यग्ज्ञाने प्रवर्तते ॥ १२ ॥

श्रुतिस्मृतिभ्यां फलितमर्थं कथयति ॥ क्षयिष्ण्विति ॥ १२ ॥

उत्पत्त्यादि स्वतश्चेत्स्यात्कर्मणा किं प्रयोजनम् ।
स्वत एव न चेत्तत्स्यादद स्यात्कर्मणाऽत्र किं नु ॥१३॥

किंचोत्पत्त्याप्तिविकृतिसंस्कृतीनामन्यतमस्य मोक्षे स्वतः सत्त्वे स्वतोऽसत्त्वे च कर्मवैयर्थ्यात्कर्मत्यजो मुमुक्षुता विवक्षितेत्याह । उत्पत्त्यादीति ॥ १३ ॥

उत्पत्त्यादौ तु यच्छक्तं हेतुमात्रमपेक्षते ।
कर्मण्यपेक्षा तस्यैव घटोत्पत्तौ मृदो यथा ॥१४॥

मुक्तौ कर्मानर्थक्ये कुत्र तदर्थवत्त्वं तत्राऽऽह । उत्पत्त्यादौ त्विति ॥ १४ ॥

नित्यं न भवनं यस्य यस्य वा नित्यभूतता ।
न तस्य क्रियमाणत्वं खपुष्पाकाशयोरिव ॥ १५ ॥

उत्पत्त्यादि स्वतश्चेत्स्यादित्यादिनोक्तं प्रपञ्चयति । नित्यमिति ॥ १५ ॥

कर्तव्यता न साध्यस्य विदितत्वाद्विधीयते ।
दुःखत्वाच्च न यागस्य त्वुपायस्त्ववबोध्यते ॥ १६ ॥

ननु कर्मकाण्डस्य कर्मनियोगनिष्ठत्वेन तत्र प्रामाण्यवज्ज्ञानकाण्डस्यापि ज्ञाननियोगनिष्ठतया तत्र प्रामाण्यं नैयोगिकज्ञानसाध्यत्वान्मुक्तेर्न तत्र कर्मत्यजोऽधिकारः सिध्येदित्याशङ्क्य दृष्टान्तं दूषयति । कर्तव्यतेति । स्वर्गादिफलस्य पुरुषार्थत्वेन स्वानुभवसिद्धत्वान्न तत्र कर्तव्यता वैधी यागादेरपि धात्वर्थस्य क्लेशात्मकत्वात्कर्तव्यत्वायोगान्न तत्र कर्तव्यतां वक्तुं शक्यते । अतो यागादेरिष्टसाधनत्वमात्रमज्ञातं कर्मकाण्डेन बोध्यते । तथा ज्ञानकाण्डेनापि ब्रह्मात्मत्वमज्ञातमेव बोध्यमितिकर्तव्यतापरपर्यायस्य नियोगस्यानवकाशत्वाज्ज्ञानादेव केवलात्कैवल्यमितिकर्मत्यजस्तत्राधिकारसिद्धिरित्यर्थः ॥ १६ ॥

विजिज्ञासस्व तदिति ब्रह्मज्ञाने प्रवर्तकम् ।
जिज्ञास्य लक्षणोक्तिः स्याद्यतो वा इति च श्रुतिः ॥ १७ ॥

काण्डद्वये नियोगानङ्गीकारे कर्मणि ज्ञाने वा किं प्रवर्तकमित्याशङ्क्य रागस्य प्रवर्तकत्वमभिप्रेत्याऽऽह । विजिज्ञासस्वेति । यस्मिन्धर्मविशेषिते ज्ञाने रागस्य प्रवर्तकत्वमिष्टं तत्र ब्रह्मणो विशेषणस्य किं लक्षणमित्याशङ्क्याऽऽह । जिज्ञास्येति । जगदुत्पत्तिस्थितिलयकारणत्वं तस्य तटस्थलक्षणं सच्चिदानन्दात्मकं स्वरूपलक्षणं श्रुत्युक्तमित्यर्थः ॥ १७ ॥

कोशप्रत्यक्प्रवेशेन पूर्वपूर्वप्रहाणतः ।
कारकादिनिषेधेन ह्युपायो ब्रह्मवेदने ॥ १८ ॥

यथोक्तस्य ब्रह्मणो ज्ञाने साधनं दर्शयति । कोशेति । पूर्वपूर्वस्यान्नमयादिकोशस्य दृश्यत्वपरिच्छिन्नत्वादिना त्यागेन क्रियाकारकफलात्मकद्वैतनिरासेन कार्यकारणात्मककोशेषु प्रत्यक्त्वेनैवाऽऽत्मनो निश्चयेन पदार्थज्ञानं ब्रह्मज्ञाने साधनमतस्तदुपायचिन्तया न मनः खेदनीयमित्यर्थः ॥ १८ ॥

अविद्योद्भूततृष्णेन पुंसा यत्कल्पितं फलम् ।
अनन्तफलसिद्ध्यर्थं तदनूक्तिः प्रवृत्तये ॥ १९ ॥

वल्लीद्वयतात्पर्यादि च दर्शयित्वा प्रतिपदं व्याख्यामारभमाणो ब्रह्मविदाप्नोति परमितिप्रथमं प्रयोजनोपादानस्य तात्पर्यमाह । अविद्येति । स्वात्मभूतमेव नित्यप्राप्तं फलमविद्यातिरोधानादिदं मे स्यादित्युद्भूततृष्णावता मुमुक्षुणा परिच्छिन्नत्वेन प्राप्यत्वेन कल्पितं ब्रह्मज्ञानप्रयोजनं ब्रह्मविदाप्नोति परमित्यनूद्यते । तदनुवादश्च तदुपाये ज्ञाने मुमुक्षुप्रवृत्तिद्वारा परिपूर्णस्य फलस्य स्वरूपभूतस्याऽऽविर्भावाय भविष्यतीत्यर्थः ॥ १९ ॥

कर्तुः कर्माणि कार्यार्थमनात्मफलदानि हि ।
पुरोक्तानि यतो नासावन्यथाऽतः प्रवर्तते ॥ २० ॥

मोक्षसाधने मुमुक्षुप्रवृत्त्यर्थं मोक्षफलानुवादेऽपि पुरुषार्थसाधनत्वेन कर्मणां प्रसिद्धत्वात्तेष्वेव मुमुक्षुप्रवृत्तिरित्याशङ्क्याऽऽह । कर्तुरिति । कार्यं साध्यं फलं तत्सिद्ध्यर्थं यानि कर्माणि क्रियन्ते तानि कर्तुर्निर्वर्तकस्य यदनात्मभूतं फलं स्वर्गपशुपुत्रादि तत्प्राप्तिसाधनान्येव पुरा कर्मकाण्डे प्रोक्तानि कर्मफलस्य चतुर्विधत्वादात्मस्वभावभूतायामुक्तेस्तद्विलक्षणत्वाच्चस्मादेवं तस्मादसौ मुमुक्षुर्न कर्मसु रागेण प्रवर्तते. किंत्वन्यथा कर्मपरिहारद्वारेण मोक्षेच्छया ज्ञाने प्रवृत्तो भवतीत्यर्थः ॥ २० ॥

---

१ (ग. घ.) 'त्यर्थं द'। २ (ग. घ. ङ.) 'वर्तते । ३ (ङ. च.) 'स्य च च'। ४ (ग. घ. ङ. च.) 'वर्तते ।

क्षयिष्णु साधनाधीनं फलं बुध्वा वितृष्णतः ।
कामहेतोरनुच्छित्तेरपरात्परमीप्सति ॥ २१ ॥

मुमुक्षुर्मोक्षेच्छया कर्माणि परित्यज्य ज्ञाने प्रवृत्तो भवतीत्युक्तं प्रपञ्चयति । क्षयिष्णिवति । साधनसाध्यं फलमैहिकमामुष्मिकं च क्षयशीलं विनाशीति ज्ञात्वा ततः साधनाद्वैराग्यस्य सिद्धत्वात्कर्मभिरेव रागद्वेषादिहेतोरज्ञानस्यानुच्छिन्नत्वादपरात्कर्मफलात्कार्यकारणप्रपञ्चाच्च परं मोक्षं कार्यकारणविलक्षणमाप्तुमिच्छति तयो चेच्छया मोक्षौपयिकज्ञानसाधनश्रवणादौ मुमुक्षुर्व्यापृतो भवतीत्यर्थः ॥ २१ ॥

साध्यसाधनवद्वाक्यं तद्विरुद्धार्थसिद्धये ।
प्राह ब्रह्मविदाप्नोति श्रुतिः प्रत्यक्प्रवेशिनी ॥ २२ ॥

शास्त्रादौ फलसूत्रणमुपपन्नमित्युपसंहरति । साध्येति । कैवल्यं साध्यं निरतिशयफलं साधनं ज्ञानं तदुभयमत्र प्रतिभातीति तद्विशिष्टमिदं ब्रह्मविदाप्नोति परमितिवाक्यं तच्च सूत्रभूतं साध्यसाधनाभ्यां विरुद्धार्थस्य कैवल्यस्य सिद्ध्यर्थं प्रकृता फलोक्तिश्रुतिर्मुक्तिद्वारेण प्रतीचीच्छां जनयन्ती तत्र प्रविष्टेवं दृष्टा यथोक्तं वाक्यं प्राहेतियोजना ॥ २२ ॥

शिखा ते वर्धते वत्स गुडूचीं श्रद्धया पिब ।
मातेव प्रेरयेद्बालं सदसंभाव्यसिद्धये ॥ २३ ॥

सूत्रे फलकथनं प्रवृत्त्यर्थमित्येतद्दृष्टान्तेन स्पष्टयति । शिखेति । यथा बालमौषधपाने बालाभिप्रेतफलोक्तिद्वारेण माता प्रेरयति तथा ज्ञानातिरिक्तसमस्तसाधनासंभाव्यमोक्षसिद्ध्यर्थं श्रुतिर्मुमुक्षुं प्रेरयतीत्यर्थः ॥ २३ ॥

साध्यसाधनसंबंधात्प्रसक्ता येह दोषधीः ।
सा चैकरूपविज्ञानशिखिप्लुष्टा विनङ्क्ष्यति ॥ २४ ॥

साधनान्तरसाध्यत्वाभावेऽपि ज्ञानसाध्यत्वाभ्युपगमान्मुक्तेरनित्यत्वं प्राप्तमित्याशङ्क्याऽऽह । साध्येति । इहेतिमोक्षोक्तिः । साध्यसाधनादिव्यवहारस्याविद्याकृतत्वादसाध्यसाधनमेकरूपं ब्रह्मेतिज्ञाने सत्युक्ताशङ्कानिवृत्तिरित्यर्थः ॥ २४ ॥

---

१ ( ग. घ. ) °क्षगं प्राप्तु° । २ ( ग. घ. ) तथाचे° । ३ ( च. ) °सूचनम्° । ४ ( ट. ख. ) °शयं फ° । ५ ( क. ख. ) °ल्यवि° । ६ ( क ख. ग घ. ट. ) °व दृष्टा । ७ ( ग. घ. ट. ) °चैकं रू° ।

मा भूदण्वपि मे दुःखं सुख्येव स्यामहं सदा ।
इति स्वतोऽभिलाषोऽयं सत्येव विषये भवेत् ॥२५॥

केचित्तु मोक्षमेव नानुमन्यन्ते तदिच्छा तु दूरापास्तेति तत्राऽऽह । मा भूदिति ॥ २५ ॥

अज्ञातमोक्षरूपोऽपि कैवल्याय प्रवर्तते ।
अलं यथोक्तकामेद्धधिषणो भवभीषितः ॥ २६ ॥

यथोक्तेच्छाविषयस्य मोक्षत्वेन ज्ञातत्वं नास्तीत्याशङ्क्याऽऽह । अज्ञातेति । स विषयो यद्यपि मोक्षत्वेन न ज्ञातस्तथाऽपि यथोक्तेच्छासंसाराद्विरक्तस्य मोक्षफलकात्मज्ञानप्रवृत्तिहेतुर्भवतीत्यर्थः ॥ २६ ॥

प्रवृत्तिजनकं यस्मात्सर्वत्रैव प्रयोजनम् ।
श्रुतिर्ब्रह्मविदाप्नोतीत्याह पुंसः प्रलुब्धये ॥ २७ ॥

प्रथममेव प्रयोजनप्रदर्शनस्य तात्पर्यमुक्तमुपसंहरति । प्रवृत्तीति ॥ २७ ॥

फलश्रुत्यङ्कुशाकृष्टः श्रवणादौ प्रवर्तते ।
तत्पूर्वकं यतो ज्ञानं श्रुतिश्चैवमभाषत ॥ २८ ॥

फलश्रवणादुपाये प्रवृत्तिरित्येतदेव स्पष्टयति । फलश्रुतिरिति । किमिति श्रवणादौ साधनान्तरं परित्यज्य प्रवर्तते तत्राऽऽह । तत्पूर्वकमिति । श्रवणादिपूर्वकमेव ज्ञानं लभ्यते यतः श्रोतव्य इत्याद्या श्रुतिरेवं श्रवणादिपूर्वकमात्मज्ञानमुक्तवतीत्यर्थः ॥ २८ ॥

लौकिकी वैदिकी चाथ प्रवृत्तिर्येह काचन ।
नर्ते प्रयोजनं यस्मात्तदेवातः प्रवृत्तिकृत् ॥ २९ ॥

यद्यपि प्रयोजनमनुद्दिश्येत्यादिन्यायेन प्रयोजनाधीना लौकिकी प्रवृत्तिस्तथाऽपि वेदवशादेव वैदिकी प्रवृत्तिरन्तरेणापि प्रयोजनं स्यादित्याशङ्क्याऽऽह । लौकिकीति ॥ २९ ॥

ब्रह्मविद्ब्रह्म वेत्तीति यः स आप्नोति तत्परम् ।
सत्यादिलक्षणं ब्रह्म वक्ष्यते तदृचा स्फुटम् ॥ ३० ॥

शास्त्रादौ प्रयोजनोक्तेस्तात्पर्यमुक्त्वा वाक्यं योजयति । ब्रह्मविदिति । किं तद्ब्रह्म वेद्यमित्याशङ्क्याऽऽह । सत्यादीति ॥ ३० ॥

---

१ (क ख.) प्रवृत्तये । अ° । २ (ङ.) अयं य° । ३ (क ख.) हेतुः संभ° । ४(क.ख.)

फलोक्तिः परमाप्नोतीत्यासा ब्रह्मविदुच्यते ।
सामर्थ्याद्ब्रह्मविद्या तु परस्यावाप्तिसाधनम् ॥ ३१ ॥

तत्रैव सूत्रवाक्ये विभागं दर्शयति । फलोक्तिरिति । परस्य ब्रह्मणोऽवाप्तिसाधनं ब्रह्मविद्येति कथमवगम्यते तत्राऽऽह । सामर्थ्यादिति । ब्रह्मविद्विद्वान्परं ब्रह्म प्राप्नोतीत्ययं संबन्धो न सिध्यति । यदि ब्रह्मज्ञानं ब्रह्मप्राप्तिसाधनं न स्यात्तस्माच्छ्रुत्यर्थानुपपत्त्या साधनत्वसिद्धिरित्यर्थः ॥ ३१ ॥

स्वर्गं यथाऽग्निहोत्रेण यजमानः प्रसाधयेत् ।
परावाप्तिं तथा कुर्याद्ब्रह्मविद्ब्रह्मविद्यया ॥ ३२ ॥

ब्रह्मज्ञानाद्ब्रह्मप्राप्तिरित्युक्तमर्थं दृष्टान्तेन साधयति । स्वर्गमिति ॥ ३२ ॥

ब्रह्मैवाऽत्र परं ग्राह्यं तज्ज्ञानं नान्यसिद्धये ।
अन्यज्ज्ञानं हि नान्यस्य क्वचिदप्याप्तये यतः ॥३३॥

ब्रह्मवित्परमाप्नोतीतिपरावाप्तिरुक्तत्वात्कथं ब्रह्मविद्यया ब्रह्मप्राप्तिर्व्याख्यायते तत्राऽऽह । ब्रह्मैवेति । तत्र हेतुमाह । तज्ज्ञानमिति । ब्रह्मज्ञानं ब्रह्मणोऽन्यस्य न प्रापकमित्येतदुपपादयति । अन्यज्ज्ञानं हीति । क्वचिदपीति लोकवेदयोरुक्तिः ॥३३॥

देशकालादिसंभेदपूर्विकावाप्तिरिष्यते ।
देशकालाद्यभिन्नस्य कथं सेत्युच्यते यथा ॥
सर्वात्मनोऽप्यनाप्तिः स्याद्दशमस्येव मोहजा ॥३४॥

ब्रह्मावाप्तिमाक्षिपति । देशेति । उभयत्रादिशब्देन वस्तु गृह्यते । यथोक्तस्य ब्रह्मणो मुख्यावाप्त्ययोगेऽपि यैथौपचारिकी सा घटते तथोच्यत इत्याह । उच्यत इति । यथा लोके दशमस्य माणवकस्य दशमत्वानाप्तिरज्ञानहेतुकभ्रान्तिप्रभावादुपलभ्यते तथैव परिपूर्णस्यापि तत्त्वस्य मोहवशादनाप्तिसंभवस्तन्निवृत्त्या प्राप्तिरुपचरितेत्यर्थः ॥ ३४ ॥

पञ्चस्वन्नमयाद्येषु ह्यहमस्मीतिविभ्रमात् ॥ ३५ ॥

मोहवशादप्राप्तिरित्युक्तमंशं विशदयति । पञ्चस्विति । अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमयेषु कार्यकारणात्मसु प्रत्येकमहमस्मीतिमोहजन्याद्विभ्रमोत्प्राप्तिसिद्धा ब्रह्मानाप्तिरित्यर्थः ॥ ३५ ॥

---

१ (ग. घ.) प्नोति आप्ता । २ (ग. घ.) विद्वा । (च.) मित्परं । ३ (ग. घ.) परस्याप्ति । ४ (ग. घ. च.) पं वि । ५ (ङ.) यथौप । ६(ग. घ. च.) प्तिसिद्धा ।

दशमोऽस्मीत्यतोज्ञानादज्ञानध्वस्तिवर्त्मना ।
दशमाप्तिवदाप्तिः स्याद्ब्रह्मणोऽज्ञानहानतः ॥ ३६ ॥
विभिन्नवेत्तृवेद्यादौ गौणं ब्रह्म यतस्ततः ।
अभिन्नवेत्तृवेद्यादि ग्राह्यं मुख्यार्थसिद्धये ॥ ३७ ॥

अज्ञानाप्तिरज्ञानादिति दृष्टान्तेनोक्त्वा ज्ञानात्तदाप्तिरित्येतदपि दृष्टान्तेन दर्शयति । दशमोऽस्मीति ॥ ३६ ॥

मुख्यमाप्तिं विहाय किमित्याप्तिरौपचारिकी गृह्यते तत्राऽऽह । विभिन्नेति । प्रमाता प्रमाणं प्रमेयमित्यादौ द्वैते भिन्नेऽपारमार्थिके ब्रह्मणोऽर्थान्तरभूते स्वीकृते ब्रह्म गौणममुख्यं यस्मादापद्यते तस्माद्देशतः कालतो वस्तुतश्चानवच्छिन्नस्य मुख्यस्य ब्रह्मशब्दार्थस्य सिद्ध्यर्थमभिन्नं च वस्तुतो भेदरहितं प्रमात्रादि ग्रहीतव्यं तस्माद्विभागस्याविद्याकृतत्वाद्विद्योत्पत्तौ तन्निवृत्तौ गौण्येव ब्रह्मप्राप्तिरित्यर्थः ॥ ३७ ॥

अन्यदृष्टाविवातोऽत्र न नियोगो मनागपि ।
मोहप्रध्वंसमात्रेण निवृत्तेरोगहानिवत् ॥ ३८ ॥

ब्रह्मविदोऽपि ब्रह्मध्याने नियोगाङ्गीकारात्तदधीना ब्रह्मप्राप्तिः स्वर्गादिप्राप्तिवन्मुख्यैवेत्याशङ्क्याऽऽह । अन्यदृष्टाविति । यथाऽन्यदृष्टावविद्यायां सत्यां कर्मणि नियोगोऽवगम्यते तथाऽत्र ब्रह्मज्ञाने समुत्पन्ने विरोधित्वादेव मोहस्य प्रध्वंसात्तावन्मात्रेण संसारस्यापि तत्कार्यस्य निवृत्तत्वाद्ध्यानाभ्यासस्यानपेक्षितत्वान्न तत्र नियोगो मनागपि युज्यते । यथौषधप्रयोगेण रोगनिवृत्त्या स्वच्छपावस्थानवज्ज्ञानादज्ञानतत्कार्यनिवृत्त्या स्वरूपावस्थानलक्षणो मोक्षो नियोगादृतेऽपि सिध्यत्यतो वेदान्तेषु न नियोगावकाशोऽस्तीत्यर्थः ॥ ३८ ॥

कर्तृतां प्रत्यगालिङ्ग्य योऽकर्त्रात्मानमीप्सति ।
उल्कापिशाचं सोऽभ्येति शीतार्तः पावकेच्छया ॥३९॥

ब्रह्मविदोऽपि भिक्षाटनादौ कर्तृत्वोपलब्धेर्ज्ञानाभ्यासनियोगादेवाकर्तृब्रह्मप्राप्तिरित्याशङ्क्याऽऽह । कर्तृतामिति । प्रत्यगात्मनि कर्तृतां परमार्थभूतां गृहीत्वा ब्रह्माकर्त्रभोक्तृस्वरूपत्वेन ग्रहीतुं योऽपेक्षते स पारमार्थिककर्तृत्वादिनिवृत्त्ययोगान्नानर्थान्निवर्तते न च ब्रह्म प्राप्नोति । यथा शीतार्तः शीतापहरणबुद्ध्या वह्निमिच्छन्नुल्कापिशाचमनुगच्छन्न शीतनिवृत्तिं प्रतिपद्यते तस्यानभिवादनर्थं च प्राप्नोति समीपमुपसृप्तस्य पिशाचेन भक्ष्यत्वसंभवात्तथात्रापि द्रष्टव्यम् । भिक्षाटनादौ तु ब्रह्मविदो बाधितानुवृत्त्या प्रवृत्तिरित्यर्थः ॥ ३९ ॥

---

१ ( घ. ङ. ) ख्यप्राप्तिं । २ ( क. ख. ) तौ शब्दार्थेव । ३ ( ग. घ. च. ) स्वाज्ञाना' । ४ ( ग. घ. ) सोऽन्वेति ।

करोमीति धिया चैतद्ब्रह्मास्मीति हि लभ्यते ।
ब्रूतालाभेऽस्य को हेतुर्न ह्यतोऽन्योस्त्यदर्शनात् ॥४०॥

इतोऽपि नास्ति परमार्थिकं कर्तृत्वं किंतु कल्पितमेवेत्याह । करोमीति । करोमीत्येवमात्मिका धीर्नाम कर्ताऽस्मीतिबुद्धिस्तया विशिष्टस्य पारमार्थिकं कर्तृत्वमारूढस्यैतद्ब्रह्माकर्त्रभोक्त्रहमस्मीति यदि लभ्यते तर्हि कर्तृज्ञाने सत्येव ब्रह्मप्राप्त्यङ्गीकारात्कर्तृज्ञानस्य च स्वापादेरन्यत्र सत्त्वाद्ब्रह्मोपदेशमन्तरेण तत्प्राप्तेः संभवादस्याऽऽत्मनस्तदलाभे को हेतुरितिपृष्टाः सन्तो हेतुं ब्रूत । स च हेतुर्नोपलभ्यते । न हि कश्चिदपि ब्रह्मालाभे हेतुरतोऽस्माददर्शनादज्ञानादन्यो दृश्यते । तस्मादात्मनि कर्तृत्वाद्यज्ञानकृतमेव न पारमार्थिकमित्यर्थः ॥ ४० ॥

तस्मादविद्यासंभूतकर्तृ प्रत्यगविक्रियम् ।
अविद्यानर्थतत्कार्यप्रत्याख्यानेन बोध्यते ॥ ४१ ॥

आत्मनि कर्तृत्वादेरविद्याकृतत्वे फलितमाह । तस्मादिति ॥ ४१ ॥

कर्तुर्ज्ञातुर्हि या दृष्टिः सामान्याद्यर्थसंश्रया ।
तत्प्रत्यगात्मदृष्ट्या तां प्रत्याख्यायाश्नुते परम् ॥४२॥

कार्यकारणनिराकरणेन प्रत्यगात्मप्रतिबोधफलं कथयति । कर्तुरिति । ज्ञाता प्रमाता तस्य कर्तृत्वं परिणामित्वं तस्य सामान्यविशेषविषया या दृष्टिस्तस्याः स्वरूपभूता या कूटस्थदृष्टिस्तद्रूपेण तां पूर्वोक्तां दृष्टिं निराकृत्य परं ब्रह्म कूटस्थदृष्टिरूपमाप्नोतीत्यर्थः ॥ ४२ ॥

अशेषानन्दवल्ल्यर्थसूत्रमाद्यमिदं वचः ।
यस्मात्तस्मात्तदर्थस्य ह्याविष्कृदुदीर्यते ॥ ४३ ॥

ब्रह्मविदाप्नोति परमितिसूत्रभूतं वाक्यं व्याख्याय तदेषाभ्युक्तेत्यस्य वाक्यस्य तात्पर्यमाह । अशेषेति ॥ ४३ ॥

---

१ (ग. घ. ङ. च.) °मार्तीवि । २ (ग. घ.) °स्यैव त° । ३ (ग. ङ.) °कर्तृभो° । ४ (क. ख.) °र्तृत्वज्ञा° । ५ (क. ख.) °र्तृत्वज्ञा° । ६ (ग. घ.) °लभ्यते । ७ (च.) °र्थसंश्रया दृ° । ८ (ग.) °ष्टिस्वरूपे° । ९ (च.) °स्वस्वरूपे° । १० (ग. च.) °परं ब्र° । ११ (ग. घ.) °त्यर्थः सू° ।

विशेषणविशेष्यत्वात्सत्यादीन्यत एव च ।
चत्वार्येकविभक्तीनि नीलरक्तोत्पलादिवत् ॥ ४४ ॥

सत्यं ज्ञानमनन्तं ब्रह्मेत्यत्र चतुर्णां पदानामेकविभक्तियुक्तत्वे हेतुमाह । विशेषणेति ॥ ४४ ॥

वेद्यत्वेन यतो ब्रह्म प्राधान्येन विवक्षितम् ।
तस्माद्विशेष्यं विज्ञेयं ततोऽन्यत्स्याद्विशेषणम् ॥४५॥

तेषु विशेषणविशेष्यत्वविभागं दर्शयति । वेद्यत्वेनेति ॥ ४५ ॥

नीलं महत्सुगन्धीति विशिष्यन्त्युत्पलं यथा ।
एकाधिकरणान्येवं सत्यादीनि परं महत् ॥ ४६ ॥

ब्रह्मणो विशेष्यत्वं सत्यादीनां विशेषणत्वमित्येतद्दृष्टान्तेन साधयति । नीलमिति । परं महदित्यत्र महदितिविशेष्यं ब्रह्मोच्यते ॥ ४६ ॥

एवं विभज्यमानं सत्सत्यमित्येवमादिभिः ।
स्वविशेषविरुद्धेभ्यो धर्मेभ्यः स्यान्निराकृतम् ॥४७॥

उक्ते विशेषणविशेष्यत्वे फलितं कथयति । एवमिति । स्वशब्देन ब्रह्मोक्तमस्य विशेषाः सत्यादयस्तैर्यदा ब्रह्म विशेषितं तदा सत्यादिविरुद्धेभ्योऽसत्यजाड्यपरिच्छिन्नेभ्यो निराकृतं ब्रह्म सिध्यतीत्यर्थः ॥ ४७ ॥

एवं च सति तज्ज्ञातं यदन्येभ्योऽवधार्यते ।
नीलोत्पलादिवद्ब्रह्म नान्यथाऽनवधारणात् ॥ ४८ ॥

व्यावृत्तिफलमाह । एवं चेति । यथा नीलमुत्पलं रक्तमुत्पलमित्यादिप्रयोगे ऽर्थक्रस्यन्तरेभ्यो व्यावृत्तमुत्पलमवगम्यते तथा यदन्येभ्योऽसत्यादिभ्यो व्यावृत्तमवधार्यते । तद्ब्रह्मेत्येवं व्यावृत्तत्वे सति सच्चिदेकतानं परिपूर्णं तदिति ज्ञातं भवति व्यावृत्तिश्चेन्न ज्ञायते तदाऽनृतादिभ्यो व्यावृत्तसिद्धेर्न ब्रह्म ज्ञातं स्यादित्यर्थः ॥ ४८ ॥

---

१ ( क. ) °न्येव स° । २ ( ङ. ) °ज्ज्ञानं य° । ३ ( ग. घ. ) व्यक्तमित° । ४ (घ.) °तानन्दप° ( च. ) °तानन्दं प° । ५ ( क. ग. ) °ह्मज्ञानं स्या° ।

तमसा कामशार्ङ्गेण संकल्पाकर्षणेन सः ।
रागाख्यविषलेपेन ताडितो विषयेषुणा ॥ ६७ ॥
ग्रहाविष्ट इवानीशश्चोदितो जन्यकर्मणा ।
योषिदग्निं पतत्याशु ज्योतिर्लोभात्पतङ्गवत् ॥६८॥

तमस्तृतीयो गुणः कामरागयोर्विप्रकृष्टसन्निकृष्टविषयत्वेन भेदो रागाख्यं विषं तेन लेपो यस्मिन्निति बहुव्रीहिणा विषयेषुर्विशेष्यते ॥ ६७ ॥ ६८ ॥

आकृष्य देहान्तच्छुक्रं यथाकर्म यथाश्रुतम् ।
रेतोवहप्रनाड्याऽथ योनौ पुंसा निषिच्यते ॥ ६९ ॥

परवशस्य योषिदनुषङ्गे पश्चात्तनं कृत्यं दर्शयति । आकृष्येति । तच्छुक्रमितिमागुक्तप्रकारेण निष्पन्नमित्यर्थः । तयोर्जन्यजनकयोर्वा स्त्रीपुंसयोर्वा यथाकर्म यथाश्रुतं तथा रेतः सर्वेभ्योंगेभ्यः समाकृष्य रेतोवहया प्रजननेन्द्रियरूपया नाड्या पुरुषेणानन्तरमेव योनौ निषिक्तं भवतीत्यर्थः ॥ ६९ ॥

तस्य योनौ निषिक्तस्य निमित्तवशवर्तिनः ।
जायते कललाऽवस्था ततो बुद्बुदरूपिणी ॥ ७० ॥

निमित्तवशवर्तित्वं पूर्वोक्तज्ञानकर्मानुसारित्वम् ॥ ७० ॥

बुद्बुदाज्जायते पेशी पेशीतो जायते घनम् ।
घनादङ्गाभिनिष्पत्तिः केशरोमाणि चाङ्गतः ॥७१॥

पेशीतो मांसाद्घनं कठिनं कार्यं ततोऽङ्गं शरीररूपं निर्वर्तते ॥ ७१ ॥

पूर्वजन्मनि यान्यासन्भूतानि करणानि च ।
तान्येवेहापि देहाय तद्यथेति श्रुतेर्बलात् ॥ ७२ ॥

अनेन क्रमेण जायमानस्य शरीरस्य पूर्वोपात्तदेहारम्भकभूतपञ्चकमेवोपादानं करणानि च तत्रत्यान्येवात्राभिव्यज्यन्ते । तद्यथा पेशस्कारीत्यादिश्रुतेरित्येतमर्थमाह । पूर्वजन्मनीति ॥ ७२ ॥

---

१ (ग. घ. च.) 'विशिष्य'। २ (क. ख.) 'जने'। ३ (क.) 'नं कार'। ४ (च.) 'रित्यन्वस'।

सर्वात्मनोऽप्यवच्छेदो विराजः सूत्रजन्मनः ।
इयानस्मीति संमोहात्कामकर्मसमन्वयात् ॥ ७३ ॥

यदुक्तक्रमेणान्नादुत्पन्नं शरीरं तत्र यः स्थूलो भागः स सूत्रकार्यस्य विराजोऽनवच्छिन्नस्यापि संमोहात्कामकर्मवशादियानेव तावन्मात्रोऽस्मीत्यवच्छेदो भवतीत्याह । सर्वात्मन इति ॥ ७३ ॥

लिङ्गात्मकतया तद्वत्समष्टिव्यष्टिरूपिणः ।
तदवच्छेदहेतोः स्यादव्यक्तस्य सुषुप्तता ॥ ७४ ॥

तथैव तस्मिन्नेव शरीरे यः सूक्ष्मो भागः सप्तदशलिङ्गात्मकत्वेन वर्तते स समष्टिव्यष्ट्यात्मसूत्रस्यावच्छेदः स्यादित्याह । लिङ्गेति । तस्यावच्छेदद्वयस्य हेतुरव्यक्तं तस्य सौषुप्तं रूपमत्र शरीरेऽवच्छेदो गृह्यतामित्याह । तदवच्छेदेति ॥ ७४ ॥

परात्मनोऽप्यनन्तस्य क्षेत्रज्ञत्वमविद्यया ।
क्षेत्रज्ञं चापि मां विद्धीत्येवं सत्युपपद्यते ॥ ७५ ॥

यश्चात्र शरीरे क्षेत्रज्ञाख्यश्चैतन्याभासो गृह्यते स परस्य कार्यकारणविलक्षणस्यावच्छेदो ज्ञायतामित्याह । परात्मनोऽपीति । परमात्मैवात्र शरीरे क्षेत्रज्ञो नाऽन्योऽस्तीत्यत्र भगवद्वाक्यमनुकूलयति । क्षेत्रज्ञं चेति ॥ ७५ ॥

न जानामीत्यविद्यैकाऽनित्या तत्कारणं मता ।
स्वप्रसिद्धचैव सा सिध्येन्निशौलूकीव वासरे ॥ ७६ ॥

पूर्वोक्तानामवच्छेदानां किं कारणमित्याशङ्क्य क्षेत्रज्ञत्वमविद्ययेत्युक्तामविद्यां विवृण्वन्नाह । नेत्यादिना । क्षेत्रज्ञत्वे हेतुरविद्यैव पूर्वोक्तानामवच्छेदानां कारणमित्यर्थः । प्रमाणनिवर्त्यत्वादविद्याया न प्रमाणतः सिद्धिरित्याशङ्क्य स्वप्रसिद्धिरात्मचैतन्यं तद्बलादेवाविद्या सिध्यतीत्याह । स्वप्रसिद्धचैवेति । स्वानुभवादविद्यासिद्धिं दृष्टान्तेन साधयति । निशेति । उलूकस्येयमौलूकी निशा यथा दिवसेऽन्धकारलुब्धा रात्रिरुलूकस्य स्वानुभवाद्धात्येवं चिदेकताने वस्तुन्यविद्या स्वानुभवादेव सिध्यतीत्यर्थः ॥ ७६ ॥

---

१ (ग. ङ.) °शकलि° (ग. घ.) °शकलालि°। २ (च.) °च्छेदवः स्या°। ३ (च.) °यहे°। ४ (च.) रीरात्र°। ५ (क. ख.) परमात्म°। ६ (क. ख.) परमात्म°। ७ (क. ख.) सप्रमि°। ८ (ख.) °क्तात्र°। ९ (क. ख.) स्वप्रमि°। १० (ग. घ.) °देव मि°। ११ (क.) °वमोऽन्य°।

प्रमाणोत्पन्नया दृष्ट्या योऽविद्यां द्रष्टुमिच्छति ।
दीपेनासौ ध्रुवं पश्येद्गुहाकुक्षिगतं तमः ॥ ७७ ॥

यस्तु स्वानुभवमवधीर्य प्रमाणसिद्धामविद्यामाद्रियते तं प्रत्याह । प्रमाणेति ॥ ७७ ॥

अनात्मेतीह यद्भाति तदविद्याविजृम्भितम् ।
तस्मादविद्या सोऽप्युक्ता विद्या स्वात्मैकरूपिणी ॥७८॥

अविद्याया मानसिद्धत्वाभावेऽपि मानसिद्धत्वादनात्मनो नाविद्याकार्यतेत्याशङ्क्य दृश्यत्वादिना तस्याप्यविद्यान्तर्भावमभिप्रेत्याऽऽह । अनात्मेतीति । का तर्हि विद्येत्याशङ्क्य विद्या चैतन्यं तदात्मैवेत्याह । विद्यात्विति ॥ ७८ ॥

आत्माग्रहातिरेकेण तस्या रूपं न विद्यते ।
अमित्रवदविद्येति सत्येवं घटते सदा ॥ ७९ ॥

केचित्तु ज्ञानप्रागभावमविद्यामाचक्षते तान्प्रत्याह । आत्मेति । आत्मनोऽग्रहो नामावरणमाच्छादनं न तदतिरेकेणाविद्याया रूपमस्ति न खल्वभावस्याऽऽच्छादकत्वं संभवत्यतो वस्त्वाच्छादकत्वमविद्यायाः स्वरूपमित्यर्थः । अविद्येति । नञस्तर्हि कोऽर्थः स्यादित्याशङ्क्य यथाऽमित्राधर्मादौ तदन्यत्वं तद्विरुद्धत्वं वा नञोर्थस्तथा विद्यातोऽन्यत्वं विद्याविरुद्धत्वं वा नञोऽर्थो न तदभावत्वमित्याह । अमित्रवदिति ॥ ७९ ॥

तस्मात्सदसदित्यादिर्विकल्पो मूढचेतसाम् ।
निरूप्यमाणो निर्याति न वेद्मीत्यग्रहात्मनि ॥८०॥

एवमभावविलक्षणत्वमविद्याया दर्शयित्वा यदनात्मवर्गस्याविद्याविजृम्भितत्वमुक्तं तदुपसंहरति । तस्मादिति । सदसदाद्यात्मकमनात्मजातं निरूप्यमाणमविद्यायामेव यस्मात्पर्यवस्यति तस्मादविद्याविलसितं तदेष्टव्यमित्यर्थः ॥ ८० ॥

तया संवीतचित्तोऽयं त्यक्त्वा देहं पुरातनम् ।
लिङ्गात्मा प्रविशेद्योनिं कर्मादिमरुतेरितः ॥८१॥

आत्माविद्याया वस्त्वाच्छादकत्वेऽपि प्रकृते शरीरजन्मनि किं सिद्धमित्याशङ्क्याऽऽह । तयेति । चित्तशब्देन विवेकज्ञानं गृह्यते लिङ्गात्मा लिङ्गोपहितो जीवः ॥ ८१ ॥

---

१ (ङ. च.) °वधार्य° । २ (ग. घ.) सा युक्ता । ३ (क. ख.) °मित्रादिव° । ४ (च.) °घारू° । ५ (ग. घ.) °त्वं च न° । ६ (ग. घ.) °त्वं च न° । ७ (क. ख. ङ. च.) °मित्रादिव° । ८ (क. ख.) °त्मा प्रवि° ।

अन्नमम्भस्तथा तेजो भुक्तं प्रत्येकशस्त्रिधा ।
त्रिवृत्कृतं तथैकैकं परिणामं प्रपद्यते ॥ ८२ ॥
पुरीषमांसबुद्ध्येशैर्मूत्रासृक्प्राणरश्मिभिः ।
तथास्थिमज्जावाग्भागैरन्नाम्भस्तेजांसि कालतः ॥ ८३ ॥

योषिद्योनिं प्रविष्टस्यानुशायिनो जीवस्य द्विविधशरीरग्रहणं प्रतिपादयितुं मात्रा भुक्तस्यान्नादेस्त्रिधा परिणामं दर्शयति । अन्नमित्यादिना ॥ ८२ ॥ ८३ ॥

मनोबुद्धीन्द्रियाणां स्यात्कर्मशक्तेश्च भारती ।
प्राणश्च प्राणभेदानामुपलक्षणसिद्धये ॥ ८४ ॥

योऽणिष्ठस्तन्मन इत्यत्र मनःशब्देन बुद्धीन्द्रियाण्युपलक्ष्यन्ते । योऽणिष्ठः सा वागित्यत्र वाक्पदेनावशिष्टानि कर्मेन्द्रियाण्युपलक्षितानि । योऽणिष्ठः स प्राण इत्यत्र प्राणशब्देन प्राणादिवृत्तीनामुपलक्षणं विवक्षितमित्याह । मन इति ॥ ८४ ॥

कर्मोत्थभावनाभिस्तु चोद्यते यद्यदिन्द्रियम् ।
जायते तदहंकाराद्यथाकर्म यथाश्रुतम् ॥ ८५ ॥

मनआदेश्चैतन्याभासानुविद्धस्यैव जन्मेत्येतदधुना सांख्यपक्षप्रतिक्षेपार्थं कथयति । कर्मोत्थेति ॥ ८५ ॥

श्रोताऽस्मीत्यभिमानाद्धि जायते श्रवणेन्द्रियम् ।
परिशिष्टेषु चाप्येवमिन्द्रियेषूपधारयेत् ॥ ८६ ॥

साभासादहंकारात्तत्तदिन्द्रियजन्मेत्येतदेव विशदयति । श्रोतेति । स्प्रष्टाऽस्मीत्यभिमानाद्धि जायते स्पर्शनेन्द्रियम् । द्रष्टाऽस्मीत्यभिमानात्तु जायते चक्षुरिन्द्रियमित्यादि द्रष्टव्यमित्याह । परिशिष्टेष्विति ॥ ८६ ॥

देहोत्पत्तिमनूत्पन्नो व्योमवद्घटजन्मना ।
अस्त्यादयोऽप्यतो न स्युः सति जन्मनि ते यतः ॥ ८७ ॥

अन्तःकरणादिवदात्मनोऽपि जन्म स्यादित्याशङ्क्य तस्यौपाधिकं जन्मेत्याह । देहेति । आत्मनः स्वतो जन्मनिरासादितरेऽपि भावविकारास्तस्य निषिद्धा[2] भवन्तीत्याह । अस्त्यादय इति ॥ ८७ ॥

---

१ ( क. ख. च. ) °योनिप्र° । २ ( ग. घ. ) निषेध्या भ° ।

यावद्यावदयं देहो वर्धते गर्भशायिनः ।
तावत्तावदभिव्यक्तिर्लिङ्गस्याप्युपजायते ॥ ८८ ॥

देहोत्पत्तिमनूत्पन्न इत्यत्र लिङ्गोत्पत्त्यपेक्षया जीवोत्पत्तिर्विवक्ष्यते चेदसदेव लिङ्गं कथमुत्पद्येतेत्याशङ्क्याऽऽह । यावद्यावदिति ॥ ८८ ॥

समग्रकरणस्याथ नवमे मासि देहिनः ।
व्यतीतानेकजन्मोत्था व्यज्यन्ते वासनाः क्रमात्॥८९॥

लिङ्गोपहितस्य जीवस्य गर्भाशयं प्रविष्टस्य तत्रैव वर्तमानस्य संसारोपवर्णनं वैराग्यार्थं करोति । समग्रेत्यादिना । देहिनो देहलिङ्गवतो धर्माधर्मवशाद्गर्भे प्रविष्टस्य तत्रैव शयानस्य सर्वैरेव करणैरुपेतस्य नवमे दशमे वा मासे जन्मप्राप्तौ तस्मात्पूर्वमेवातीतानेकजन्मप्रवृत्तवासनाभिव्यक्तिर्भवतीत्यर्थः । अथशब्दो मासविकल्पार्थः ॥ ८९ ॥

आविर्भूतप्रबोधोऽसौ गर्भदुःखादिसंस्कृतः ।
हा कष्टमिति निर्विण्णः स्वात्मानं शोशुचीत्यथ॥९०॥

गर्भस्थस्य वासनात्मकज्ञानोत्पत्त्यनन्तरं तत्कार्यस्य महतः शोकस्य स्वात्मन्युत्पत्तिं दर्शयति । आविर्भूतेति ॥ ९० ॥

अनुभूताः पुराऽसह्या मया मर्मच्छिदोऽसकृत् ।
करम्भवालुकास्तप्ता या दहन्त्यशुभाशयान् ॥ ९१ ॥

शोकप्रकारमनुवदति । अनुभूता इति । पुरा गर्भप्रवेशात्पूर्वमतीतेषु जन्मस्विति यावत् । मर्मच्छिदो वेदना इति शेषः । या हि करम्भवालुका भृशं तप्ताः सत्योऽशुभाशयान्पापकर्मवतो जनान्दहन्ति ताश्चासकृन्मयाऽनुभूता इति संबन्धः॥९१॥

जाठरानलसंतप्ताः पित्ताख्यरसविप्रुषः ।
गर्भाशये निमग्नं ता दहन्त्यतिभृशं तु माम् ॥९२॥

पूर्वानुभूतवेदनाभ्यः समधिका वेदना गर्भाशये शयानस्य ममाऽस्तीत्याह । जाठरेति ॥ ९२ ॥

---

१ ( ङ. ) °स्याप्यभिजा° । २ ( क. ख. ) °तर्जा° । ३ ( ग. घ. च. ) कथयति । ४ ( ग. घ. ) °भूता मयाऽसह्या पुरा मर्म° ।

औदर्यकृमिवक्त्राणि कूटशाल्मलिकण्टकैः ।
तुल्यानि वितुदन्त्यार्तं पार्श्वास्थिककचार्दितम् ॥९३॥

न केवलं गर्भे वर्तमानस्य मातुरौदर्येणाग्निना दग्धत्वमेव किंतु दुःखान्तरमपि दुःसहमस्तीत्याह । औदर्येति ॥ ९३ ॥

गर्भे दुर्गन्धभूयिष्ठे जाठराग्निप्रदीपिते ।
दुःखं मयाप्तं यत्तस्मात्कनीयः कुम्भिपाकजम्॥९४॥

कुम्भीपाकदुःखापेक्षया गर्भवासदुःखस्याऽऽधिक्यं दर्शयन्गर्भवासस्य हेयत्वमाह । गर्भ इति ॥ ९४ ॥

पूयासृक्श्लेष्मपायित्वं वान्ताशित्वं च यद्भवेत् ।
अशुचौ क्रिमिभावश्च तत्प्राप्तं गर्भशायिना ॥ ९५ ॥

यद्गर्भे शयनं तदनेकेषु नरकभेदेष्ववस्थानादतिरिच्यते । अतोऽपि गर्भवासनिरासाय प्रयतितव्यमित्याह । पूयेति ॥ ९५ ॥

गर्भशय्यां समारुह्य दुःखं यादृङ्मयाऽपि तत् ।
नातिशेते महद्दुःखं निःशेषनरकेषु यत् ॥ ९६ ॥

किंच सर्वेष्वेव नरकेषु यद्दुःखं महद्दृष्टं तन्न गर्भवासकृताद्दुःखादतिरिच्यते तेनापि गर्भे शयनं परिहर्तव्यमित्याह । गर्भेति ॥ ९६ ॥

अस्थियन्त्रविनिष्पिष्टः परीतः कुक्षिवह्निना ।
क्लेदासृग्दिग्धसर्वाङ्गो जरायुपटसंवृतः ॥ ९७ ॥

गर्भं प्रविष्टस्य जीवस्य गर्भस्थितिमुपसंहरति । अस्थीति ॥ ९७ ॥

निष्क्रामन्भृशदुःखार्तो रुदन्नुच्चैरधोमुखः ।
यन्त्रादिव विनिर्मुक्तः पतत्युत्तानशाय्यधः ॥ ९८ ॥

तस्य जन्मप्रकारं दर्शयति । निष्क्रामन्निति ॥ ९८ ॥

---

१ ( क. ख. °स्य दुःखाधि° । २ ( ग. घ. ) °चौ कृमिभा° । ३ ( ट. ) °हन्यते ( च. ) °हननिष्टं । ४ ( क. ख. घ. ) °परितः ।

अकिंचिज्ज्ञस्तदा बालो मांसपेशीसमः स्थितः ।
श्वमार्जारादिदंष्ट्रिभ्यो रक्ष्यते दण्डपाणिभिः ॥ ९९ ॥
पितृवद्राक्षसं वेत्ति मातृवड्डाकिनीमपि ।
पूयं पयोवदश्नाति धिक्पापिष्ठं हि शैशवम् ॥२००॥

जातस्य बाल्यावस्थां विवृणोति । अकिंचिज्ज्ञ इति ॥ ९९ ॥ २०० ॥

दृप्तोऽथ यौवनं प्राप्य मन्मथज्वरविह्वलः ।
गायत्यकस्मादुच्चैः स तथाऽकस्माच्च वल्गति ॥ १ ॥
आरोहति तरुं वेगाच्छान्तानुद्वेजयत्यपि ।
कामक्रोधमदान्धः सन्न किंचिदपि वीक्षते ॥ २ ॥

बाल्यानन्तरं यौवनावस्थां प्रपञ्चयति । दृप्त इति ॥ १ ॥ २ ॥

महापरिभवस्थानं जरां प्राप्याथ दुःखितः ।
श्लेष्मणा पिहितोरस्को जग्धमन्नं न जीर्यति ॥ ३ ॥
भग्नदन्तो भग्नदृष्टिः कटुतिक्तकषायभुक् ।
वातभुग्नकटिग्रीवाकरोरुचरणोऽबलः ॥ ४ ॥
गदायुतसमाविष्टः परिभूतः स्वबन्धुभिः ।
निःशौचो मलदिग्धाङ्ग आलिङ्गितधरोषितः ॥ ५ ॥
कासाधोवायुमुरजा सितश्मश्रुकचाम्बरा ।
श्वासोत्थस्वनवंशा च जाठरध्वनिगेयिका ॥ ६ ॥
वलीपलितवच्चर्मवरकञ्चुकधारिणी ।
दण्डतृतीयपादेयं प्रस्खलन्ती मुहुर्मुहुः ॥ ७ ॥

यौवनानन्तरं निरतिशयस्य परिभवस्यास्पदभूतां जरां प्राप्यातिदुःखितो भवतीत्याह । महापरिभवेति । तामेव जरां स्फोटयति । श्लेष्मणेत्यादिना ॥३॥ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥

---

१ ( क. ख. ङ. ) °मुरजा । २ ( ग. घ. च. ) माप्य दुः° । ३ ( क. ख. ) °स्फोरयति ।

अग्निपाकिकरुक्माढ्या सूक्ष्मत्वक्पटसंवृता ।
गुल्फजान्वस्थिसंघर्षचलन्नूपुरघोषिणी ॥ ८ ॥

अग्निपाकिकशब्देन शरीरे दृश्यमाना मांसग्रन्थयो गृह्यन्ते ॥ ८ ॥

प्रज्ञां मेधां धृतिं शौर्यं यूनां जग्ध्वा बलं तथा ।
कृतार्थेव प्रहर्षेण जरायोषित्प्रनृत्यति ॥ ९ ॥

प्रज्ञा श्रुतग्रहणसामर्थ्यम् । मेधा गृहीताविस्मरणसामर्थ्या वृत्तिः । धृतिशब्देन शरीरेन्द्रियावसादप्राप्तौ धैर्यम् । शौर्यं पराक्रमकृतं बलम् । बलं शरीरादिसामर्थ्यम् ॥ ९ ॥

ततोऽपि मृतिदुःखस्य दृष्टान्तो नोपलभ्यते ।
यस्माद्बिभ्यति भूतानि प्राप्तान्यपि परां रुजम् ॥१०॥

जरानन्तरं मरणावस्थां विवृणोति । ततोऽपीति । मृतिदुःखमेव विशिनष्टि । यस्मादिति ॥ १० ॥

ह्रियते मृत्युना जन्तुः परिष्वक्तोऽपि बान्धवैः ।
सागरान्तर्जलगतो गरुडेनेव पन्नगः ॥ ११ ॥

बान्धवैरेव मृतिदुःखं परिहर्तुं शक्यमित्याशङ्क्य सदृष्टान्तमाह । ह्रियत इति ॥ ११ ॥

हा कान्ते हा धनं पुत्र क्रन्दमानः सुदारुणम् ।
मण्डूक इव सर्पेण गीर्यते मृत्युना नरः ॥ १२ ॥

म्रियमाणस्य पुत्रकलत्रादिविषयं दारुणं रोदनं दृष्ट्वा मृत्युर्नागमिष्यतीत्याशङ्क्याऽऽह । हा कान्तेति ॥ १२ ॥

मर्मसूत्कृत्यमानेषु मुच्यमानेषु सन्धिषु ।
यद्दुःखं म्रियमाणस्य स्मर्यतां तन्मुमुक्षुभिः ॥ १३ ॥

यथोक्तमरणावस्थाप्राप्त्यपेक्षया पूर्वमेव स्वस्थावस्थायां तत्प्राप्तिपरिहारार्थं शुभाचरणाय मुमुक्षुभिः स्मर्तव्यं दर्शयति । मर्मस्विति ॥ १३ ॥

---

१ ( घ. ) °घर्षोचल° । २ ( क. ख. ) मर्कर्ष° । ३ ( ग. घ. ) °त्युनाऽवरः ।

दृष्टावाक्षिप्यमाणायां संज्ञया ह्रियमाणया ।
मृत्युपाशेन बद्धश्च त्रातारं नोपलप्स्यसे ॥ १४ ॥

मरणे प्राप्ते शुभाचरणद्वारेण दुःखं परिहर्तव्यमित्याशङ्क्याऽऽह । दृष्टाविति ॥ १४ ॥

संरुध्यमानस्तमसा महच्छ्वभ्रमिवाऽऽविशन् ।
उरो घ्नतस्तदा ज्ञातीन्द्रक्ष्यसे दीनचक्षुषा ॥ १५ ॥

तदा ज्ञातयस्त्रातारो भविष्यन्तीत्याशङ्क्याऽऽह । संरुध्यमान इति ॥ १५ ॥

अयःपाशेन कालेन स्नेहपाशेन बन्धुभिः ।
आत्मानं कृष्यमाणं त्वमभितो द्रक्ष्यसे तदा ॥ १६ ॥

किंच तस्यामवस्थायां शुभाचरणे नास्ति स्वातन्त्र्यमित्याह । अयःपाशेनेति ॥ १६ ॥

हिक्किकाबाध्यमानस्य श्वासेन परिशुष्यतः ।
कृष्यमाणस्य पाशेन न खल्वस्ति परायणम् ॥ १७ ॥

म्रियमाणस्य मरणावस्थामुपसंहरति । हिक्किकेति । पाशो द्विविधो विवक्षितो मुमूर्षोः ॥ १७ ॥

संसारयन्त्रमारूढो यमदूतैरधिष्ठितः ।
क्व यास्यामीतिदुःखार्तः कालपाशेन योजितः ॥ १८ ॥

स्थूलादेहान्निष्क्रान्तस्य कर्मफलभोगार्थं गच्छतोऽपि नास्ति स्वच्छन्दतेत्याह । संसारेति ॥ १८ ॥

मातापितागुरुसुताः स्वजनो ममेति
मायोपमे जगति कस्य भवेत्प्रतिज्ञा ।
एको यदा व्रजति कर्मपुरःसरोऽयं
विश्रामवृक्षसदृशः खलु जीवलोकः ॥ १९ ॥

मात्रादिजीवलोकोऽस्य तस्यामवस्थायां सहायो भविष्यतीत्याशङ्क्याऽऽह । मातेति ॥ १९ ॥

---

१ ( क. ख. ) °लभ्यते ॥ १४ ॥ ( घ. ) °लप्स्यते ॥ १४ ॥ २ ( क. ख. °त्याशङ्क्याह । ३ ( क. ग ) स्थूलदेहा°।

सायं सायं वासवृक्षं समेताः
प्रातः प्रातस्तेन तेन प्रयान्ति ।
त्यक्त्वाऽन्योन्यं तं च वृक्षं विहङ्गा
यद्वत्तद्वज्ज्ञातयोऽज्ञातयश्च ॥ २० ॥

उक्तं विश्रामवृक्षसदृशत्वं जीवलोकस्य व्यक्तीकरोति सायं सायमिति ॥२०॥

मृतिबीजं भवेज्जन्म जन्मबीजं तथा मृतिः ।
घटीयन्त्रवदश्रान्तो बभ्रमीत्यनिशं नरः ॥ २१ ॥

गर्भजन्मबाल्ययौवनजरामरणाद्यवस्थासु जीवस्य वैराग्यार्थं प्रपञ्चितां संसारगतिमुपसंहरति । मृतीति ॥ २१ ॥

द्युपर्जन्यधरामर्त्ययोषिदग्निषु दैवतैः ।
श्रद्धोडुराजवर्षान्नरेतआख्यं हविर्हुतम् ॥ २२ ॥
पञ्चम्यामाहुतावेवं पुंवचा जायते पुमान् ।
क्रमात्तस्य महानर्थसंसृत्यच्छित्तिरुच्यते ॥ २३ ॥

इत्याद्या विक्रियाः सर्वा लिङ्गदेहसमाश्रयाः ।
अतद्वानपि संमोहात्तद्वानित्यभिमन्यते ॥ २४ ॥

समनन्तरवाक्येषु पुरुषग्रहणस्य तात्पर्यं वक्तुं यथोक्तस्य संसारस्योपाधिनिष्ठत्वादात्मनिष्ठत्वाभावात्तस्मिन्वैराग्योपयोगित्वेन तदुपवर्णनमुचितमित्याशङ्क्य परिहरति । इत्याद्या इति । यद्यपि प्रागुक्ता गर्भवासाद्या विक्रियाः शरीरद्वयनिष्ठा नात्मनि तिष्ठन्ति तथाऽप्यात्मा वस्तुतो गर्भवासादिविक्रियारहितोऽपि देहद्वयादात्मनो विवेकाग्रहणादहमेव गर्भवासादिविक्रियावानस्मीत्यात्मानं मोहमाहात्म्यादभिमन्यते तेन तत्र संसारो दृश्यमानो वैराग्यं भावयिष्यतीत्यर्थः ॥ २४ ॥

ज्ञाताऽस्मीत्यभिमानाद्धि चेष्टते ज्ञानकर्मणी ।
मन्ताऽस्मीति ततो मोहात्कुरुते मानसीः क्रियाः ॥२५॥

कथं देहद्वयेऽहमभिमानः स्यादित्याशङ्क्य बुद्धावहमभिमानमज्ञानकृतं तत्कार्यं च प्रकटयति । ज्ञातेति । मनस्यहमभिमानमविवेककृतं तत्कार्यं च कथयति । मन्तेति ॥ २५ ॥

प्राणाद्यात्माभिमानेन कर्मचेष्टां प्रपद्यते ।
चक्षुराद्यभिमानी च रूपाद्यालोचनापरः ॥ २६ ॥

प्राणापानादौ कर्ताऽस्मीत्यात्माभिमानं तत्कार्यं चाज्ञानप्रयुक्तमुपन्यस्यति । प्राणादीति । इन्द्रियेषु ममाभिमानं तत्कार्यं चाज्ञानकृतं दर्शयति । चक्षुरादीति ॥ २६ ॥

तथा देहस्य दाहादौ दग्धोऽस्मीति च मन्यते ।
श्यामोऽस्मीति च देहस्य श्यामत्वं मन्यतेऽबुधः ॥२७॥

स्थूले देहे मोहादभिमानं तत्कार्यं च प्रकटयति । तथेति । देहादात्मनो विवेकग्रहविहीनत्वमबुधत्वम् ॥ २७ ॥

---

१ ( क. ख. ) °क्ये पु° । २ ( ग. घ. ङ. च. °गुक्तग° । ३ ( च. ) °निष्ठास्तथा° । ४ ( ग. ग. ) °मणि । ५ ( ग. घ. °मविवेकछ° । ६ (क. ख.) °स्यात्म्याभि° । ७ ( क. ख. ) स्थूलदे° ।

गोधनाद्यभिमानेन तद्वानस्मीत्यविद्यया ।
ब्रह्मचारी गृहस्थोऽहं तापसोऽस्मि तथा मुनिः ॥
देहलिङ्गात्मसंस्कारान्मन्यते सङ्गकारणात् ॥ २८ ॥

गवादौ ममाभिमानादविद्यया विद्यमानाद्यत्कार्यं जायते तद्वदाहरति । गोधनादीति । देहे लिङ्गात्मनि च ये संस्कारा ब्रह्मचारित्वादयः स्नानाचमनादयश्च तानविद्याकृतांस्तयोरेव सङ्गाद्धेतोरात्मनि कल्पयतीत्याह । ब्रह्मचारीति ॥ २८ ॥

भिन्नात्मनां तु भूतानां शरीरं कार्यमुच्यते ।
ममाहमितिसंमोहादनर्थं प्रतिपद्यते ॥ २९ ॥

किं बहुना । पञ्चभूतमयं शरीरं तस्मिन्नहं ममाभिमानादात्मनो नित्यमुक्तस्यैव संसारो मोहमाहात्म्यात्प्रतिभातीत्युपसंहरति । भिन्नात्मनामिति ॥ २९ ॥

सर्वेषां चान्नकार्यत्वे ब्रह्मजत्वे समे तथा ।
कर्मज्ञानाधिकारित्वात्पुमानेवेह गृह्यते ॥ ३० ॥

एवमात्मनि संसारं दर्शयित्वा समनन्तरवाक्ये पश्वादिग्रहणं विहाय पुरुषग्रहणस्य तात्पर्यमाह । सर्वेषां चेति ॥ ३० ॥

अनेकानर्थनीडेऽस्मिन्निमग्नं ब्रह्मविद्यया ।
संक्रामयितुमिष्टत्वाद्ब्रह्मान्तरतमं नरम् ॥ ३१ ॥

कर्मज्ञानाधिकारित्वस्य पुरुषग्रहणहेतुत्वं साधयति । अनेकेति । कर्मभिः शुद्धान्तःकरणस्य ब्रह्मज्ञानान्मोक्षोऽत्र विवक्ष्यते तस्मादनेकानर्थाश्रये संसारसागरे पतितं नरं ब्रह्मास्मीतिविद्यया सर्वान्तरतमं ब्रह्म प्रापयितुमिष्टत्वाद्यस्य कर्मज्ञानयोरधिकारः संभाव्यते तस्यैवात्र ग्रहणं युक्तमित्यर्थः ॥ ३१ ॥

तरुशाखाग्रदृष्ट्यैव सोमं यद्वत्प्रदर्शयेत् ।
निष्कोशं कोशदृष्ट्यैव प्रतीचि ब्रह्म दर्श्यते ॥ ३२ ॥

ब्रह्मविद्यया मोक्षस्यात्र विवक्षितत्वे सैव वक्तव्या कोशपञ्चकोपन्यासस्तु वृथेत्याशङ्क्याऽऽह । तरुशाखेति ॥ ३२ ॥

---

१ (ग. घ. च.) °विद्यावि°। २ (ग घ.) °योरेव°। ३ (ङ.) °दर्श्यते । ४ (क. ख.) °ह्म दृश्यते । ५ (ग. घ.) °थेत्यत आह ।

अनादाविह संसारे वासनारञ्जिता मतिः ।
प्रतीच्युपायतः कर्तुं शक्या तस्मात्स उच्यते ॥३३॥

ब्रह्मविद्योपायत्वेन कोशपञ्चकोक्तिरित्युक्तमेव व्यक्तीकरोति । अनादाविति ॥ ३३ ॥

द्वैतास्पृक्प्रत्यगात्मैकः प्रतीचीव परागपि ।
युष्मदस्मद्विभागाभ्यां भिद्यतेऽविद्यया मृषा ॥३४॥

ब्रह्मविद्योपायत्वेन कोशपञ्चकोपदेशे ब्रह्मकोशयोरभेदादद्वैतहानिरित्याशङ्क्याऽऽह । द्वैतास्पृगिति । यथाऽयं प्रत्यगात्मा प्रतीचि स्वात्मनि भेदस्पर्शमन्तरेणैकोऽवतिष्ठते तथा परागपि कोशापेक्षया द्वैतस्पर्शी न भवतीत्यत्र हेतुमाह । युष्मदिति । युष्मत्पञ्चकमस्मत्पञ्चकं चेति कोशदशकरूपेण स्वाविद्यया प्रत्यगात्मनो विभक्तत्वाद्भेदस्य सर्वप्रकारस्याऽऽस्माऽविद्याकृतत्वेन मिथ्यात्वान्नाद्वैतहानिरित्यर्थः ॥ ३४ ॥

अस्मद्विभागे पञ्चास्य यथैवान्नमयादयः ।
तथा तत्प्रत्यगात्मानो युष्मदन्नादयः स्मृताः ॥ ३५ ॥

युष्मदस्मद्विभागेन सूचितान्दश कोशानेव दर्शयति । अस्मादिति । यथैवास्य प्रत्यगात्मनोऽस्मद्विभागे पञ्चान्नमयप्राणमयमनोमयविज्ञानमयानन्दमया मयडर्थभूताः कोशा भवन्त्यहंबुद्धिग्राह्यास्तथा तेषां प्रत्यगात्मानोऽन्नप्राणमनोविज्ञानानन्दाः प्रकृत्यर्थभूता युष्मद्भावेनाभिमतास्तेष्वहंबुद्ध्यभावादेवमस्ति कोशदशकमित्यर्थः ॥ ३५ ॥

आध्यात्मिकान्विलाप्याथ यथास्वं प्रत्यगात्मसु ।
अन्नादीन्पर्युपासीत ह्युत्तरोत्तररूपगान् ॥ ३६ ॥

कोशपञ्चकस्य प्रकृतिप्रत्ययविभागेन दशधा करणं कुत्रोपयुक्तमित्याशङ्क्याऽऽह । आध्यात्मिकानिति । पूर्वोक्तरीत्या कोशानां दशधाप्रतिपत्त्यनन्तरमाध्यात्मिकान्नमयप्राणमयमनोमयविज्ञानमयानन्दमयान्मयडर्थान्प्रकृत्यर्थेषु प्रत्येकं कारणेष्वात्मभूतेष्वन्नप्राणमनोविज्ञानानन्देषु कारणातिरेकेण कार्यं नास्तीति विवेकबुद्ध्या प्रविलाप्य तन्मात्रतया ज्ञात्वा पुनरन्नं प्राणतया प्राणं मनस्त्वेन मनो विज्ञानतया विज्ञानमानन्दशब्दितमूलकारणमात्रतया निरूपयेदित्यर्थः ॥ ३६ ॥

---

१ (क. ख.) °कोक्त्युप°। २ (ग. घ.) °स्पर्शी न ।

जग्ध्वा कार्यात्मतामेवं कारणात्मतया स्थितः ।
आत्मनाऽऽलिङ्गते ब्रह्म वाक्याज्जग्ध्वा च तामपि॥३७॥

प्रदर्शितया प्रक्रियया कार्यात्मतां कारणात्मतयोपसंहृत्याज्ञातब्रह्मरूपेण स्थितो विद्वानहं ब्रह्मास्मीतिवाक्योत्थज्ञानेन तामपि कारणात्मतां प्रविलाप्य स्वरूपेण कार्यकारणविलक्षणं ब्रह्म प्राप्नोतीत्येतदाह । जग्ध्वेति ॥ ३७ ॥

अन्नं विराडिति ज्ञेयं प्राणात्तदभिवर्धते ।
ऋग्यजुःसामरूपोऽतो वेदात्माऽन्तर्मनोमयः ॥३८॥

अन्नादीन्पर्युपासीतेत्युक्तानन्नादीन्कथयति । अन्नमिति । क्रियाविज्ञानशक्तिमति सूत्रात्मनि प्राणशब्देन क्रियाशक्तिभागो गृह्यते ततोऽन्नस्योत्पत्तिरित्याह । प्राणादिति । विज्ञानशक्तिभागोऽपि मनो विज्ञानं चेति द्वेधा भिद्यते तत्र सविकल्पकज्ञानोत्पादनशक्तिमदन्तःकरणं मनःशब्दवाच्यमित्याह । ऋग्यजुरिति । अतोऽस्मात्प्राणादन्तरितिसंबन्धः । मनोमयशब्देन मनो गृह्यते ॥ ३८ ॥

वेदार्थविषया बुद्धिर्विज्ञानं निश्चयात्मकम् ।
ज्ञानकर्माभिनिर्वृत्त आनन्दः फललक्षणः ॥ ३९ ॥

प्रकृतिप्रकरणान्निर्विकल्पज्ञानोत्पादनशक्तिमदन्तःकरणं विज्ञानमित्याह । वेदार्थेति । आनन्दशब्देन कारणमुच्यत इत्यङ्गीकृत्याऽऽह । ज्ञानेति । तत्र प्राणो मनो विज्ञानं चेतिकोशत्रयं सूत्रात्मरूपमन्नं विराट्कोश आनन्दः कारणकोश इति संग्रहः ॥ ३९ ॥

त्रीण्येवान्नानि चैतानि प्राजापत्यानि सर्वशः ।
प्राणो मनस्तथा वाक्च विराडन्नात्मतां गतः ॥४०॥

एतच्च कोशपञ्चकमुक्तं बृहदारण्यकेऽपीत्याह । त्रीण्येवेति । वाक्शब्देन विज्ञानं गृह्यते । कनीयोऽन्नं करिष्य इत्यत्रान्नशब्देन विराडुच्यते तद्वेदं तर्हीत्यत्र कारणमुक्तमिति चशब्दार्थः ॥ ४० ॥

---

१ (घ.) °त्युक्तान्न°। २ (ङ) °क्तिविभा°। ३ (क ख.) °यात्मिका ।

चतुर्णां प्रत्यगात्मैवमानन्दमय उच्यते।
प्रज्ञानघनरूपत्वात्स्याद्भेदोऽप्यस्य कार्यतः॥ ४१॥

यथाऽन्नादीनां चतुर्णां प्रकृत्यर्थानामानन्दस्वरूपमेवमन्नमयादीनां प्रत्ययार्थानामानन्दमयः प्रत्यगात्मा स्वरूपमित्येतदाह। चतुर्णामिति। तत्र कोशचतुष्टयस्य जीवव्यतिरेकेणाभावादितिहेतुमाह। प्रज्ञानेति। जीवस्य प्रज्ञानघनत्वे कथं शिरःपुच्छादिकल्पनेत्याशङ्क्य कर्मफलभेदादित्याह। स्यादिति॥ ४१॥

शिरआदिप्रक्लृप्तिस्तु स्यादुपासनकर्मणे।
तस्मादेवं चितीरेता मानसीर्व्याचचक्षिरे॥ ४२॥

स वा एष पुरुष इत्यादौ तात्पर्यार्थमुक्त्वा तस्येदमेव शिर इत्यादेस्तात्पर्यमाह। शिरआदीति। उपासनानुष्ठानार्थं शिरआदिकल्पनामाश्रित्य वृद्धानामपि प्रसिद्धिरित्याह। तस्मादिति॥ ४२॥

शिरो मूर्धा भुजौ पक्षावात्मा कायश्च मध्यमः।
शेषं पुच्छमिति ज्ञेयं चितिमेवं विचिन्तयेत्॥४३॥

तस्येदमेवेत्यादेरक्षरोत्थमर्थं कथयन्पञ्चप्रकारां चितिमेव चिन्तनीयां स्फोरयति। शिर इति॥ ४३॥

उपासीनश्चितीरेवं विद्वानेता यथाक्रमम्।
पूर्वपूर्वप्रहाणेन ह्यन्तरन्तः प्रपद्यते॥ ४४॥

पञ्चप्रकारचित्युपासनेन किं फलतीत्यपेक्षायामाह। उपासीनइति। पञ्चविधकोशानां चित्यात्मकानां नैरन्तर्येणानुसन्धानाद्बुद्धिशुद्ध्यतिशये विवेकबुद्धिर्भवति। तद्बलाच्च पूर्वं पूर्वं कोशमपहायोत्तरमुत्तरं प्रतिपद्यते तदेवं सर्वानपि कोशान्प्रविलाप्याहं ब्रह्मास्मीति ज्ञानान्मोक्षमधिगच्छतीत्यर्थः॥ ४४॥

श्रुतेरनतिशङ्क्यत्वात्संभाव्येत यथोदितम्।
लिङ्गप्रत्यक्षगम्ये हि स्यादाशङ्का नृबुद्धितः॥ ४५॥

कथं तर्हि सर्वं वै तेऽन्नमाप्नुवन्तीत्यादि यथाश्रुतं फलमुपासनस्य संभवेदेकस्योभयफलत्वासंभवादित्याशङ्क्य फलद्वयमेकस्योपासनस्य श्रुतिसिद्धत्वादविरुद्धमित्याह। श्रुतेरिति। श्रुतेर्निर्दोषत्वात्तदुक्तेऽर्थे शङ्काभावे कुत्र शङ्कायाः सावकाशत्वमित्याशङ्क्य पुरुषबुद्धिवशात्प्रत्यक्षादिषु करणदोषसंभवादाशङ्का स्याद्वेदे तु तदभावान्नैवमित्याह। लिङ्गेति॥ ४५॥

---

१ (ग. घ. ङ.) °त्यादेस्तात्प°। २ (ग. घ.) °नार्थे शि°। ३ (क.) °क्षरार्थे। ४ (ग. घ.) °येन वि°। ५ (ग. घ.) °वं प्रति प्र°। ६ (क. ख.) °पु कार।

स्वभावतो वा संप्राप्तमनूद्योपासनं श्रुतिः ।
नामादाविव भूमानं विधत्ते ज्ञानमात्मनि ॥ ४६ ॥

पञ्चविधकोशोपासनोपदेशस्य तात्पर्यान्तरमाह । स्वभावतो वेति । यथा छान्दोग्ये सप्तमे प्रपाठके स्वभावतः सिद्धमुपासनमुच्चनीचभावेन नामादिविषयमनूद्य भूमविज्ञानं विधीयते तथा कोशेष्वात्माभिमानिनो यथोक्तध्यानानुष्ठानादेव पूर्वपूर्वस्योत्तरोत्तरस्मिन्विलापनं कृत्वा श्रुतफलविवक्षामन्तरेणैव ब्रह्मात्मैकत्वविज्ञानं प्रधानत्वादत्र विवक्षितमित्यर्थः ॥ ४६ ॥

श्रुत्यन्तराद्वा संप्राप्तं मोक्षादर्वाक् फलाय तु ।
तदनूद्य परं श्रेयः प्राप्तये ज्ञानमुच्यते ॥ ४७ ॥

कोशपञ्चकोपन्यासस्यापरं तात्पर्यमाह । श्रुत्यन्तरादिति । यद्धि मोक्षादर्वाचीनं संसारान्तर्भूतं फलं तत्प्राप्तये विराडात्मनः सूत्रात्मनश्च बृहदारण्यकादावुपासनं सिद्धं तदनुवादेन मोक्षफलं ज्ञानमत्रोच्यत इत्यर्थः ॥ ४७ ॥

ब्रह्मविद्योडुपेनैवं कोशानर्थमहोदधेः ।
निनीषन्ती परं पारं स वा इत्यभ्यधादथ ॥ ४८ ॥

एवं तात्पर्यमुक्त्वा तत्रैवार्थे वाक्यं पदार्थकथनार्थमवतारयति । ब्रह्मविद्येति । निनीषन्ती श्रुतिरितिशेषः । पुरुषस्यैव ज्ञानकर्मणोरधिकारो न पश्वादेरिति निर्धारणानन्तरमित्यथशब्दार्थः ॥ ४८ ॥

मूलात्मानं स शब्देन स्पृष्ट्वा तत्स्मृतयेऽथ वै ।
कोशात्मतां समापन्न एष इत्यभिधीयते ॥ ४९ ॥

तत्र पदत्रयस्यार्थं कथयति । मूलात्मानमिति । कार्यकारणविलक्षणं प्रत्यगात्मानं सशब्देन गृहीत्वा तस्यैव सर्वोपनिषत्प्रसिद्धस्य वैशब्देनानुसंधानं कृत्वा स एव स्वाविद्यया पञ्चकोशात्मकत्वं प्राप्तः सन्नपरोक्षत्वादेष शब्देनोपदिश्यत इत्यर्थः ॥ ४९ ॥

अविद्यया तदर्होऽपि रज्जुः सर्पात्मतामिव ।
कोशपञ्चकतां यातस्तमनुक्रोशतीव हि ॥ ५० ॥

कार्यकारणविलक्षणश्चेत्प्रत्यगात्मा तर्हि कथमसावविद्ययाऽपि पञ्चकोशात्मतां गन्तुमर्हतीत्याशङ्क्याऽऽह । अविद्ययेति ॥ ५० ॥

१ ( ग. घ. ङ. च. ) °रेण ब्र° । २ ( घ. ङ. च. ) °त्वज्ञा° । ३ ( क. ख. ) °नैवं को° । ४ ( ग. घ. ) °त्मत्वं । ५ ( ग. घ. )°वोह वै । ६ ( ग. घ. ) °त्याह ।

मयडत्र विकारार्थे निषिद्धोऽसौ परात्मनः ।
युक्त्यागमाभ्यामन्नस्य कार्यं देहः प्रतीयते ॥ ५१ ॥

यथोक्तंप्रत्यगात्मनोऽन्नरसमयत्वं कथमित्याशङ्क्याऽऽह । मयडत्रेति । प्रकृते वाक्ये प्रयुक्तो मयड्विकारार्थे प्रयुज्यते । विकारेऽर्थ परस्य प्रत्यगात्मनो निरवयवत्वासङ्गत्वादियुक्त्या न जायते म्रियते चेत्याद्यागमाच्च निषिद्धत्वान्न सिध्यति । अतः शरीरस्यान्नरसविकारत्वप्रतीतेरात्मनोऽपि तदुपाधित्वात्तथा व्यपदेशसिद्धिरित्यर्थः ॥ ५१ ॥

इदमेव शिरस्तस्य मा भूदध्यासलक्षणम् ।
प्राणकोशवदेवेति तस्मादेवावधार्यते ॥ ५२ ॥

प्रसिद्धमेव शिरआदिप्रथमकोशे ग्राह्यं न प्राणादिष्विव कल्पनेति दर्शयितुं तस्येदमेवेत्यत्रावधारणमित्याह । इदमेवेति ॥ ५२ ॥

विराट्पिण्डात्मनोरैक्यं श्रुत्यन्तरवशादिह ।
उपासनोपदेशाच्च जानीयात्पिण्डदेवताम् ॥ ५३ ॥

अन्नरसमयशब्देन न प्रसिद्धमेव शरीरं ग्राह्यं किंतु विराडात्माऽपीत्याह । विराडिति । आत्मैवेदमग्र आसीत्पुरुषविध इत्यादिश्रुत्यन्तरे शरीरविराजोरेकत्वस्य विवक्षितत्वाचेऽन्नं ब्रह्मोपासत इत्यत्र ध्यानोपदेशाच्छिरआदिकल्पनायाश्च ध्यानार्थत्वाद्विराड्देवताऽन्न ग्रहीतव्येत्यर्थः ॥ ५३ ॥

विराडात्मकतां याते पिण्डेऽध्मात्मावसायिनी ।
प्राणोवाय्वात्मतामेति प्रध्वस्तघटदीपवत् ॥ ५४ ॥

विराजो देहस्य च किमर्थमेकत्वमुच्यते तत्राह । विराडात्मकतामिति । उपासनातः शरीरस्य विराडात्मभावे संवृत्ते प्राणोऽपि शरीरान्तर्गतो हिरण्यगर्भो भवति ततश्च तदुपाधिरात्माऽनवच्छिन्नः सिध्यति यथा घटे प्रध्वस्ते कपालादिभावमापन्ने तदन्तर्गतो दीपस्तेजोमात्रतामापद्यते तद्वदित्यर्थः ॥ ५४ ॥

---

१ ( ख. ङ. ) °रार्थो नि° । २ ( ङ. ) °क्रमस्य प्र° । ३ ( च. ) °रः स्पर्शशून्यस्य प्र° । ४ ( क. ख. ) °त्वाच येऽन्नं ।

विद्यादन्नमयेनैव मूषायां द्रुतताम्रवत् ।
सर्वान्प्राणमयादींस्तान् रचितान्पुरुषाकृतीन् ॥ ५५ ॥

अन्नमयस्य प्रसिद्धमेव शिरआदि प्राणमयादेस्तु कथमित्याशङ्क्याऽऽह । विद्यादिति । यथा मूषायां द्रुतं ताम्रादि प्रक्षिप्तं मूषाकारं भजते तथा शरीरस्य शिरआदिमत्त्वात्तदन्तर्वर्तिप्राणमयादेस्तद्युक्तमुपासनार्थं पदार्थविवेकसौकर्यार्थं चेयं कल्पनेत्यर्थः ॥ ५५ ॥

यथोदितानुवादी तु श्लोकोऽप्यत्र निगद्यते ।
ब्राह्मणोक्तार्थविज्ञानदार्ढ्यम्ने हितकाम्यया ॥ ५६ ॥

तदप्येष श्लोको भवतीत्यस्यार्थमाह । यथोदितेति ॥ ५६ ॥ इति प्रथमः खण्डः ॥ १ ॥

अन्नादेव प्रजाः सर्वा जायन्तेऽन्नेन बृंहिताः ।
वर्धन्ते त्वन्नमेवैताः प्रविलीयन्ति सर्वशः ॥ ५७ ॥

श्लोकाक्षराणि योजयति । अन्नादेवेति ॥ ५७ ॥

भूतेभ्यः पूर्वनिष्पत्तेर्ज्येष्ठमन्नं विराड्भवेत् ।
स वै शरीरी प्रथमस्तथा पौराणिकी स्मृतिः ॥ ५८ ॥

अन्नं हि भूतानां ज्येष्ठमिति कथमन्नस्य ज्येष्ठत्वमुच्यते तत्राह । भूतेभ्य इति । विराजो भूतापेक्षया पूर्वनिष्पन्नत्वे प्रमाणमाह । स वा इति ॥ ५८ ॥

ओषणादग्निरोषः स्याद्धातूनुष्यति येन सः ।
धानात्तस्यान्नतत्त्वज्ञैरौषधं शब्द्यते सदा ॥ ५९ ॥

अन्नस्य सर्वौषधत्वं श्रुत्योच्यते तत्कथमित्याशङ्क्याऽऽह । ओषणादिति । दहनादिति यावत् । अग्नेरोषत्वं साधयति । धातूनिति । उष्यति दहतीत्यर्थः । अन्नालाभे जाठरोऽग्निर्धातूनेव दहति तस्याग्नेरन्नेन धानात्पानादुपशमनात्तृप्तिसाधनादन्नमौषधमित्येतदाह । धानादिति ॥ ५९ ॥

सर्वेषां जाठराग्न्याख्यं वत्सं चोष्यादिभिस्तनैः ।
अन्नं गौर्धयते यस्मात्सर्वौषधमतो भवेत् ॥ ६० ॥

सर्वौषधमित्यस्य संपिण्डितमर्थमाह । सर्वेषामिति । चोष्यादिभिरित्यादिशब्देन लेह्यभक्ष्यभोज्यानां ग्रहणं धयते पाययतीत्यर्थः ॥ ६० ॥

---

१ (ङ.) °दिकं मा° । २ (ङ.) °रं जायते । ३ (ग. घ.) °न्ते तेन बृं° । ४ (ङ.) °म्यान्नं व° । ५ (ख.) °ढ्याग्नि° ।

उद्भूतिस्थितिहानिभ्यो जगतोऽन्नं हि कारणम् ॥६१॥
कार्यस्य कारणाद्ब्रह्म तद्ये नित्यमुपासते।
आप्नुवन्त्यखिलं तेऽन्नमध्यात्मं दैवतात्मना ॥ ६२ ॥

येऽन्नं ब्रह्मोपासत इत्यत्रान्ने ब्रह्मशब्दप्रयोगे निमित्तमाह। उद्भूतीति। अन्न ब्रह्मोपासनस्य फलमाह। तद्य इति। तदन्नं विराडात्मकं ये दीर्घकालमादरनैरन्तर्याभ्यामहंग्रहेण ध्यायन्ति ते विराडात्मरूपेण सर्वमेवाऽऽध्यात्मिकमन्नमाप्नुवन्ति। विराडुपासको हि विराडात्मवदेव सर्वेषामन्नानामत्ता भवतीत्यर्थः॥ ६१ ॥ ६२॥

सैषा विराडिति ह्युक्तमन्नात्तृत्वं हि ताण्डिकैः।
कार्यं सर्वं यतो व्याप्तं कारणेनात्तृरूपिणा ॥
इति हेतूपदेशाय ह्यन्नं हीत्युच्यते पुनः ॥ ६३ ॥

विराजोऽन्नात्तृत्वे प्रमाणमाह। सैषेति। अन्नं हि भूतानामित्यादि पुनर्वचनं किमर्थमित्याशङ्क्याऽऽह। कार्यमिति। उपासकस्य विराडात्मरूपेण सर्वान्नभक्षणसमर्थनार्थमुपास्यस्य विराडात्मनः कार्यव्याप्तिलक्षणो हेतुः पुनर्वचनेन चोच्यते। दृष्टं हि सर्वं कार्यं कारणेन व्याप्तं प्रकृते चात्तृरूपेण विराजा सर्वमन्नं यतो व्याप्यते ततश्चान्नोपासकस्य विराडात्मरूपेण सर्वान्नभक्षणं संभवतीतिहेतुकथनार्थमन्नं हीत्यादि पुनर्वचनमुचितमित्यर्थः ॥ ६३ ॥

अद्यतेऽन्नं प्रधानत्वाददितित्वात्तथाऽत्ति च।
अन्नान्नादत्वहेतोस्तदन्नं हीत्युच्यते बुधैः ॥ ६४ ॥

अद्यतेऽत्तिचेत्यादिवाक्यद्वयस्यार्थमाह। अद्यत इति। अदनादद्यमानत्वाच्चान्नमिति ॥ ६४ ॥

आप्नोति सर्वकार्याणि कारणात्मतया विराट्।
ततोऽप्यन्तःप्रवेशाय तस्मादित्यभिधीयते ॥ ६५ ॥

प्रजापतिरूपमेवोक्तमित्यन्नान्नादत्वेन विराजो व्याप्तिमुक्तामुपसंहरति ॥ आप्नोतीति। प्रकृतात्प्रकृत्यर्थादन्नादन्नमयाच्च प्रत्ययार्थादन्तरवस्थितात्मनि बुद्धिप्रवेशनार्थं प्राणपर्यायस्य प्रवृत्तिरित्याह। ततोऽपीति ॥ ६५ ॥

१ (ग. घ. ङ.) °त्मं देवं। २ (ग. घ. ङ.) °ण्डिके। ३ (ग. घ. ङ.) °य त्वन्नं। ४ (ङ. च.) °नेनोच्य°। ५ (ग. च.) °चान्नरू°। ६ (घ. ङ.) °रूपिणा वि°। ७ (ग. घ.) °ददनाच्च तथाऽ°। ८ (ग. घ.) °त्ति चाद्य वा°।

वैशब्देनैव संस्मार्य दवीयोदेशवर्तिनम् ॥ ६६ ॥
तस्माच्छब्देन वैराजमादायाध्यात्मरूपिणः ।
एतस्मादितिशब्देन वैराजत्वं प्रबोध्यते ॥ ६७ ॥

प्रस्ताविते वाक्ये शब्दत्रयस्यार्थमाह । वैशब्देनेति । दूरतरे देशे व्यवस्थितं प्रकृत्यर्थभूतमन्नात्मकं विराडात्मानं वैशब्देन संस्मार्य तत्रैव तस्माच्छब्दं प्रयुज्य तेन वैराजमात्मानं गृहीत्वा पुनरध्यात्मरूपिणो देहस्य प्रत्ययार्थस्य सन्निहितत्वादेतस्मादित्युपादानाच्छब्दसमानाधिकृतैतच्छब्देन विराडेकत्वमेतस्य प्रदर्श्यते । पदद्वयसामानाधिकरण्यस्यैकत्वमन्तरेणायोगादित्यर्थः ॥ ॥ ६६ ॥ ६७ ॥

कार्याणां कारणात्मत्वमेवं स्यादुत्तरेष्वपि ।
ब्रह्मानन्तं भवेदेवं सांख्यराद्धान्तमन्यथा ॥ ६८ ॥

यथाऽत्र तदेतच्छब्दाभ्यामध्यात्मदेहस्य विराडैक्यं विवक्ष्यते तथोत्तरत्रापि तदेतच्छब्दाभ्यां कारणेन प्राणादिना कार्यस्य प्राणमयादेरैक्यमभिप्रेतमित्याह । कार्याणामिति । कार्यस्य कारणमात्रत्वे फलितमाह । ब्रह्मेति । उक्तन्यायेन द्वैतप्रपञ्चस्याज्ञातब्रह्ममात्रत्वे तस्य कार्यकारणविलक्षणानवच्छिन्नवस्तुमात्रत्वेन पर्यवसानं सिध्यतीत्यर्थः । जगद्ब्रह्मणोर्भेदे तु सांख्यादीनां सिद्धान्तो निर्णयो यस्मिन्द्वैते तदेव स्यात्तत्श्चानेकागमयुक्तिविरोधो भवेदित्याह। । सांख्येति ॥ ६८ ॥

पूर्वकार्यातिरेकेण स्वात्मना चान्वयोक्तितः ।
अन्वयव्यतिरेकाभ्यां यथोक्तार्थः समर्थितः ॥ ६९ ॥

कार्यस्य कारणात्मत्वं हेत्वन्तरेण साधयति । पूर्वकार्येति । पूर्वस्मादन्नमयादिकार्यादतिरेकेणोत्तरस्य प्राणमयादिकारणस्य सिद्धेर्व्यतिरेकसिद्धिः पूर्वस्य च कार्यस्योत्तरेण कारणेनान्वयात्तदव्यतिरेकादन्वयसिद्धिः । एवमन्वयव्यतिरेकाभ्यां कार्यकारणयोरैक्यं समर्थितमित्यर्थः ॥ ६९ ॥

यथोक्तान्नमयादस्मादन्यः स्यात्तद्विलक्षणः ।
अन्तरः प्रत्यगित्येतदात्मा चात्मसमन्वयात् ॥ ७० ॥

अन्योऽन्तर आत्मेतिशब्दानामर्थमाह । यथोक्तेति ॥ ७० ॥

---

१ (ग. घ.) ॰तिवाक्यस्य॰। २ (ग घ.) ॰न स्मा॰। ३ (क. ख.) ॰ज्यते क्षे॰। ४ (क. ट.) ॰राजात्मा॰। ५ (क.) ॰नन्दं भ॰। ६ (ग. घ. ङ.) ॰ण स्यात्म॰। ७ (ग. घ.) ॰यथोक्तोऽर्थः।

कोशैश्चतुर्भिः संव्याप्तो यथैवान्नमयः पुरा ।
जानीयादुत्तरानेवं त्रिद्व्येकार्थसमन्वयात् ॥ ७१ ॥

अन्नमये दर्शितन्यायं प्राणमयादिष्वतिदिशति । कोशैरिति । यथा प्रथमे पर्याये व्यवस्थितोऽन्नमयः प्राणमयमनोमयविज्ञानमयानन्दमयैश्चतुर्भिः कोशैर्व्याप्यते तथा प्राणमयो मनोमयविज्ञानमयानन्दमयैस्त्रिभिर्व्याप्तो मनोमयो विज्ञानमयानन्दमयाभ्यां द्वाभ्यां विज्ञानमयस्त्वेकेनानन्दमयेन व्याप्तः । ततश्च पूर्वपूर्वस्योत्तरोत्तरेण व्याप्ते रज्ज्वा सर्पवत्पूर्वस्य पूर्वस्योत्तरमुत्तरं स्वरूपं सिध्यतीत्यर्थः ॥ ७१ ॥

तेन प्राणमयेनैष पूर्णो रज्ज्वेव पन्नगः ।
कार्यतोऽन्नमयः क्लृप्तो वाचारम्भणशास्त्रतः ॥ ७२ ॥

अन्नमयस्य प्राणमयेन व्याप्तत्वे तेनैष पूर्ण इति वाक्यं प्रमाणयति । तेनेति । अन्नमयस्य कल्पितत्वासिद्धेरुदाहरणमननुगुणमित्याशङ्क्याऽऽह । कार्यत इति ॥ ७२ ॥

स वै पुरुषविधो ह्युक्तो योऽयं प्राणमयः स्मृतः ।
अमूर्तत्वात्कुतोऽन्वेतद्धेतुस्तस्येति भण्यते ॥ ७३ ॥

स वा एष पुरुषविध एवेत्यस्यार्थमाह । स वा इति । निरवयवत्वात्प्राणमयस्य शिरःपाण्यादिमत्त्वेन पुरुषविधत्वमयुक्तमित्याह । अमूर्तत्वादिति । तस्य पुरुषविधतामित्यादिना परिहरति । हेतुरिति । स्थूलदेहस्य पुरुषाकारत्वात्तदन्तर्गतस्य प्राणमयस्यापि मूषानिषिक्तद्रुतताम्रवत्पुरुषविधत्वं प्रकल्प्यते ततोऽस्य पुरुषविधत्वे हेतुरनेन वाक्येनोच्यत इत्यर्थः ॥ ७३ ॥

प्राणस्तस्य शिरःश्रैष्ठ्यात्प्राणो यस्मान्मुखालयः ।
व्यानोऽस्य दक्षिणः पक्ष उत्तरोऽपान उच्यते ॥ ७४ ॥

तस्य प्राण एव शिर इत्यादेरर्थमाह । प्राणस्तस्येति ॥ ७४ ॥

सामान्यं वीर्यवत्ता स्यादितरस्यातथात्मता ।
आकाश इति चात्र स्यात्समानोऽम्बरसाम्यतः ॥ ७५ ॥

कोऽसौ व्यानः स्यादित्युक्ते देहधर्मसामान्यं वीर्यवत्ता व्यानस्य स्यादितिधर्मद्वारा धर्मिणं निर्दिशति । सामान्यमिति । न प्राणादेस्तथाविधधर्मवत्त्वमित्याह । इतरस्येति । आकाश आत्मेत्यत्राकाशशब्देन समानो गृह्यते समानस्य व्यापकत्वेनाऽऽकाशसदृशत्वादित्याह । आकाश इति चेति ॥ ७५ ॥

---

१ (च.) °पेंद्रव पूर्वे° । २ (ग.) °त्याशङ्क्यामाह । ३ (ग घ.) °तमा° । ४ (क. ख.) °क्तगतद्रु° । ५ (ख. च.) °कल्पते । ६ (ग घ.) °था ध° ।

वैशब्देनैव संस्मार्य दवीयोदेशवर्तिनम् ॥ ६६ ॥
तस्माच्छब्देन वैराजमादायाध्यात्मरूपिणः ।
एतस्मादितिशब्देन वैराजत्वं प्रबोध्यते ॥ ६७ ॥

प्रस्ताविते वाक्ये शब्दत्रयस्यार्थमाह । वैशब्देनेति । दूरतरे देशे व्यवस्थितं प्रकृतपर्यर्थभूतमन्नात्मकं विराडात्मानं वैशब्देनै संस्मार्य तत्रैव तस्माच्छब्दं प्रयुज्य तेन वैरोजमात्मानं गृहीत्वा पुनरध्यात्मरूपिणो देहस्य प्रत्ययार्थस्य सन्निहितत्वादेतस्मादित्युपादानाच्छब्दसमानाधिकृतैतच्छब्देन विराडेकत्वमेतस्य प्रदर्श्यते । पदद्वयसामानाधिकरण्यस्यैकत्वमन्तरेणायोगादित्यर्थः ॥ ॥ ६६ ॥ ६७ ॥

कार्याणां कारणात्मत्वमेवं स्यादुत्तरेष्वपि ।
ब्रह्मानन्तं भवेदेवं सांख्यराद्धान्तमन्यथा ॥ ६८ ॥

यथाऽत्र तदेतच्छब्दाभ्यामध्यात्मदेहस्य विराडैक्यं विवक्ष्यते तथोत्तरत्रापि तदेतच्छब्दाभ्यां कारणेन प्राणादिना कार्यस्य प्राणमयादेरैक्यमभिप्रेतमित्याह । कार्याणामिति । कार्यस्य कारणमात्रत्वे फलितमाह । ब्रह्मेति । उक्तन्यायेन द्वैतप्रपञ्चस्याज्ञातब्रह्ममात्रत्वे तस्य कार्यकारणविलक्षणानवच्छिन्नवस्तुमात्रत्वेन पर्यवसानं सिध्यतीत्यर्थः । जगद्ब्रह्मणोर्भेदे तु सांख्यादीनां सिद्धान्तो निर्णयो यस्मिन्द्वैते तदेव स्यात्ततश्चानेकागमयुक्तिविरोधो भवेदित्याह । सांख्येति ॥ ६८ ॥

पूर्वकार्यातिरेकेण स्वात्मना चान्वयोक्तितः ।
अन्वयव्यतिरेकाभ्यां यथोक्तार्थः समर्थितः ॥ ६९ ॥

कार्यस्य कारणात्मत्वं हेत्वन्तरेण साधयति । पूर्वकार्येति । पूर्वस्मादन्नमयादिकार्यादतिरेकेणोत्तरस्य प्राणमयादिकारणस्य सिद्धेर्व्यतिरेकसिद्धिः पूर्वस्य च कार्यस्योत्तरेण कारणेनान्वयात्तदव्यतिरेकादन्वयसिद्धिः । एवमन्वयव्यतिरेकाभ्यां कार्यकारणयोरैक्यं समर्थितमित्यर्थः ॥ ६९ ॥

यथोक्तान्नमयादस्मादन्यः स्यात्तद्विलक्षणः ।
अन्तरः प्रत्यगित्येतदात्मा चात्मसमन्वयात् ॥ ७० ॥

अन्योऽन्तर आत्मेतिशब्दानामर्थमाह । यथोक्तेति ॥ ७० ॥

---

१ (ग. घ.) 'विवक्ष्यत्र'। २ (ग. घ.) 'न स्मा'। ३ (क. ख.) 'ज्यते वे'। ४ (क. ट.) 'राजात्मा'। ५ (क.) 'नन्दं भ'। ६ (ग. घ. ङ.) 'ण त्यात्म'। ७ (ग. घ.) 'यथोक्तोऽर्थः'।

तस्य त्वन्नमयस्यैष योऽयं प्राणमयः स्मृतः ।
भवः शरीरे शारीर आत्मा तेनाऽऽत्मवान्यतः ॥८३॥

नोपासनविधानमस्मिन्प्रकरणे विवक्षितमुपक्रमोपसंहारयोर्ब्रह्मात्मैकत्वप्रतिपादनेनैवोपक्षयान्मध्यग्रन्थस्योपासनविधौ तात्पर्ये वाक्यभेदप्रसङ्गादतस्तत्र तत्र फलश्रुतेरर्थवादमात्रतेत्यभिप्रेत्य तस्यैष एवेत्यादेरर्थमाह । तस्य त्विति ॥८३॥

सत्यादिलक्षणो वाऽऽत्मा गौणो ह्यात्माऽमुतोऽपरः ।
सर्वान्तरत्वान्न्याय्यैवं यः पूर्वस्येति हि श्रुतिः ॥८४॥

पूर्वपूर्वकोशस्योत्तरोत्तरकोशो भवत्यात्मेत्यापातदर्शनेन व्याख्यातं तदयुक्तमात्मशब्दस्यामुख्यार्थत्वप्रसङ्गात्प्रकृतपरामर्शैतच्छब्दव्याकोपाच्चातः सर्वकोशाध्यासाधिष्ठानभूतं चिदात्मैवात्राऽऽत्मशब्देन विवक्षित इत्याह । सत्यादीति । प्रत्यग्भूतस्य परमात्मनो मुख्यात्मत्वात्तस्य सर्वान्तरत्वात्तदभ्यन्तरवस्त्वन्तराभावात्कोशात्मनश्च गौणात्मत्वाद्यः पूर्वस्येति श्रुतेश्चैवमुपपन्नत्वादेष शब्दस्य च प्रकृतपरामर्शिनो दर्शितन्यायेन युक्तत्वाच्चिदात्मैवात्र सत्यादिलक्षणो विवक्षित इत्यर्थः ॥ ८४ ॥

मिथ्यात्मनां हि सर्वेषां सत्यादिगुणलक्षणम् ।
व्याविद्धाशेषसंसारमात्मानं तं प्रचक्ष्महे ॥ ८५ ॥

कोशपञ्चकस्य कल्पितत्वाच्च परमात्मैवात्राऽऽत्मशब्देन गृह्यत इत्याह । मिथ्यात्मनामिति ॥ ८५ ॥

न ह्यात्मवान्भवेत्सर्पो दण्डाद्यध्यासरूपिणा ।
आत्मना वितथेनैव सर्पो रज्ज्वात्मनाऽऽत्मवान् ॥८६॥

उक्तमर्थं दृष्टान्तेन साधयति । न हीति ॥ ८६ ॥

प्राणाद्ध्येवेत्यतो न्यायाद्वक्ष्यमाणश्रुतीरितात् ।
व्युत्थाप्यान्नमयं तुच्छं प्राणोऽस्मीतिव्यवस्थितः ॥
यस्तं मनोमयात्मानं संक्रामयितुमुच्यते ॥ ८७ ॥

तृतीयपर्यायस्य तात्पर्यमाह । प्राणाद्धीति । प्राणाद्ध्येव खल्विमानि भूतानि जायन्त इति भृगुवल्ल्यामुक्तेन न्यायेनान्नमयं निरस्य प्राणोऽस्मीति यो व्यवस्थितस्तं मनोमयमात्मानं प्रापयितुं तृतीयकोशप्रवृत्तिरित्यर्थः ॥ ८७ ॥

---

१ (क. ख.) °ण्यैव य । २ (ग. घ.) °वात्म° । ३ (क.) मुख्यत्वा° । ४ (ग. घ.) °त्मता तस्य ।

प्राणानां तत्प्रतिष्ठानादात्माऽसौ श्रुतितो भवेत् ।
पृथिवी देवता पुच्छं सैषेति श्रुतिदर्शनात् ॥७६॥
असोराध्यात्मिकस्यैषा स्थितिहेतुः प्रकीर्तितः ।
अन्नात्मनीवेहाप्याह श्लोकं प्राणमयात्मनि ॥ ७७ ॥

कुतः समानस्य व्यापकत्वमित्याशङ्क्य कस्मिन्प्राणः प्रतिष्ठित इति श्रुत्या प्राणादिवृत्तीनां समानप्रतिष्ठत्वावगमात्समानो वृत्तीनामात्मेति दर्शयन्नुत्तरमाह। प्राणानामिति । पृथिवी पुच्छं प्रतिष्ठेतिवाक्यमवतारयति । पृथिवीति । प्राणमयस्येतिशेषः । सैषा पुरुषस्यापानमवष्टभ्येति श्रुतेराध्यात्मिकस्यं प्राणस्यैषा पृथिवी देवता पुच्छवत्प्रतिष्ठोस्थितिहेतुरितिवाक्यं योजयति । सैषेति । तदप्येष श्लोको भवतीत्यस्यार्थमाह । अन्नात्मनीवेति ॥ ७६ ॥ ७७ ॥ इति द्वितीयः खण्डः ॥ २ ॥

प्राणं प्राणं तमन्वेव देवाः प्राणन्ति न स्वतः ॥७८॥
वर्षसीह यदैव त्वमथेमाः प्राणते प्रजाः ।
मनुष्याः पशवोऽन्ये च प्राणन्त्यसुसमाश्रयात् ॥७९॥

प्राणं देवा अनुप्राणन्तीत्यादिश्लोकाक्षराणि व्याचष्टे प्राणमिति ॥ ७८ ॥
प्राणाधीना देवादीनां वृत्तिरित्यत्र श्रुत्यन्तरमुदाहरति। वर्षसीति ॥ ७९ ॥

अध्यात्ममधिदैवं च करणान्यधिदैवताः ।
प्राणस्वरूपमापद्य जहुर्मृत्युमिति श्रुतिः ॥ ८० ॥

तत्रैवार्थे बृहदारण्यकश्रुतिं दर्शयति । अध्यात्ममिति ॥ ८० ॥

घटतेऽसाविदं सर्वं सर्वस्यायुर्यतो ह्यसुः ।
तस्मात्तं तद्विदः प्राहुः सर्वायुषमनेकशः ॥ ८१ ॥

अथैना मृत्युमत्यवहदित्याद्या श्रुतिः श्रुतिशब्देन गृह्यते । तस्मात्सर्वायुषमुच्यत इत्यस्यार्थमाह । घटतेऽसाविति । प्राणविषया निमित्तार्था सप्तमी । प्राणनिमित्तं सर्वं परस्परं वर्धयन्ती वर्तन्ते तेन प्राणः सर्वस्यायुर्भवतीत्यर्थः ॥ ८१ ॥

सर्वायुषगुणेनासुं य आत्मानमुपासते ।
ते तं सर्वायुषं प्राणं प्राप्नुवन्त्यभियोगतः ॥ ८२ ॥

सर्वमेवेत्यादेरर्थमाह । सर्वायुषेति ॥ ८२ ॥

---

१ (ख. ङ.) °निता । २ (ग. घ.) °ष्टादिष्वि° । ३ (ग घ.) °रिति श्रु° । ४ (ग. घ. ट.) °धि देव° । ५ (ङ.) °वता । मा° । ६ (क. ख.) °माणाद्य । ७ (ङ.) °थैना ह° । ८ (क. ख ) मर्व. प° । ९ (ग.) °युद्गु° ।

ज्ञानात्मत्वे हि मन्त्राणां घटते मानसो जपः ।
ज्ञानस्याशब्दरूपत्वादृगावृत्तिर्न सिध्यति ॥
अशक्यत्वान्न चावृत्तिर्घटादेरिव शक्यते ॥ ९३ ॥

चैतन्योपरक्ता विशिष्टा बुद्धिवृत्तिश्चैतन्यं वा प्रागुक्तबुद्धिवृत्तिविशिष्टं यजुरादिशब्दवाच्यमित्यत्र युक्तिमाह । ज्ञानात्मत्वे हीति । यजुरादिमन्त्राणां ज्ञानस्वरूपत्वे तेषां मानसो जपो विधीयमानो युज्यते ज्ञानस्य शब्दत्वमन्तरेण क्रियात्वादावृत्तियोग्यत्वादित्यर्थः । यदि तु यजुरादिशब्दानां घटादिवद्बाह्यद्रव्यत्वं गृह्यते तदा मनसो बाह्येऽर्थे स्वातन्त्र्याभावात्तेषां मनोविषयत्वायोगान्मानसो जपो न सिध्येदित्याह । ऋगावृत्तिरिति । आकाशत्वं प्रपञ्चयति । न चेति । क्रियैवाऽऽवर्त्यते न द्रव्यं शब्दस्य च घटादिवद्द्रव्यत्वेन मानस्यावृत्तिर्युक्तेत्यर्थः ९३ ॥

आवृत्तिश्चोद्यते चर्चां श्रुतौ त्रिः प्रथमामिति ॥९४॥
अथर्चो विषयत्वेऽपि स्मृतेरावृत्तिरिष्यते ।
ऋगर्थविषयायाश्चेन्नैवं गौणी हि सा भवेत् ॥९५॥

ऋगादेरावृत्तिरेव मा भूदित्याशङ्क्य त्रिः प्रथमामन्वाह त्रिरुत्तमामितिश्रुतिविरोधान्मैवमित्याह । आवृत्तिरिति ॥ ९४ ॥

आवृत्तिसिद्ध्यन्यथानुपपत्त्या क्रियात्वमृगादेर्वाच्यमित्यत्रान्यथाप्युपपत्तिं चोदयति । अथेति । मन्त्रेभ्यः स्मृतेरन्यत्वादन्यावृत्तिर्गौणी प्रसज्येतातो नान्यथाप्युपपत्तिरित्युत्तरमाह । नैवमिति ॥ ९५ ॥

भूयोऽल्पीयःफलत्वं च बाह्यमानसयोर्जपे ।
अतो मानसमुख्यत्वमितरस्यास्तु गौणता ॥ ९६ ॥

किंच वाचनिकजपस्याल्पफलत्वं मानसस्य जपस्य साहस्रो मानसः स्मृत इतिबहुफलत्वं स्मर्यते । तदपि यजुरादेर्मनोवृत्तित्वे युक्तमित्याह । भूय इति ॥ ९६ ॥

---

१ (क ख) °नरू°। २ (च.) °नसज°। ३ (ङ.) न चावृत्तिरिति। ४ (ग. घ) °धान्नैव°। ५ (ङ. च.) °वृत्त्या न्यायवृत्ति°। ६ (ग. घ.) °लकत्वं। ७ (ङ. च) °सज°। ८ (च.) °मित्यत आ°।　　॥436॥

तस्मादित्यादिवाक्यस्य त्वर्थं पूर्वमवादिषम्।
प्राधान्यं यजुषो ज्ञेयं हविःप्रक्षेपकारणात् ॥ ८८ ॥

तस्मादितिप्रकृत्यर्थमुपादाय तमेव वैशब्देन स्मृत्वा प्रत्ययार्थस्यैतस्मादित्युपादानात्तदेतच्छब्दयोश्च सामानाधिकरण्यात्प्रकृतिप्रत्ययार्थयोरेकत्वावगमात्कार्यस्य कारणव्यतिरेकेणाभावात्कार्यकारणविलक्षणं ब्रह्मैव तत्त्वमित्येतदत्र पदत्रये विवक्षितमिति पूर्वमेवोक्तमित्याह। तस्मादित्यादीति। अन्यत्वं मनोमयस्य प्राणमयादत्यन्तविलक्षणत्वमन्तरत्वमभ्यन्तरत्वं प्रत्यगात्मत्वं तु परमार्थात्मव्याप्तत्वात्तदतिरिक्तस्वरूपाभावादित्यवधेयम्। तस्य यजुरेव शिर इत्यत्र यजुषः शिरस्त्वं प्राधान्यादित्यादिभाष्योक्तं व्यक्तीकरोति। प्राधान्यमिति ॥ ८८ ॥

स्वाहा स्वधा वषट् चेति संनिपत्योपकुर्वते ॥ ८९ ॥
शिरआदिप्रक्लृप्तिस्तु वाचनिक्यथ वास्त्विह ॥
वचनं बलवद्यस्मात्पौरुषेयी हि कल्पना ॥ ९० ॥

हविषो यजुषाऽग्नौ प्रक्षेपमेव प्रकटयति। स्वाहेति ॥ ८९ ॥

कल्पनातो वचनस्य बलीयस्त्वमङ्गीकृत्य पक्षान्तरमाह। शिरआदीति ॥ ९० ॥

पदवाक्यस्वरस्थाननादवर्णादिसंयुता।
यत्नोत्थमानसी वृत्तिर्यजुःसंकेतवर्त्मना ॥ ९१ ॥
ऐश्वरज्ञानसंदब्धा पदवाक्यानुरञ्जिता।
श्रोत्रादिकरणद्वारस्था यजुरित्यभिधीयते ॥ ९२ ॥

यजुःशब्देन बाह्यो यजुर्वेदो गृह्यते तस्य कथमान्तरं मनोमयं प्रति शिरस्त्वमित्याशङ्क्य मनसो हीत्यादिभाष्येणोत्तरमाह। पदेति। सा च पदाद्युरक्ता विशिष्टा मानसी वृत्तिः श्रोत्रं मनश्चेतिकरणाधीना गृह्यमाणा यजुःसंकेतमर्हतीति विशिनष्टि। पदवाक्येति ॥ ९१ ॥ ९२ ॥

---

१ (ङ.) °त्मत्वमात्मत्वं तु। २ (ग घ. च) °जुः शि°। ३ (ग.) °षा प्र°। ४ (ग. घ. ङ.) °त्नोत्था मा°। ५ (ग घ.) °न्तरम°। ६ (ग. घ.) °मयत्वं प्र°। ७ (ग. घ. ङ.) °भीनस्य मनसश्चे°।

मनोमयात्मसाक्ष्यत्र श्लोकः पूर्ववदुच्यते ।
यथोक्तवेदसिद्ध्यर्थं लिङ्गं श्लोकोऽपि कीर्यते ॥ २ ॥

मनोवृत्तिनिष्ठमात्मचैतन्यमनादिनिधनं यजुरादिशब्दवाच्यत्वमित्युक्तेऽर्थे मन्त्रमवतारयति । मनोमयेति । तदेव स्पष्टयति । यथोक्तेति ॥ २ ॥

अभिधाननिवृत्तिर्हि ब्रह्मणो नान्यतो यतः ।
सदावगमरूपत्वान्मनो यस्मान्निवर्तते ॥ ३ ॥

अवतारितस्य मन्त्रस्य विवक्षितमर्थं दर्शयति । अभिधानेति । वाचां मनसां चाविषयत्वमत्र मनोमयस्योच्यते तच्च परात्मपरिग्रहे परमुपपद्यते तस्य कूटस्थावगतिरूपस्य वागाद्यगोचरत्वाद्धर्मादेवं तस्माद्ब्रह्मैवात्र ग्राह्यं न शब्दराशिरित्यर्थः ॥ ३ ॥ इति तृतीयः खण्डः ॥ ३ ॥

यद्धि वाचाऽनभ्युदितं मनुते मनसा न यत् ।
ब्रह्मणोऽविषयत्वं हि श्रुतिर्वाङ्मनसोऽवदत् ॥ ४ ॥

ब्रह्मणो वागाद्यगोचरत्वे श्रुत्यन्तरमनुकूलयति । यद्धीति । यतो वाचो निवर्तन्त इत्यादिश्रुतिः ॥ ४ ॥

नागोचरं ययोरस्ति ब्रह्म मुक्त्वा निरञ्जनम् ।
ते मनोमयनिर्दिष्टे विद्याद्वाङ्मनसे बुधः ॥
इतीममर्थं चोद्दिश्य श्लोकं श्रुतिरुदाहरत् ॥ ५ ॥

ब्रह्मैव वाङ्मनसयोरविषयो व्यतिरिक्तं सर्वं ययोर्विषयत्वेनैव वर्तते ते वाङ्मनसे मनोमयकोशे निर्दिश्येते यजुरादयश्च प्रसिद्धा गृह्यन्ते रूढिमावल्यादितिपक्षान्तरमाह । नेत्यादिना ॥ ५ ॥

ब्रह्मणोऽनवरत्वात्तु नेह मन्त्राभिधेयता ।
वृत्तिप्रधानो वेदात्मा वृत्तिमान्स्यादथोत्तरः ॥६॥

ब्रह्मैव मन्त्रे प्रतिभातीत्याशङ्क्य कोशप्रकरणविरोधान्मैवमित्याह । ब्रह्मण इति । न हि मनसः साक्षिवेद्यत्वेनानपेक्षस्य वागादिविषयत्वं वृत्तिविरोधाच्च न स्वविषयत्वं सूत्रस्य महत्वात्तदात्मके मनसि ब्रह्मशब्दश्चोपपद्यते तस्य ब्रह्मणो मनोमयस्याऽऽनन्दमुपासनाफलं विद्वानुपासनातो ब्रह्मानन्दं च प्राप्य हिरण्यगर्भावस्थायां कदाचिदपि न बिभेतीतिमन्त्राक्षराण्यपि कोशपक्षे निर्वक्ष्यन्तीतिभावः । चतुर्थं पर्यायमुत्थापयति । वृत्तीति ॥ ६ ॥

---

१ (ग. घ.) °श्लोकेऽपि । २ (ग. घ. ङ.) °नोऽप्यस्मा° । ३ (ङ. च.) °यतं मनो° । ४ (ग. घ.) °स्मात्तस्मा° । ५ (क. ख.) न गो° । ६ (ग. घ.) °तेवा° । ७ (ग. घ.) °ङ्क्य प्र° । ८ (ग. घ.) °भेति ।

नाऽऽत्मानं लभते गौणी मुख्यार्थे सति कल्पना ।
तस्मादैश्वरविज्ञानं यजुर्वृद्ध्याद्युपाश्रयम् ॥ ९७ ॥

गौणेऽपि जपे का क्षतिरित्याशङ्क्य मुख्यसापेक्षत्वात्तस्य तेनैव चरितार्थत्वादानर्थक्यमित्याह । नात्मानमिति । मन्त्राणां मनोवृत्तित्वस्यावश्यकत्वान्मनोवृत्तीनां च सदा चिदात्मव्याप्तत्वेनैव सिद्धेश्चिदात्मत्वमिष्टमित्याह । तस्मादिति । ९७ ।

एवं च सति नित्यत्वं वेदानां घटतेऽञ्जसा ।
वाचकत्वमशब्दस्य सिद्धं न स्फोटरूपतः ॥ ९८ ॥

न केवलं मन्त्राणां मनोवृत्तित्वे सत्यावृत्तिरेव घटते किंतु परंपरया चिदात्मत्वे सति नित्यत्वमपि सिध्यतीत्याह । एवं चेति । यदा वेदस्य चिदात्मत्वमुक्तरीत्या सिध्यति तदा तस्य जडं शब्दरूपं परिहाय चिदात्मरूपेणैवावस्थितस्य धर्माद्यर्थबोधकत्वमपि सिध्यतीतिलाभान्तरमाह । वाचकत्वमिति । ननु स्फोटरूपेणार्थप्रतिपादकत्वेऽपि वेदस्याशब्दस्य बोधकत्वं सिध्येति । स्फोटस्य वर्णेभ्योऽर्थान्तरत्वादित्याशङ्क्य स्फोटस्याप्रामाणिकत्वान्नैवमित्याह । न स्फोटेति ॥ ९८ ॥

सर्वे वेदाश्च यत्रैकं भवन्तीति श्रुतेर्वचः ।
आदेशो ब्राह्मणं विद्याद्यस्मात्स विधिरूपभृत् ॥९९॥
ब्रह्मणो वा परस्येयमाज्ञा ब्राह्मणलक्षणा ।
तस्मादादेश इत्येवं ब्राह्मणं संप्रचक्षते ॥२००॥
अथर्वाङ्गिरसाभ्यां ये दृष्टाः पुष्ट्यादिकारिणः ।
एत एव हि मन्त्राः स्युरथर्वाङ्गिरसोऽत्र तु ॥ १ ॥

मनोवृत्तिव्यापकचिदात्मत्वे वेदानामुक्ते प्रमाणमाह । सर्वे इति । यत्र साक्षिभूते चिदात्मनि सर्वे वेदास्तादात्म्येनैकतां गच्छन्ति स मानसीनः साक्षितया मनसि भवो जनानां सर्वेषामात्मेत्यर्थः ॥ ९९ ॥ २०० ॥ १ ॥

---

१ (ख. ङ.) °त्तुः स्याद्वृद्ध्युपा°। २ (ङ.) °त्मत्वव्या°। ३ (ग. घ.) °व्याप्यत्वे°। ४ (क. ख.) °त्वमभीष्टमि°। ५ (क. ख.) °जडश°। ६ (क. ख.) °त्मस्वरू°। ७ (ग. घ.) °वाऽऽस्थि°। ८ (ग. घ.) °ब्दवो°। ९ (क. ख.) °ध्यतीति°। १० (ग. घ.) °त्वान्नैव°। ११ (ग. घ.) °रसो दृष्टाः शान्ति पु°।

मनोमयात्मसाक्ष्यत्र श्लोकः पूर्ववदुच्यते ।
यथोक्तवेदसिद्ध्यर्थं लिङ्गं श्लोकोऽपि कीर्त्यते ॥ २ ॥

मनोवृत्तिनिष्ठमात्मचैतन्यमनादिनिधनं यजुरादिशब्दवाच्यत्वमित्युक्तेऽर्थे मन्त्रमवतारयति । मनोमयेति । तदेव स्पष्टयति । यथोक्तेति ॥ २ ॥

अभिधाननिवृत्तिर्हि ब्रह्मणो नान्यतो यतः ।
सदावगमरूपत्वान्मनो यस्मान्निवर्तते ॥ ३ ॥

अवतारितस्य मन्त्रस्य विवक्षितमर्थं दर्शयति । अभिधानेति । वाचा मनसा चाविषयत्वमत्र मनोमयस्योच्यते तच्च परत्मपरिग्रहे परमुपपद्यते तस्य कूटस्थावगतिरूपस्य वागाद्यगोचरत्वाद्यस्मादेवं तस्माद्ब्रह्मैवात्र ग्राह्यं न शब्दराशिरित्यर्थः ॥ ३ ॥ इति तृतीयः खण्डः ॥ ३ ॥

यद्धि वाचाऽनभ्युदितं मनुते मनसा न यत् ।
ब्रह्मणोऽविषयत्वं हि श्रुतिर्वाङ्मनसोऽवदत् ॥ ४ ॥

ब्रह्मणो वागाद्यगोचरत्वे श्रुत्यन्तरमनुकूलयति । यद्धीति । यतो वाचो निवर्तन्त इत्यादिश्रुतिः ॥ ४ ॥

नोगोचरं ययोरस्ति ब्रह्म मुक्त्वा निरञ्जनम् ।
ते मनोमयनिर्दिष्टे विद्याद्वाङ्मनसे बुधः ॥
इतीममर्थं चोद्दिश्य श्लोकं श्रुतिरुदाहरत् ॥ ५ ॥

ब्रह्मैव वाङ्मनसयोरविषयो व्यतिरिक्तं सर्वं ययोर्विषयत्वेनैव वर्तेते ते वाङ्मनसे मनोमयकोशे निर्दिश्येते यजुरादयश्च प्रसिद्धा गृह्यन्ते रूढिमावल्यादितिपक्षान्तरमाह । नेत्यादिना ॥ ५ ॥

ब्रह्मणोऽनवरत्वात्तु नेह मन्त्राभिधेयता ।
वृत्तिप्रधानो वेदात्मा वृत्तिमान्स्यादथोत्तरः ॥६॥

ब्रह्मैव मन्त्रे प्रतिभातीत्याशङ्क्य कोशप्रकरणविरोधान्मैवमित्याह । ब्रह्मण इति । न हि मनसः साक्षिवेद्यत्वेनानपेक्षस्य वागादिविषयत्वं वृत्तिविरोधाच्च न स्वविषयत्वं सूत्रस्य महत्त्वात्तदात्मके मनसि ब्रह्मशब्दश्चोपपद्यते तस्य ब्रह्मणो मनोमयस्याऽऽनन्दमुपासनाफलं विद्वानुपासनातो ब्रह्मानन्दं च प्राप्य हिरण्यगर्भावस्थायां कदाचिदपि न बिभेतीतिमन्त्राक्षराण्यपि कोशपक्षे निर्वक्ष्यन्तीतिभावः । चतुर्थं पर्यायमुत्थापयति । वृत्तीति ॥ ६ ॥

---

१ (ग. घ.) °श्लोकेऽपि । २ (ग. घ. ङ.) °नोऽप्यसमा° । ३ (ङ. च.) °यत्तं मनो° । ४ (ग. घ.) °स्मात्तस्मा° । ५(क. ख.) न गो° । ६(घ. ग.) °तेवा° । ७ (ग. घ.) °ह्रूच प्र° । ८ (ग. घ.) °भेति ।

व्यवसायात्मिका बुद्धिर्वृत्तिमानित्युदीर्यते ।
यज्ञं तनुत इत्येतत्कर्तृत्वे सति युज्यते ॥ ७ ॥

कोऽसौ वृत्तिमानित्यपेक्षायामाह । व्यवसायेति । विज्ञानशब्देन वृत्तिरेवो-च्यते न वृत्तिमानित्याशङ्क्य वाक्यशेषविरोधान्नैवमित्याह । यज्ञमिति ॥७॥

आत्मचैतन्यरूपा धीः कर्त्र्यात्मा न ध्रुवत्वतः ।
यज्ञारम्भस्य हेतुत्वात्तदभावाद्वृथा यजिः ॥ ८ ॥

विज्ञानशब्देन कर्तृग्रहणेऽपि यज्ञादिकर्तृत्वमात्मनः स्यादित्याशङ्क्य बुद्धिरेवात्माभासा कर्त्री न त्वात्मा कूटस्थत्वादित्याह। आत्मेति । चिदाभासाया बुद्धेरेव कर्तृत्वं प्रकारान्तरेण प्रतिपादयति । यज्ञेति । कूटस्थत्वादात्मनोऽकर्तृ-त्वात्तदाभासाया बुद्धेरेव यज्ञानुष्ठानकर्तृत्वात्तत्कर्तृत्वानङ्गीकारे कर्तुरन्यस्या-भावाद्यागादिस्वरूपाभावात्तदीयफलारम्भस्य दूरनिरस्तत्वाच्चिदाभासोपरक्ता बु-द्धिरेव कर्त्री वक्तव्येत्यर्थः ॥ ८ ॥

श्रद्धाया उत्तमाङ्गत्वं स्मृतिरश्रद्धयेति च ॥ ९ ॥
सत्यं हि श्रदिति प्राहुर्धत्ते धीः प्रत्यगात्मनि ॥
तद्यतस्तां महात्मानः श्रद्धामित्यूचिरे धियम् ॥१०॥

एवं विज्ञानशब्दार्थमुक्त्वा तस्य श्रद्धेव शिर इत्यस्यार्थमाह। श्रद्धाया इति। शिरसः शरीरावयवानामुत्तमत्वाद्बुद्धिवृत्तीनां च श्रद्धायास्तथात्वादश्रद्धया हुतं दत्तमित्यादिस्मृतेश्च श्रद्धाप्राधान्याधिगमादुक्तेन सामान्येन शिरसि कर्तव्या श्रद्धादृष्टिरित्यर्थः ॥ ९ ॥

श्रद्धाशब्दार्थमाह। सत्यं हीति। श्रच्छब्दवाच्यं सत्यवचनं तदात्मनि स्वस्मि-न्नेव धत्ते विवेकधीरित्यसौ श्रद्धेत्युक्त्वा यद्वा श्रच्छब्देन सत्यमवितथं ब्रह्मो-च्यते तत्प्रत्यगात्मनि शमादिसंस्कृता धीर्धारयत्यतो यथोक्ता धीरेव श्रद्धे-त्यर्थः ॥ १० ॥

---

१ (ग. घ. ङ.) 'धान्नैव'। २ (ग. घ.) 'स्मृतेर'। ३ (ग. घ.) 'धारयौ'।

योगो युक्तिः समाधानमात्मा स्यात्तदुपाश्रयात् ।
श्रद्धादीनि यथोक्तार्थप्रतिपत्तिक्षमाणि च ॥ ११ ॥

योग आत्मेत्यस्यार्थमाह । योग इति । देहावयवानां मध्यमात्मा तत्र योगदृष्टिः कर्तव्येत्यर्थः । तदेवोपपादयति । तदुपाश्रयादिति । यथा हस्ताद्यङ्गानि देहमध्यमाश्रित्य स्वव्यापारसमर्थानि तथा सत्यादीनि यथोक्तं योगाश्रयाणि सन्ति यथार्थप्रतिपत्तौ समर्थानि भवन्तीत्यनेन सामान्येनात्मनि योगदृष्टिरित्यर्थः ॥ ११ ॥

महत्तत्त्वं महो ग्राह्यं नीडं कार्यस्य तद्यतः ।
व्याचष्टे तन्महद्यक्षं श्रुतिः प्रथमजं तु यत् ॥ १२ ॥

महः पुच्छं प्रतिष्ठेत्यत्र महःशब्दार्थमाह । महदिति । सूत्रं महत्तत्त्वं तस्य सर्वकार्याश्रयत्वान्महत्त्वमित्यत्र श्रुत्यन्तरं प्रमाणयति । व्याचष्ट इति ॥ १२ ॥
इति चतुर्थः खण्डः ॥ ४ ॥

विज्ञानं तनुते यज्ञं कर्माण्यन्यानि यानि च ।
सर्वे च देवा विज्ञानं ब्रह्म ज्येष्ठमुपासते ॥ १३ ॥

विज्ञानमयस्य महत्तत्त्वं पुच्छवत्प्रतिष्ठात्वेन ध्येयमित्युक्त्वा ब्राह्मणोक्तेऽर्थे मन्त्रमवतारयति । विज्ञानमिति ॥ १३ ॥

परमेव हि तद्ब्रह्म बुद्धिकञ्चुकभृत्स्वयम् ।
घटादाविव विज्ञप्तौ धीरात्मानं ततोऽर्पयेत् ॥ १४ ॥

ब्रह्मशब्दार्थमाह । परमेवेति । यथोक्तस्य ब्रह्मणो ग्रहणे प्रयोजनमाह । घटादाविति । यथा घटादौ विषये धीरात्मानमर्पयन्ती घटादिविषयं प्रकाशयति तथा विज्ञप्तिरूपे ब्रह्मणि धीरात्मानमर्पयन्ती ब्रह्म प्रकाशयति ततो बुद्ध्युपरक्तं ब्रह्मेत्युक्ते मुमुक्षोर्ब्रह्मप्रतिपत्तिः सुकरा भवतीत्यर्थः ॥ १४ ॥

अग्रजं ब्रह्म विज्ञानं देवा अग्न्यादयः सदा ।
उपासते तदाप्त्यर्थं ते देवा इति च श्रुतिः ॥ १५ ॥

ब्रह्मणो यत्प्रकृतमुपासनं तत्प्रकटयति । अग्रजमिति । तत्रैव श्रुत्यन्तरं संवादयति । ते देवा इति ॥ १५ ॥

---

१ ( ख. ग. घ. ङ. ) ॰गि हिं॰॥११॥

यथोक्तेन प्रकारेण विज्ञानं ब्रह्म वेद चेत् ।
प्रमाद्यति न चेत्तस्मादुक्तकोशात्मशङ्कितः ॥ १६ ॥

प्रकृतस्योपासनस्य पापक्षयः सर्वकामावाप्तिश्चेति द्विविधं फलम् । तत्र पापक्षयं फलं विज्ञानं ब्रह्म चेत्यादिवाक्यव्याख्यानेन कथयति । यथोक्तेनेति । प्रकृतोपासनस्य प्रमादप्रसङ्गं दर्शयति । उक्तेति । प्रथमजबुद्ध्युपाधिब्रह्मोपासने प्रवृत्तो यदात्मबुद्धिं प्राचीने कोशत्रये न करोति तदोपासकस्य शरीराभिमानाभावात्पापक्षयः सिध्यतीत्यर्थः ॥ १६ ॥

पाप्मनामाश्रयो यस्माद्रूपनामक्रियात्मकः ।
देहोऽतस्तत्प्रहाणेन हानिः स्यात्सर्वपाप्मनाम् ॥१७॥

शरीरे पाप्मनो हित्वेत्यस्यार्थं प्रपञ्चयति । पाप्मनामिति । देहाभिमाननिमित्तत्वात्पाप्मनां देहाभिमानाभावे सर्वपापहानिः सिध्यतीत्यर्थः ॥ १७ ॥

विज्ञानमहमस्मीति तावन्मात्राभिमान्यतः ।
शरीरे पाप्मनो हित्वा सर्वान्कामान्समश्नुते ॥ १८ ॥

अवशिष्टमुपासनाफलं सर्वान्कामान्समश्नुत इतिवाक्यव्याख्यानेन कथयति । विज्ञानमिति ॥ १८ ॥

अणिमादिगुणैश्वर्यो बुद्ध्यात्मा कार्यरूपिणः ।
कार्यं हि कारणव्याप्तमतः कामान्समश्नुते ॥ १९ ॥

उपासकं हिरण्यगर्भरूपमापन्नं विशिनष्टि । अणिमादीति । कामानां विशेषणं कार्यरूपिण इति कामानां कार्यरूपित्वे कथमुपासकस्य तत्प्राप्तिरित्याशङ्क्याऽऽह । कार्यं हीति । उपासकस्य हिरण्यगर्भभावं प्राप्तस्य सर्वकर्मफलकारणत्वात्कारणस्य च कार्यव्यापकत्वादुपासकस्य युक्ता सर्वकामावाप्तिरित्यर्थः ॥ १९ ॥

ज्ञानकर्मफलोपाधिविज्ञानं प्रत्यगात्मनः ।
आनन्दमय इत्यत्र भण्यते कर्तृशान्तये ॥ २० ॥

पञ्चमपर्यायस्य तात्पर्यार्थमाह । ज्ञानेति । सुखादि ज्ञानकर्मफलं तदात्मकं यदन्तःकरणं तदुपाधि यत्प्रत्यगात्मनो विज्ञानं चैतन्याभासः सोऽत्राऽऽनन्दमय शब्देनोच्यते । आत्मनि यत्कर्तृत्वमुक्तं तन्निवृत्त्यर्थं भोक्तृत्वं तस्य कथ्यत इत्यर्थः । २० ॥

१ ( ग. घ. ) °मानव° । २ ( क. ख. ) °रूपाप° । ३ ( ख. ) °स्य पूर्वं° । ४ (ग. घ.) °वैकामफ° । ५ ( ग. घ. ) °स्य का° । ६ ( ड. च. ) °त्पर्येणा° ।

विज्ञानमयशब्देन कर्ता व्याख्यायि पूर्वया ।
तस्य प्रत्यक्तया चाथ श्रुत्या भोक्तोच्यतेऽधुना ॥२१॥

उक्तमेव व्यक्तीकरोति । विज्ञानेति ॥ २१ ॥

शुद्धस्यापि स्वतो बुद्धौ प्रियाद्याकारतोदये ।
जायते तदुपाधित्वाद्भोक्ताऽऽत्मा स्यादविद्यया ॥२२॥

नित्यशुद्धबुद्धमुक्तस्वभावस्याऽऽत्मनो न भोक्तृत्वमित्याशङ्क्याऽऽह । शुद्धस्यापीति । प्रत्यगात्मनः शुद्धस्वभावस्यापि बुद्धौ प्रियादिपरिणामोदये सति तदुपरक्ततया चैतन्याभासो जायते तदा तदुपाधित्वादविद्ययाऽऽत्मा भोक्ता स्यादित्यर्थः ॥ २२ ॥

अपरे पण्डितंमन्याः परमेतं प्रचक्षते ।
इहैवोपरमादूर्ध्वं भृगोश्च वरुणस्य च ॥ २३ ॥

आनन्दमयशब्देन चैतन्याभासो जीवो गृह्यत इति स्वसिद्धान्तमुक्त्वा पूर्वपक्षमाह । अपर इति । आनन्दवल्ल्यामानन्दमयशब्देनोक्तस्य भृगुवल्ल्यामानन्दाद्ध्येवेत्यानन्दत्वेन परामर्शात् । भृगुवरुणयोश्च सैषेति पञ्चमपर्यायेणैवोपसंहारादानन्दमयस्यात्रब्रह्मत्वे तदयोगादित्युक्तेऽर्थे हेतुमाह । इहैवेति ॥ २३ ॥

अपि चाऽऽनन्दरूपस्य ब्रह्मत्वं बहुशः श्रुतम् ।
तथा चाऽऽनन्दवल्लीति व्यपदेशोऽपि युज्यते ॥२४॥

आनन्दमयशब्देनोक्तस्याऽऽनन्दशब्देनाभ्यासाच्च तस्य ब्रह्मत्वमिति हेत्वन्तरमाह । अपि चेति । आनन्दवल्लीतिसमाख्यायाश्चाऽऽनन्दमयस्य ब्रह्मत्वं प्राधान्येन व्यपदेशाद्ब्रह्मणः प्रधानत्वाज्जीवस्य तदभावान्मयटश्च प्राचुर्यार्थत्वेनाविरुद्धत्वादित्यभिप्रेत्याऽऽह । तथा चेति ॥ २४ ॥

कार्याधिकारगत्वात्तु नैतद्ब्रह्म परं भवेत् ।
अन्नादिमयवत्कार्यं स्यादानन्दमयोऽप्ययम् ॥२५॥

विकारप्रकरणमाश्रित्य सिद्धान्तयति । कार्येति ॥ २५ ॥

---

१ ( क. ख. ) ब्रह्मणा ।

मयट् चात्र विकारार्थे यथैवान्नमयादिषु ।
वैरूप्यलक्षणो दोषः प्रायोऽर्थत्वे प्रसज्यते ॥ २६ ॥

विकारार्थमयट्शब्दश्रुतेश्चाऽऽनन्दमयो न परमात्मेत्याह । मयट् चेति । आनन्दमये मयटो न विकारार्थत्वं किंतु प्राचुर्यार्थत्वमित्युक्तमाशङ्क्याऽऽह । वैरूप्येति । न चात्रार्थविरोधोऽस्त्यानन्दस्य ब्रह्मत्वेऽपि मयडन्तस्य तस्य ब्रह्मत्वे हेत्वभावात्तस्मात्प्रकरणश्रुतिभ्यां कार्यात्मैवाऽऽनन्दमय इत्यर्थः ॥ २६ ॥

अपि संक्रमणादस्य कार्यताऽध्यवसीयते ।
कार्यात्मेनां हि संक्रान्तिर्युज्यते कारणात्मनि ॥२७॥

आनन्दमयस्य परमात्मत्वाभावे हेत्वन्तरमाह । अपीति । एतमानन्दमयमात्मानमुपसंक्रामतीति संक्रमणकर्मत्वश्रवणेऽपि कथमानन्दमयस्य कार्यतेत्याशङ्क्याऽऽह । कार्यात्मनामिति ॥ २७ ॥

अत्ययो वाऽथ संप्राप्तिः संक्रान्तिः स्यात्परात्मनः ।
नाऽऽत्मत्वादात्मनः प्राप्तिस्तदु नात्येति कश्चन ॥२८॥

आनन्दमयस्य परमात्मनः संक्रान्तेरसंभवमभिधातुं संक्रान्तिं विकल्पयति । अत्ययो वेति । जीवस्य परमात्मनोऽभिन्नत्वान्न परमात्मनि प्राप्तिर्नाम संक्रान्तिः संभवतीति द्वितीयं प्रत्यादिशति । नाऽऽत्मत्वादिति । तद्ब्रह्म कश्चिदपि नात्येतीश्रुतितेर्न ब्रह्मादिक्रमण जीवस्य घटते ब्रह्माभेदात् । ब्रह्मणः सर्वगतत्वाच्चेति प्रथमं प्रत्याह । तदुनेति ॥ २८ ॥

न चाऽऽत्मना स्वमात्मानमुपसंक्रामतीश्वरः ।
नालं स्वस्कन्धमारोढुं निपुणोऽपीह साधकः ॥ २९ ॥

स्वेनैव स्वस्यातिक्रमो वा प्राप्तिर्वा न संभवतीत्युक्तमर्थं दृष्टान्तेन साधयति । न चेति ॥२९ ॥

शिरआद्याकृतेरत्र मूर्तामूर्ताद्यसंभवात् ।
असंभवः परे तत्त्वे नेति नेतीतिशास्त्रतः ॥ ३० ॥

इतश्चाऽऽनन्दमयस्य नास्ति ब्रह्मत्वमित्याह। शिरआदीति । आनन्दमये शिरआद्यवयवकल्पनया सविशेषत्वसिद्धेर्ब्रह्मणि च परस्मिन्नेति नेतीतिशास्त्रान्मूर्ताद्यशेषविशेषासंभवान्न सविशेषस्याऽऽनन्दमयस्य ब्रह्मत्वमित्यर्थः ॥ ३० ॥

---

१ ( क. ) °रार्थे य° । २ ( ग. घ. ) °त्वे म° । ३ ( क. ) °त्मनो हि° । ४ ( क. ग. घ. ) °मात्मामा° । ५ ( ग. घ. ) °क्रमणं वा । ६ ( ग. घ. ) °कृतेः कृसेरत्र मू° । ७ ( क. ख. ) °र्तामूर्ताद्य° ।

अदृश्येऽनात्म्य इत्येवं पूर्वोत्तरविरुद्धता ।
न स्यादाकारवत्त्वाद्धि अस्ति नास्तीतिसंशयः ॥३१॥

पूर्वापरविरोधप्रसङ्गाच्चाऽऽनन्दमयस्य न ब्रह्मत्वमित्याह । अदृश्य इति । आनन्दमयस्य सविशेषत्वेनास्तित्वस्य प्रसिद्धत्वात्तत्राऽस्ति नास्तीति संशयायोगाद्ब्रह्मणि च तद्दर्शनान्नाऽऽनन्दमयस्य ब्रह्मत्वमित्याह । न स्यादिति ॥ ३१ ॥

कार्यात्माऽयमतो ग्राह्यो यथोक्तन्यायगौरवात् ।
भृगोरुपरमाच्चेति कार्यात्मत्वेऽपि युज्यते ॥ ३२ ॥

उक्तयुक्तिफलं कथयति । कार्यात्मेति । यदुक्तमानन्दमात्रमुक्त्वा सैषा भार्गवीति भृगुवरुणयोरुपरमणमानन्दमयस्य ब्रह्मत्वं गमयति स्थानप्रामाण्यादिति तत्राऽऽह । भृगोरिति ॥ ३२ ॥

आनन्दवल्ल्यां ब्रह्मोक्तं तदुपायविधित्सया ।
अधीहि भगवो ब्रह्मेत्यवोचद्वरुणं भृगुः ॥ ३३ ॥

तदेवोपपादयितुं संप्रतिपन्नमर्थमाह । आनन्देति ॥ ३३ ॥

व्याख्यातत्वादुपेयस्य ह्युपायोऽत्रावशिष्यते ।
उपायाः कोशाः पञ्चापि यस्मात्तैस्तं प्रपद्यते ॥ ३४ ॥

ब्रह्मात्मैक्यज्ञानोपायविधानार्थं भृगुवल्ल्यारम्भ इत्यत्र हेतुमाह । व्याख्यातत्वादिति । तमेवोपायमुपन्यस्यति । उपाया इति ॥ ३४ ॥

अन्वयव्यतिरेकाभ्यां कोशैरात्मसमीक्षणम् ।
क्रियते हि यतस्तेषामुपायत्वं प्रतीयते ॥ ३५ ॥

कोशानामात्मज्ञानोत्पत्तिहेतुत्वेनोपायत्वमुपपादयति । अन्वयेति । आनन्दवल्ल्यां ब्रह्मात्मैक्यज्ञानमुपेयमुक्तं भृगुवल्ल्यां तदुपायत्वेनान्नप्राणादिकोशपञ्चकोक्तिद्वारेणान्वयव्यतिरेकाख्यव्यापारो विहितस्तथा चोपायोपेययोः सिद्धत्वाद्वक्तव्यानवशेषादत्रैव भृगोरुपरमणमुचितं न तु पञ्चमपर्यायस्य ब्रह्मविषयत्वादानन्दमयस्य ब्रह्मत्वं शङ्कितव्यमानन्दशब्दस्यात्रापि कोशविषयत्वादित्यर्थः ॥३५॥

---

१ (ग. घ.) °यसंभवात् । २ (क. ख.) °वल्ल्या ब्र° । ३ (ङ.) °त्तैस्तत्प्रप
४ (ग. घ. ङ. च.) °काख्यो व्या° ।

स्वातन्त्र्यं यत्र कर्तुः स्यात्तत्रैवासौ नियुज्यते ।
फलं कर्त्रनधीनत्वात्संबन्धायैव शंक्यते ॥ ३६ ॥

अन्वयव्यतिरेकाख्यो व्यापारो नात्र विधीयते । आनन्दो ब्रह्मेति व्यजानादितिविज्ञानस्योक्तत्वात्तस्यैव विधेयत्वादित्याशङ्क्याऽऽह । स्वातन्त्र्यमिति । ज्ञानस्य विधेयत्वाभावे ब्रह्मविदाप्नोति परमित्यादौ ज्ञानसंकीर्तनं किमर्थमिति चेत्तत्राऽऽह । फलमिति । अन्वयव्यतिरेकव्यापारस्य साधनत्वमैक्यज्ञानस्य च साध्यत्वमित्येवं साध्यसाधनसंबन्धसिद्ध्यर्थं प्रकृते वाक्ये फलमैक्यज्ञानलक्षणं विवक्ष्यते न तु विधेयत्वसिद्ध्यर्थं तदुच्यते तस्य कर्त्रधीनत्वराहित्यादेव विध्ययोग्यत्वादित्यर्थः ॥ ३६ ॥

पञ्च कोशानतस्तस्मै वाक्यार्थप्रतिपत्तये ।
स्वतः प्रसिद्धेः शेषस्य ह्युपरेमे भृगुस्ततः ॥ ३७ ॥

यतो ज्ञानस्य विधेयत्वं नोपपद्यतेऽतो वाक्यार्थप्रतिपत्त्युपायत्वेनान्नादीनानन्दान्तान्पञ्च कोशान्भगवे वरुणेनोक्तान्प्रतिपाद्यावशिष्टस्य ज्ञानस्य स्वतो विधिव्यतिरेकेण वाक्यादेव सिद्धत्वाद्भृगुरुपरतवान्न त्वानन्दमयस्य ब्रह्मत्वं प्रतिपन्नवानित्युपसंहरति । पञ्च कोशानिति । ततःशब्देन वक्तव्यशेषाभावः परामृश्यते ॥ ३७ ॥

ब्रह्मताऽऽनन्दरूपस्य केन वा प्रतिषिध्यते ।
निरस्ताशेषभेदस्य रूपं तत्परमात्मनः ॥ ३८ ॥

आनन्दो ब्रह्मेति व्यजानादित्यत्रानन्दशब्दस्य कोशविषयत्वमुक्तमिदानीं तस्य ब्रह्मविषयत्वेऽपि नानुपपत्तिरित्याह । ब्रह्मतेति । प्रियमोदादिसर्वविशेषशून्यस्याऽऽनन्दस्यात्राऽऽनन्दशब्देन ग्रहणात्तस्य ब्रह्मत्वाच्चदेवाऽऽनन्दशब्दवाच्यं न साभासमज्ञानमित्यर्थः ॥ ३८ ॥

प्रियाद्यानन्दरूपाणां भेदो यत्र निवर्तते ।
अमनोविषयेऽत्यन्तं तमानन्दं प्रचक्ष्महे ॥ ३९ ॥

आनन्दो निर्विशेषो ब्रह्मैवेत्येतदेव प्रकटयति । प्रियादीति ॥ ३९ ॥

---

१ ( ग. घ. ) शस्यते ( ङ. ) शब्द्यते । २ ( ग.घ.च. ) °विषया° । ३ ( ग. ) °नित्यर्थमुप° । ४ ( क. ग. ) °दित्यान° । ५ ( ग. घ. ) °त्वे ना° । ६ (घ. ङ. ) पान° । ७ ( ग. घ. ) °ह्मविषयत्वा° । ८ ( ग. घ. ) °चे सत्वं त° ।

कोशपञ्चक एतस्मिन्निषिद्धेऽज्ञानहेतुके ।
नाऽऽनन्दमयता न्याय्या धियां वाचामगोचरे ॥४०॥

आनन्दो ब्रह्मेत्यत्राऽऽनन्दशब्देनाऽऽनन्दमयो गृह्यते स्थानप्रामाण्यादित्याशङ्क्याऽऽह । कोशेति । आनन्दस्य निर्विशेषत्वेन वाङ्मनसयोरगोचरत्वादज्ञानतत्कार्यात्मककोशपञ्चकानन्तर्भावान्न तस्याऽऽनन्दमयत्वमतो नाऽऽनन्दमयस्य स्थानावष्टम्भाद्ब्रह्मत्वं तस्य प्रागुक्तश्रुत्यादिविरुद्धस्याप्रमाणत्वादित्यर्थः ॥ ४० ॥

परानन्दस्वभावेन पूर्णा ह्यन्नमयादयः ।
कार्यात्मानोऽपि तद्धेतोरानन्दमयता भवेत् ॥ ४१ ॥

तेनैव पूर्ण इतिवाक्यावष्टम्भेनाऽऽनन्दमयस्याब्रह्मत्वे हेत्वन्तरमाह । परानन्देति । यथा कार्यात्मानोऽन्नमयादयश्चत्वारोऽपि कोशा ब्रह्मणा परानन्दस्वभावेन पूर्णा वर्ण्यन्ते तथाऽऽनन्दमयस्यापि कार्यात्मत्वाविशेषात्तद्धेतोरानन्देन ब्रह्मणा पूर्णत्वादानन्दमयता न तु ब्रह्मत्वादतो यथा विज्ञानमय आत्माऽऽनन्दमयेन पूर्णस्तथाऽऽनन्दमयोऽपि पुच्छब्रह्मणा पूर्णो न स्वयं ब्रह्मेत्यर्थः ॥ ४१ ॥

तस्माज्ज्ञानक्रियाकार्यं प्रियाद्यारक्तबुद्धिगम् ।
आनन्दमयमात्मानं श्रुतिः सोपाधिकं जगौ ॥ ४२ ॥

आनन्दमयस्योक्तप्रकारेण ब्रह्मत्वासंभवे फलितं निगमयति । तस्मादिति ॥ ४२ ॥

प्रियादिवासनारूपो ह्यानन्दमय ईक्ष्यते ।
विज्ञानमयसंस्थो यः स्वप्ने वै स्वप्नदर्शिभिः ॥ ४३ ॥

स्वप्नावस्थायां प्रत्यगात्मना दृश्यत्वाच्चाऽऽनन्दमयस्य न ब्रह्मत्वमित्याह । प्रियादीति ॥ ४३ ॥

पुत्रादिविषया प्रीतिर्वासना शिर उच्यते ।
प्रियलाभनिमित्तोत्थो हर्षो मोदः प्रकीर्तितः ॥ ४४ ॥
प्रकर्षगुणसंयुक्तः प्रमोदः स्यात्स एव तु ।
सुखसामान्यमात्मा स्यादानन्दो भेदसंश्रयात् ॥४५॥

तस्य प्रियमेव शिर इत्यादिवाक्यचतुष्टयार्थं संक्षिप्य दर्शयति । पुत्रादीत्यादिना ॥ ४४ ॥ ४५ ॥

१ ( क. ग. घ. ) °र्यात्मनो° । २ ( ग. घ. ) इत्यादिवाक्यस्याव° । ३ ( ख. ग. घ. ) °र्यात्मनो° । ४ ( ग. घ. ) °परमान° । ५ ( ग घ. ) °पाद्धे° । ६ ( ग. घ. ) °य इष्यते ।

उत्कृष्यमाण आनन्दो निष्ठां यत्राधिगच्छति ।
तदेकं सकलं ब्रह्म पुच्छं सर्वाश्रयत्वतः ॥ ४६ ॥

ब्रह्म पुच्छं प्रतिष्ठेत्यस्यार्थं कथयति । उत्कृष्यमाण इति ॥ ४६ ॥

आनन्दः पर एवाऽऽत्मा भेदसंसर्गवर्जितः ।
स एव सुखरूपेण व्यज्यते पुण्यकर्मभिः ॥ ४७ ॥

कर्मफलस्याऽऽनन्दस्य सातिशयत्वान्निरतिशयात्परमानन्दादर्थान्तरत्वमापतेदित्याशङ्क्याऽऽह । आनन्द इति ॥ ४७ ॥

यावद्यावत्तमोऽपैति बुद्धौ धर्मसमाहतम् ।
तावत्तावद्धियः स्वास्थ्यं तावत्तावत्सुखोन्नतिः ॥ ४८ ॥

आत्मरूपस्यैवाऽऽनन्दस्य पुण्यकर्मवशात्तत्फलत्वेनाभिव्यक्तिमुक्तां प्रकटयति । यावदिति ॥ ४८ ॥

तारतम्यं सुखस्यापि वैचित्र्योदुपपद्यते ।
पुण्यस्य कर्मणस्तस्मादात्मैवाऽऽनन्द उच्यते ॥ ४९ ॥
तस्मात्कामादिहानेन ह्युत्तरोत्तरवृद्धितः ।
श्रोत्रियस्येतिवाक्येन काष्ठाऽऽनन्दस्य भण्यते ॥ ५० ॥

ब्रह्मानन्दस्यैव कर्मफलत्वे कथं तस्य तारतम्यमित्याह । तारतम्यमिति ॥ ४९ ॥ परमानन्दस्य परमात्माभेदाज्जीवपरयोश्च भेदाभावाद्ब्रह्मविदि निरस्तकामसंबन्धे ब्रह्मानन्दस्य काष्ठां परिसमाप्तिं सर्वात्मनाभिव्यक्तिं श्रुतिरादर्शयतीत्युक्तेऽर्थे लिङ्गमाह । तस्मादिति ॥ ५० ॥

तत्रैतस्मिन्यथोक्तेऽर्थे श्लोकोऽप्युच्चैर्निगद्यते ।
मन्त्रद्वारेण वाक्यार्थं कथं नाम प्रपत्स्यते ॥ ५१ ॥
असत्समोऽसौ भवति योऽसद्ब्रह्मेति वेद चेत् ।
अस्ति ब्रह्मेति चेद्वेद सन्तं तं ब्राह्मणा विदुः ॥ ५२ ॥

सर्वस्य प्रतिष्ठाभूते स्वप्रधाने ब्रह्मणि ब्राह्मणोक्ते मन्त्रमवतार्य तदर्थं संक्षिपति । तत्रेति ॥ ५१ ॥ इति पञ्चमः खण्डः ॥ ५ ॥ ५२ ॥

---

१ ( ग. घ. ) यत्र निग°। २ ( ग. घ. ) °देतत्सक°। ३ ( ङ. ) °ज्याद्युप°। ४ ( ङ. ) °त्याशङ्क्याह। ५ ( क. ख. ) °मात्मनाभि°। ६ ( च. ) °र्वात्माभि°।

सदप्यात्मस्वरूपेण ब्रह्मासदिति वेद चेत्।
सोऽसन्नेवेह भवति कोशात्मत्वाभिमानभाक् ॥५३॥

असन्नेव स भवति। असद्ब्रह्मेति वेद चेदित्यस्य श्लोकभागस्यार्थं प्रपञ्चयति। सदपीति ॥ ५३ ॥

न हि कोशात्मना सत्त्वमृते ब्रह्म समश्नुते।
कुतः सर्पात्मना सत्त्वमृते रज्जुं सदात्मिकाम् ॥५४॥

किमित्यात्मनोऽसत्त्वं कोशरूपेण सत्त्वादित्याशङ्क्याऽऽह। न हीति। दृष्टान्ते सर्पो दार्ष्टान्तिके चाऽऽत्मा कर्तृत्वेन संबध्यते ॥ ५४ ॥

असद्भ्यः खलु कोशेभ्यः सदेकं ब्रह्म वेद चेत्।
दृशे रूपान्तरासत्त्वात्सन्तं तं ब्राह्मणा विदुः ॥ ५५ ॥

अस्ति ब्रह्मेतिचेद्वेद। सन्तमेनं ततो विदुरितिश्लोकस्योत्तरार्धं प्रपञ्चयति। असद्भ्य इति। दृशेरात्मनो ब्रह्मणः सकाशाद्रूपान्तरस्यासत्त्वाद्ब्रह्मणश्च सत्त्वाभ्युपगमादिति हेत्वर्थः ॥ ५५ ॥

यस्मादेवमतो हित्वा कोशानज्ञानकल्पितान्।
निर्विकारमनाद्यन्तं परमात्मानमाश्रयेत् ॥ ५६ ॥

यतो ब्रह्मरूपेणैवाऽऽत्मनः सत्त्वं न कोशरूपेण कोशानां कल्पितत्वेनासत्त्वादतश्च कोशान्विवेकज्ञानेन विहाय परमात्मानमात्मत्वेन जानीयादित्याह। यस्मादिति ॥ ५६ ॥

यतः कोशातिरेकेण नासत्त्वं विद्यते परम्।
मृत्युर्वा असदित्येवं घटते श्रुत्युदीरणम् ॥ ५७ ॥

परमात्मरूपेणापि कोशरूपेणेवाऽऽत्मनोऽसत्त्वं स्यादित्याशङ्क्याऽऽह। यत इति। कोशात्मनैवासत्त्वमित्यत्र प्रमाणमाह। मृत्युर्वा इति ॥ ५७ ॥

अस्तीत्येवोपलब्धव्यः सदेवेति च शासनम्।
ब्रह्मात्मव्यतिरेकेण सत्त्वमन्यत्र दुर्लभम् ॥ ५८ ॥

कोशपञ्चकं मृत्युशब्देन विवक्षितं ब्रह्मात्मना तु नाऽऽत्मनोऽसत्त्वमित्यत्रापि प्रमाणमाह। अस्तीत्येवेति। श्लोकार्थमुपसंहरति। ब्रह्मात्मेति ॥ ५८ ॥

---

१ (क. ख.) 'मरणात्मको'।

तस्यैष एव शारीरो योऽशरीरः सदेकलः ।
आनन्दान्तस्य पूर्वस्य ह्यात्मा नात्मवतः परः ॥५९॥

तस्यैष एव शारीर आत्मा । यः पूर्वस्येत्यस्यार्थमाह । तस्येति ॥ ५९ ॥

उक्तं ब्रह्मविदाप्नोति परं नाज्ञोऽसदाश्रयः ।
इत्यस्य निर्णयार्थाय परो ग्रन्थोऽवतार्यते ॥ ६० ॥

अथातोऽनुप्रश्ना इत्यादेरुत्तरग्रन्थस्य तात्पर्यमाह । उक्तमिति । ब्रह्मविदाप्नोति परमित्यत्र ब्रह्मविदेव परं ब्रह्म प्राप्नोति नाज्ञोऽविद्वान्कल्पितकोशपञ्चकमात्मत्वे गतत्वादित्युक्तमस्यैवार्थस्याऽऽक्षेपद्वारा समाधानार्थमुत्तरग्रन्थप्रवृत्तिरित्यर्थः ॥ ६० ॥

साधारणं परं ब्रह्म विदुषोऽविदुषश्च चेत् ।
प्राप्त्यप्राप्ती समे स्यातां नियमे हेत्वसंभवात् ॥ ६१ ॥

श्रुत्या विवक्षितमाक्षेपमेव दर्शयति । साधारणमिति । विदुषोऽविदुषश्च साधारणं स्वरूपं यदि परं ब्रह्म तदा द्वयोरपि ब्रह्मप्राप्तिस्तदप्राप्तिर्वा समाने युज्येते न तु विदुषो ब्रह्मप्राप्तिरविदुषश्च तदप्राप्तिरिति नियमो नियामकाभावादित्याक्षिप्य नियमसमर्थनार्थमुत्तरग्रन्थप्रवृत्तिरित्यर्थः ॥ ६१ ॥

कार्यमात्रावबद्धान्तःकरणत्वात्तमस्विनः ।
न शक्यास्तीति धीः कर्तुं स्वतःसिद्धात्मवस्तुनि ॥
अतोऽस्यास्तित्वसिद्ध्यर्थं कल्पनातीतरूपिणः ॥६२॥

उत्तरग्रन्थस्यैव तात्पर्यान्तरमाह । कार्यमात्रेति । कोशपञ्चकस्याऽऽत्मत्वेन प्रतिपन्नत्वात्परमात्मा नास्त्येवेतिशङ्कायां तदस्तित्वसाधनायावशिष्टप्रश्नद्वयसमाधानाय च समनन्तरग्रन्थसमुत्थानमित्यर्थः ॥ ६२ ॥

अथात इत्यनुप्रश्ना वक्ष्यन्ते निर्णयार्थिने ॥ ६३ ॥
अथानन्तरमस्यैव साधारण्यात्प्रमेयतः ।
आचार्योक्तिमनुप्रश्नाः शिष्यस्य गुरुसंनिधौ ॥ ६४ ॥

एवं तात्पर्यमुक्त्वा पदार्थान्कथयति । अथेति । ब्रह्मात्मैक्यज्ञानस्य फलवत्त्वकथनानन्तर्यमथशब्दार्थः । यतो विदुषोऽविदुषश्च साधारणं ब्रह्म यतश्चाप्रमेयमतः प्रश्ना भवन्तीत्यतःशब्दार्थः । आचार्योक्तेरनन्तरमित्यनुशब्दार्थः ॥६३॥६४॥

---

१ (ग. घ.) °वमाको°। २ (क. ख.) °दियुक्त°। ३ (ग. घ. च.) °रगस्व°। ४ (क. ख. ग. घ.) °यमाधना°। ५ (ग. ङ.) °र्थिन°।

अप्यविद्वानमुं लोकं प्रेत्य कश्चित्समश्नुते ।
न चेदविद्वानाप्नोति विद्वानेतीति का प्रमा ॥
स्यान्न वेत्यपरः प्रश्नस्त्रित्वाद्धि बहुवागियम् ॥ ६५ ॥

प्रश्नानेव विभज्य कथयति । अपीति । अविद्वान्कश्चिन्मृतः सन्कैवल्यं प्राप्नोत्युत न प्राप्नोतीत्येकः प्रश्नः। आत्मत्वे सत्यपि ब्रह्मणोऽविद्वान्विद्यावलाभावान्न प्राप्नोतीति चेत्तदा विद्वानपि प्राप्नोत्युत नेति द्वितीयः। ब्रह्मप्राप्तेरविद्यानिवृतेर्रतिरेकाद्ब्रह्मास्ति नास्तीति तृतीयः। तेन बहुवचनमित्यर्थः ॥ ६५ ॥

श्रुतिश्चात्र विचारार्था विचार्यं वस्त्विदं यतः ।
एतेषां खलु चोद्यानामुत्तरार्थोत्तरा श्रुतिः ॥६६॥

श्रुतेर्विचारविषयत्वोक्तिपूर्वकं सोऽकामयतेत्याद्युत्तरसंदर्भस्य तात्पर्यमाह । श्रुतिश्चेति ॥ ६६ ॥

द्वयोः सद्भावपूर्वत्वादस्तित्वं तावदुच्यते ॥ ६७ ॥
घटाङ्कुरादि यत्कार्यं दृष्टं सत्कारणं हि तत् ।
आकाशादि च नः कार्यं तदप्येवं प्रतीयताम् ॥ ६८॥

क्रममतिक्रम्य तृतीयप्रश्नस्य प्राथम्येन निर्णये हेतुमाह । द्वयोरिति ॥६७॥ ब्रह्मणः सत्त्वमनुमानेन साधयति । घटेति । आकाशादि सत्पूर्वकं कार्यत्वाद्घटादिवदिति लौकिकन्यायावष्टम्भेन सत्कारणं तावदधिगतं तस्य च देशादिकारणत्वेन देशाद्यनवच्छिन्नत्वाद्ब्रह्मत्वं सिद्धमित्यर्थः ॥ ६८ ॥

असतश्चेदिदं कार्यं सर्वं स्यादसदन्वितम् ।
असतः कारणत्वं च निरात्मत्वान्न सिध्यति ॥ ६९ ॥

जगत्कारणस्य ब्रह्मणो विशेषतोऽनुपलम्भेनासत्त्वादसदेव कारणं जगतः स्यादित्याशङ्क्याऽऽह । असतश्चेदिति । किंच कारणत्वं कार्यापेक्षया नियतप्राक्कालसत्त्वं तच्च शून्यस्य संभवतीत्याह । असत इति ॥ ६९ ॥

---

१ (इ च.) °द्वानेव क°। २ (ख. ग घ ङ.) °प्नोतिचे°। ३ (क. ख. ग. घ. च.)°रनति ४ (क ख ) °वेत्युच° ५ (क ) दिवरका°। ६ (ङ. च.) °च सत्कार्य°। ७ (ग घ.च.) °गत्व दे°।

ध्रुवः सन्कुरुते कार्यमयस्कान्तो मणिर्यथा ।
कारणत्वं भवेदेवं कुर्वतोऽतिशयः कुतः ॥ ७० ॥

ब्रह्मापि जगतो न कारणं कूटस्थत्वादित्याशङ्क्याऽऽह । ध्रुवः सन्निति । कुर्वत्कारणमित्यङ्गीकरणान्न कूटस्थस्य कारणत्वमित्याशङ्क्याऽऽह । कुर्वत इति । सदा कुर्वंचेत्कारणं तदाऽतिशयस्य विशेषस्याभावादेकरूपत्वात्कूटस्थस्यैव कारणत्वमापद्येत कदाचित्कुर्वंचेत्कारणं तर्हि कारणत्वमकुर्वत एव कुर्वद्रूपस्याकुर्वत्कार्यत्वादित्यर्थः ॥ ७० ॥

साविद्यः प्रत्यगात्मा यो वियद्योनिः पुरोदितः ।
सोऽकामयत नाविद्यां विना कामोऽस्ति कस्य चित् ॥७१॥

आकाशादिकारणस्य प्रत्यगात्मनः सद्भावं प्रसाध्य तत्रैवार्थे समनन्तरवाक्यमवतारयति । साविद्य इति । आकाशादिकारणस्याज्ञातस्य प्रत्यगात्मनः सशब्देनोपादाने हेतुमाह । नाविद्यामिति ॥ ७१ ॥

अलातस्यैकरूपस्य वैश्वरूप्यं यथाऽन्यतः ।
रूपाभिधानभ्रान्त्युत्थां बहुतेयं परात्मनः ॥
प्रजायेयेत्यतो वक्ति नामरूपात्मना प्रभुः ॥ ७२ ॥

अविद्यया कामयितृत्ववत्परस्याऽऽत्मनो बहुभवनमर्पि तथैवेति दर्शयन्ननन्तरं वाक्यमुत्थापयति । अलातस्येति । तस्य नैश्चल्ये सति तेजोमात्रत्वेनैकरूपस्य बहुरूपत्वं दीर्घत्ववक्रत्वादिचलनविशेषाद्यथोत्पद्यते तथा परस्याऽऽत्मनः स्वारस्येनैकरूपस्य नामरूपात्मकाविद्याजनितभ्रान्तिवशाद्बहुभवनं भवति । अतो बहुभवनस्याविद्यामन्तरेणायोगान्नामाद्यात्मना प्रजायेयेति श्रुतिरित्यर्थः ॥ ७२ ॥

आत्मस्थे नामरूपे ये देशकालाद्यपेक्षिणी ।
जगत्कर्मवशादीशाद्व्यज्येते बहुधाऽऽत्मनः ॥७३॥
व्याकृतिर्या तयोर्विष्णोः प्रत्यहं नामरूपयोः ।
भूयो भवनमेतस्यान्मायिनोऽनेकता यथा ॥७४॥

अविद्यया बहुभवनं परस्य प्रपञ्चयति । आत्मस्थ इति । जगच्छब्देन प्राणिजातं गृह्यते । वार्तिकद्वयेऽपि नामरूपशब्देनाविद्योच्यते ॥ ७३ ॥ ७४ ॥

---

१ (ङ.) ध्रुवं सन्कुरु°। २ (च.) °ध्रुवं सदिति । ३ (च.) °नैव वाक्ये म°। ४ (ख.) °पि यथैवे°। ५ (ग. घ.) °स्थे ये नामरूपे दे°।

न ह्यनवयवस्यास्य बहुत्वं युज्यतेऽञ्जसा ।
तस्मान्नार्कं बहुत्वं स्याद्व्योम्नो यद्वद्घटादिभिः ॥७५॥

परिणामित्वाद्ब्रह्मणो मुख्यमेव बहुभवनं नाविद्याकृतमित्याशङ्क्याऽऽह । न ह्यीति ॥ ७५ ॥

श्रौतं सृष्ट्यादिविषयमीश्वरालोचनं तपः ।
कार्यत्वाल्लौकिकस्येह तपसोऽसंभवो भवेत् ॥ ७६ ॥

स तपोऽतप्यतेत्यत्र तपःशब्दार्थमाह । श्रौतमिति । किमिति तपःशब्देन प्रसिद्धमेव कृच्छ्रादि नोच्यते तस्य कार्यत्वेन वर्णाश्रमादिसर्गोत्तरकालत्वाद्ब्रह्मणि चासंभवादित्याह । कार्यत्वादिति ॥ ७६ ॥

यथाश्रुति समालोच्य ससर्ज जगदीश्वरः ।
यथाक्रमं यथारूपं यथाकर्म यथाकृति ॥ ७७ ॥

स तपस्तप्त्वेत्यादेरर्थमाह । यथाश्रुतीति ॥ ७७ ॥

मायावी जगदुत्पाद्य माययैवेश्वरेश्वरः ।
सर्पादीन्कल्पितान्स्रग्वत्तदेवानुविवेश सः ॥ ७८ ॥

तत्सृष्ट्वेत्यादेरर्थं कथयति । मायावीति ॥ ७८ ॥

मृद्वच्चेत्कारणं ब्रह्म कार्यं सर्वं तदात्मकम् ।
तदात्मतातिरेकेण प्रवेशोऽन्यो न विद्यते ॥ ७९ ॥

जगत्सृष्ट्वाऽत्र प्रविष्टं स्रष्टृ ब्रह्मेत्युक्तं प्रवेशमाक्षिपति । मृद्वदिति ॥ ७९ ॥

न चान्यः प्राविशद्विष्णोः श्रूयते ह्येककर्तृता ।
सृष्ट्वा जगत्तदेवानुप्राविशच्चेति हि श्रुतिः ॥ ८० ॥

कार्यस्योपादानाव्यतिरेकादुपादानस्य ब्रह्मणोऽप्रविष्टदेशाभावात्प्रवेशो न सिध्यति चेत्तर्हि ब्रह्मणोऽन्यस्य कस्य चित्प्रविष्टत्वमेष्टव्यमित्याशङ्क्य सृष्टिप्रवेशयोरेककर्तृकत्वश्रुतिविरोधान्नैव मित्याह । न चेति ॥ ८० ॥

---

१ ( ग. घ. ) ॰भवाद्ब्रह्मे॰ । २ ( ङ. ) ॰त्मनाऽवि॰ । ३ ( क. ख. ) ॰चान्यत्प्रावि॰ । ४ ( क. च. ) ॰र्तृत्वश्रु॰ ।

कपालाद्यात्मना कुम्भं मृद्वच्चेत्प्राविशज्जगत् ।
मृदोऽनेकात्मकत्वात्तु घटते नैकतो दृशेः ॥ ८१ ॥

यथा घटस्य समवायिकारणमेव कपालचूर्णादेर्घटे प्रवेशे सति तदात्मना घटं प्रविशतीति व्यपदिश्यते तथा जगतः समवायिकारणमेव ब्रह्म जगदुत्पाद्य तत्र प्रविष्टमिति व्यपदेशः सिध्यतीति शङ्कते । कपालादीति । वैषम्यप्रदर्शनेन प्रत्यादिशति । मृद इति ॥ ८१ ॥

अनाप्तदेशवन्मृद्वत्प्रवेशो व्यापिनः कथम् ।
प्रवेशश्रवणात्तर्हि परिच्छिन्नं प्रकल्पताम् ॥ ८२ ॥

वैषम्यमेव स्फोरयति । अनाप्तेति । प्रवेशश्रुत्या परिच्छिन्नत्वं स्रष्टुरिष्यता-मित्याशङ्कते । प्रवेशेति ॥ ८२ ॥

मुखे हस्तादिवन्नायं प्रवेशोऽपि घटिष्यति ।
अमूर्तस्यापि नैवं स्यात्कार्यव्यापित्वहेतुतः ॥ ८३ ॥

परिच्छिन्नत्वाङ्गीकारेऽपि कथं प्रवेशोपपत्तिरित्याशङ्क्याऽऽह । मुख इति । मूर्तस्य मूर्तान्तरे प्रवेशदर्शनात्परस्य चामूर्तत्वान्न कार्ये प्रवेशो युज्यते । तस्य कार्यव्यापित्वादव्याप्तकार्यदेशाभावादित्युत्तरमाह । अमूर्तस्येति ॥ ८३ ॥

व्यापि वाऽव्यापि वा कार्यं व्याप्नोत्येव हि कारणम् ।
न ह्यात्मशून्यो देशोऽस्ति यं जीवेनाविशेत्परः ॥८४॥

तस्य परिच्छिन्नत्वाङ्गीकारात्कथं कार्यव्यापित्वमित्याशङ्क्याऽऽह । व्यापि वेति । समवायिकारणं परिच्छेदेऽपरिच्छेदे च स्वकार्यं व्याप्नोत्येव तथा च स्रष्टा प्रविष्ट इत्येतदनिष्टमित्यर्थः। परस्य व्यापित्वेऽपि जीवस्याव्यापित्वात्तेनाऽऽत्म-नोऽस्य कार्ये प्रवेशः स्यादित्याशङ्क्याऽऽह-। न हीति ॥ ८४ ॥

अथ कारणरूपेण कार्यमीशः समाविशेत् ।
अहं ब्रह्मेतिवज्जह्यात्कार्यं कार्यात्मतां तथा ॥ ८५ ॥

यथा कार्यं कारणरूपेण पर्यवस्यति तथेश्वरो जगदुत्पाद्य तत्र प्रविशती-त्यभ्युपगमान्न प्रवेशानुपपत्तिरिति चोदयति । अथेति । यथाऽहं ब्रह्मास्मीत्यत्राहं कर्तृत्वनिरासेनात्मनो ब्रह्मत्वं बोध्यते तथा यथोक्ते प्रवेशे कार्यस्य कार्यात्मता-त्यागः स्यात्तथा सति न कार्ये प्रवेशः सिध्यतीत्युत्तरमाह । अहमिति ॥८५॥

---

१ ( ग. घ. ) °कल्प्यता° । २ ( क. ख ) °स्फोटय° । ३ ( ग.घ. ) °कार्यम° । ४(ग.घ.) °दका° । ५( ग.घ.) °थापि सृ° । ६ (ङ.च ) °ना तस्य । ७(क.ख )कार्यम° ।

मतं जीवात्मकं कार्यं याति कार्यान्तरं यदि ।
विरोधान्नैवमप्येतन्नैति कुम्भः शरावताम् ॥ ८६ ॥

परमात्मकार्यस्य जीवस्याहंकारादिकार्यात्मकत्वं परस्य प्रवेशो नामेति पुनः शङ्कते । मतमिति । घटस्य शरावत्वादर्शनादन्यस्यान्यभावासंभवान्न जीवस्याहंकाराद्यात्मत्वमिति दूषयति । विरोधादिति ॥ ८६ ॥

नामरूपादिकार्याच्च व्यतिरेकानुवादिनि ।
श्रुतिः कुप्येत मोक्षश्च तदापत्तौ सुदुर्लभः ॥ ८७ ॥

किंच जीवस्य परमात्मकार्यस्याहंकारादिकार्यभावे सत्यनने जीवेनाऽऽत्मनानुप्रविश्येति नामरूपक्रियात्मककार्यातिरेकं जीवस्यानुवदन्ती श्रुतिर्विरुध्येतेत्याह । नामेति । कार्यस्य जीवस्य कार्यान्तरापत्तौ तस्य ब्रह्मभावो मोक्षोऽपि दुर्लभो भवेत्स्वरूपनाशमन्तरेणान्यस्यान्यभावासंभवादतोऽपि यथोक्तप्रवेशानुपपत्तिरित्याह । मोक्षश्चेति ॥ ८७ ॥

जलार्कवत्प्रवेशश्चेन्नापरिच्छिन्नरूपतः ।
अमूर्तत्वाच्च नास्यैवं प्रवेश उपपद्यते ॥ ८८ ॥

प्रकारान्तरेण प्रवेशमाशङ्क्य प्रत्यादिशति । जलार्कवदिति ॥ ८८ ॥

एवं तर्हि प्रवेशोऽस्य श्लिष्यते न कथंचन ।
न च गत्यन्तरं विद्मो येन वाक्यं समर्थ्यते ॥ ८९ ॥

यथोक्तानां प्रवेशप्रकाराणामन्यतमोऽपि प्रकारो दर्शितरीत्या नोपपद्यते चेत्तर्हि परस्याऽऽत्मनो न कथंचिदपि प्रवेशो युज्यत इत्युपसंहरति । एवं तर्हीति । प्रवेशवाक्यं तर्हि प्रागुक्तान्प्रकारान्परिहाय प्रकारान्तरेण समर्थ्यतामित्याशङ्क्याऽऽह । न चेति ॥ ८९ ॥

आनर्थक्यादिदं तर्हि त्यज्यतां शिशुवाक्यवत् ।
प्रवेशवाक्यं नैवं तद्गत्यन्तरसमाश्रयात् ॥ ९० ॥

कथं तर्हि प्रवेशवाक्यस्य प्रामाण्यमित्याशङ्क्य पूर्वपक्षमुपसंहरति । आनर्थक्यादिति । प्रवेशवाक्यं न त्याज्यं तस्य गत्यन्तरसंभवादिति सिद्धान्तयति । नैवमिति ॥ ९० ॥

---

१ ( ख. ) °रात्म°। २ ( घ. ) °त्मकत्व° ( ग ) °त्मकमि°।

ब्रह्मविदाप्नोतीत्युक्त्वा सत्यादिलक्षणम् ।
प्रावेशयद्गुहां तच्च तदनात्मत्वशान्तये ॥ ९१ ॥

ब्रह्मात्मनोरेकत्वज्ञानार्थं प्रवेशस्याप्रतिपाद्यस्यैव कल्पितत्वान्नोक्तदोषाणामवकाशोऽस्तीति गत्यन्तरमेव स्फोरयति । ब्रह्मविदिति ॥ ९१ ॥

अब्रह्मत्वनिवृत्त्यर्थं ब्रह्मात्मेतिविशेषणम् ।
तन्निवृत्तावावाक्यार्थं कैवल्यं प्रतिपद्यते ॥ ९२ ॥

यो वेद निहितं गुहायामिति गुहाप्रवेशवचनं ब्रह्मणोऽनात्मत्वनिवृत्त्यर्थमितियथोच्यते तथैवायमात्मा ब्रह्मेति ब्रह्मणो विशेष्यत्वमात्मनोऽप्यब्रह्मत्वशङ्कानिवृत्त्यर्थमित्याह । अब्रह्मत्वेति । ब्रह्मणोऽनात्मत्वनिवृत्तिरात्मनश्चाब्रह्मत्वनिवृत्तिर्यदा विशेषणसामर्थ्याल्लभ्यते तदा सिद्धमर्थं कथयति । तन्निवृत्ताविति ॥९२॥

यस्मादेवं फलं तस्माज्ज्ञानमत्र विवक्षितम् ।
गुहायामद्वयं ब्रह्म तस्मान्निहितमुच्यते ॥ ९३ ॥

मोक्षफलस्यैक्यज्ञानस्यात्र विवक्षितत्वे तादर्थ्येन मन्त्रे ब्राह्मणे च प्रवेशकल्पनेत्याह । यस्मादिति ॥ ९३ ॥

तद्रूपानुगमायान्नमयान्तं कार्यमाह हि ॥ ९४ ॥
पूर्वपूर्वातिरेकेण त्रीन्कोशानतिलङ्घ्य च ।
विज्ञानमयरूपायां गुहायां दर्शितः परः ॥ ९५ ॥

कथमेकत्वज्ञानमत्र विवक्षितमित्युच्यते कोशपञ्चकोपन्यासस्यापीह दर्शनादित्याशङ्क्याऽऽह । तद्रूपेति । ब्रह्मात्मैकत्वस्वरूपानुगमस्तदवगतिस्तदर्थमानन्दमयाद्यन्नमयान्तं कोशपञ्चकमिहोपन्यस्यते तस्मादैक्यज्ञानमेवात्र विवक्षितं कोशपञ्चकवचनस्य तदुपायत्वादित्यर्थः ॥ ९४ ॥

प्रवेशवचनमेकत्वज्ञानार्थमित्युक्तं प्रपञ्चयति । पूर्वपूर्वेति । पूर्वस्मादन्नमयाद्बाह्यादतिरेकेणान्तरं प्राणमयं ततोऽपि चातिरेकेण मनोमयं ततश्चातिरेकेण विज्ञानमयं गृहीत्वा त्रीन्कोशान्पूर्वोक्तानेवमतिक्रम्य विज्ञानमयरूपा या बुद्धिलक्षणा गुहा तत्र परमात्मा प्रविष्टो दर्शितस्तथा च जीवपरयोरैक्यं सिध्यतीत्यर्थः ॥ ९५ ॥

१ (ग.) °थमेकमेकत्व° (घ.) °थमेकमेव त्व° । २ (ग. घ) °नमत्र° । ३ (ग घ) °श्चकं च तस्य°

तत्राऽऽनन्दमयो यस्माल्लक्ष्यते राहुचन्द्रवत् ।
मानुपादधि यत्रेदं सुखं निष्ठां प्रपद्यते ॥
उत्कृष्यमाणं क्रमशस्तद्ब्रह्मासीति बोधयेत् ॥ ९६ ॥

कोशान्तरं परित्यज्य बुद्धावेव परस्य प्रवेशवचने हेतुमाह । तत्रेति । ब्रह्मात्मैकत्वज्ञानस्यात्र विवक्षितत्वादाचार्यो योग्यं शिष्यं दृष्ट्वा त्वं ब्रह्मेत्युपदिशेदित्याह । मानुपादिति ॥ ९६ ॥

विकल्पयोनावेतस्यां निर्विकल्पोऽधिगम्यते ।
तस्मात्तस्यां प्रवेशोऽस्य कल्प्यते नाञ्जसोच्यते ॥९७॥

एकत्वज्ञानाय प्रवेशकल्पनेत्युक्तमेव प्रकारान्तरेण प्रकटयति । विकल्पेति । एषा हि बुद्धिर्विकल्पयोनिः सर्वविकल्पाश्रयत्वात्तत्र प्रत्यगात्मप्रवेशे सत्येव निर्विकल्पः सर्वाविद्यातत्कार्यविनिर्मुक्तोऽहं ब्रह्मास्मीति यस्मात्परो ज्ञातुं शक्यते तस्मात्तत्र प्रवेशकल्पना भवत्यैक्यज्ञानार्थेत्यर्थः ॥ ९७ ॥

प्रकाशात्मक एतस्मिन्द्रष्टृश्रोत्रादिलक्षणम् ।
मोहादीक्षामहे यस्मात्प्रविष्टस्तेन कल्प्यते ॥ ९८ ॥

आत्मनो दर्शनश्रवणादिविशेषज्ञानस्यान्तःकरणद्वारा चक्षुःश्रोत्रादिकृतत्वाच्च तस्य तत्र प्रवेशो भवतीत्याह । प्रकाशात्मक इति । एतस्मिन्नित्यन्तःकरणमुच्यते तस्य च प्रकाशात्मकत्वं ज्ञानाकारपरिणामाङ्गीकरणात्तत्र द्रष्टा श्रोतेत्यादिरूपं मोहात्प्रतीयते तस्य च परिशुद्धस्य परमात्ममात्रत्वादैक्यसिद्ध्यर्थत्वेनैव प्रवेशकल्पनेत्यर्थः ॥ ९८ ॥

तस्यैष एव शारीर आत्मेत्येवं ब्रुवाणया ।
ऐकात्म्यमुच्यते श्रुत्या ह्यप्रविष्टाप्रविष्टयोः ॥ ९९ ॥

इतश्चात्र ब्रह्मात्मनोरेकत्वं विवक्षितमित्याह । तस्येति । यो हि परमात्माऽसन्नेव स भवतीत्यादिश्लोके[1] निर्दिश्यते तस्य संनिधानादेषशब्देन परामृष्टुं शक्यत्वादसावेव परमात्मा तस्य पूर्वोक्तस्य कोशपञ्चकस्य शारीर आत्मेत्युक्ते जीवब्रह्मणोरेकत्वमेव सिध्यति परस्यैव कोशपञ्चकानुप्रवेशेन जीवभावादित्यर्थः ॥ ९९ ॥

---

१ (ग. घ.) 'दिकरणत्वा'। २ (क. च.) 'केन नि'। ३ (क. ङ.) 'रामृष्टुं श'।

प्रवेशहेतुदोषाणामध्यस्तानां परात्मनि ।
यदाह्दीत्यादिना ध्वंस एवं सत्युपपद्यते ॥ ४०० ॥

जीवब्रह्मणोरेकान्तेनैकत्वे प्रवेशनिमित्तकर्तृत्वादिदोषाणां ब्रह्मण्यध्यारोपितानां यदा हीत्यादिवाक्योत्थज्ञानान्निवृत्तिः सिध्यतीति फलितमाह । प्रवेशेति ॥ ४०० ॥

अप्रविष्टस्वभावस्य प्रवेशस्तेन कल्प्यते ।
क्षेत्रज्ञेश्वरहानेन ह्यैकात्म्यं स्यात्कथं त्विति ॥ १ ॥

जीवब्रह्मणोरैकत्वे ब्रह्मणोऽसंसारित्वात्तदभेदाज्जीवेऽपि भातसंसारस्य कल्पितत्वादेकत्वज्ञानान्मोक्षोपपत्तेरैकत्वज्ञानाय प्रवेशकल्पना युक्तेत्युपसंहरति । अप्रविष्टेति । तेनेत्युक्तं प्रवेशकल्पनाकारणमेव स्फोरयति । क्षेत्रज्ञेति ॥ १ ॥

मूर्तामूर्तात्मकं कार्यं यत्स्रष्ट्वा प्राविशत्प्रभुः ।
रजतं शुक्तिकेवात्मा तदात्मेवाभवन्मृषा ॥ २ ॥

तदनुप्रविश्य सच्च त्यच्चाभवदित्यस्य तात्पर्यार्थमाह । मूर्तेति । यत्कार्यं मूर्तामूर्तात्मकं भूतपञ्चकं तदविद्यया सृष्ट्वा परमात्मा प्राविशत्प्रविश्य चायमात्मा तत्तदात्मैव मिथ्या संवृत्तः । यथा शुक्तिका मिथ्या रजतं भवति तद्वदित्यर्थः॥२॥

मूर्तं भूतत्रयं सत्स्यादितरत्त्यदिहोच्यते ।
अव्याकृतादाशरीरादेतावद्वस्तु नापरम् ॥ ३ ॥

पृथिव्यापस्तेजश्चेति भूतत्रयं मूर्तं सच्छब्दवाच्यं वायुराकाशश्चेति भूतद्वयममूर्तं त्यच्छब्दवाच्यमित्यवान्तरविभागमाह । मूर्तमिति । प्रतीचो भूतपञ्चकात्मकत्वकथनेऽपि कार्यान्तरं पृथगवशिष्टमस्तीत्याशङ्क्याव्याकृतादर्वागन्त्यकार्यपर्यन्तं सर्वं भूतपञ्चकात्मकमित्याह । अव्याकृतादीति ॥ ३ ॥

---

१ (ग. घ.) °त्क्याथन्विति । २ (घ.) °रेकान्तेनैक°। ३ (च.) °पि भ्रान्ते. सं°। (ग. घ.) °पि नातः सं°। ४ (ग. घ.) क्तिकेवा°। ५ (ङ.) °त्पर्येमा°। ६ (ग. घ.) °कं पञ्च°। ७ (क. ख.) मूर्तभू°। ८ (ग. घ.) °थिव्यप्तेज°। ९ (ग. घ. ङ.) °त्मत्व°। १० (ग. घ.) °ष्टमित्या°।

समानेतरजातीयान्निर्धार्येदंतयोच्यते ।
यन्निरुक्तं तदत्र स्यादनिरुक्तमितोऽन्यथा॥४॥

निरुक्तं चानिरुक्तं चेत्यस्यार्थमाह । समानेति । सजातीयाद्विजातीयाच्च पृथक्कृत्य येन विशेषणेदंतया वस्तु निर्दिश्यते स विशेषो निरुक्तशब्देनोच्यते । सजातीयविजातीयाभ्यामव्यावर्तको विशेषस्त्वनिरुक्तशब्दवाच्यो भवतीत्यर्थः ॥ ४ ॥

साक्षात्परोक्षरूपे तु मूर्तामूर्ते पुरोदिते ।
निरुक्तेतररूपे ये तयोरेव विशेषणे ॥ ५ ॥

निरुक्तानिरुक्तयोः स्वातन्त्र्यं व्यावर्तयति । साक्षादिति । भूतत्रयमपरोक्षं सच्छब्दवाच्यं भूतद्वयं परोक्षं त्यच्छब्दवाच्यमित्युक्तयोरेव निरुक्तानिरुक्ते यथाक्रमं विशेषणे स्यातामित्यर्थः ॥ ५ ॥

निलयो मूर्तधर्मः स्यादुत्तरोऽमूर्तसंश्रयः ।
विज्ञानं चेतनं विद्यादविज्ञानमचेतनम् ॥ ६ ॥

निरुक्तानिरुक्तयोरुक्तन्यायं निलयनं चानिलयनं चेत्यत्रापि योजयति । निलय इति । विज्ञानं चाविज्ञानं चेत्यस्यार्थमाह । विज्ञानमिति ॥ ६ ॥

व्यावहारिकमेवात्र सत्यं स्यादधिकारतः ।
पारमार्थिकसत्यस्य वाक्यान्ते समुदीरणात् ॥ ७ ॥

सत्यं चानृतं च सत्यमभवदित्यत्र प्रथमसत्यशब्दार्थमाह । व्यावहारिकमिति । सत्यदादिव्यावहारिकपदार्थोक्तिप्रकरणे सत्यमित्युक्तत्वादनृतसंनिधानाच्चेति हेतुमाह । अधिकारत इति । तत्रैव हेत्वन्तरमाह । पारमार्थिकेति॥ ७ ॥

मृगतृष्णादिवन्मिथ्या तदिहानृतमुच्यते ।
इत्येतदभवत्स्रष्टा त्वविद्योत्थमविद्यया ॥ ८ ॥

अनृतशब्दार्थमाह । मृगतृष्णादीति । सच्च त्यच्चेत्यादिवाक्यानामुक्तमर्थमुपसंहरति । इत्येतदिति ॥ ८ ॥

---

१ (ग घ.) °क्तमतोऽ° । २ (ग. घ.) °याभ्या व्या° । ३ (ग. घ. च.) °शेषोऽनि° ।
४ (ग. घ.) °पेण मू° । ५ (ख.) °ष्टा त्ववि° ।

प्रत्याख्यानेन सर्वस्य सत्त्यदाद्यात्मकस्य हि ।
व्यावृत्ताखिलनानात्वमहं ब्रह्मेति बोध्यते ॥ ९ ॥

प्रत्यगात्मनोऽविद्यया समस्तजगदात्मत्वमित्युक्ते फलितमर्थं कथयति । प्रत्याख्यानेनेति । सर्वविशेषनिराकरणेन सर्वस्याऽऽत्मभूतमखण्डं वस्तु यदा ह्येवेत्यादिना बोध्यते तदेवं सत्युपपन्नं भवतीत्यर्थः ॥ ९ ॥

नैतदस्ति न नास्तीदं द्वयोर्मोहोद्भवत्वतः ।
न सत्तन्नासदित्येवं प्राह विश्वेश्वरोऽपि हि ॥ १० ॥

सत्त्यदाद्यात्मकस्य जगतो यदि कल्पितत्वं तर्हि ब्रह्मणोऽपि कल्पितत्वं सदन्तर्भावादित्याशङ्क्याऽऽह । नैतदिति । न तावदत्र सत्त्वं निषेध्यं तस्य सिसाधयिषितत्वादतो व्यभिचारित्वात्कार्यकारणयोरब्रह्मत्वं श्रुतिस्मृत्योरभिप्रेतमित्यर्थः ॥ १० ॥

आविर्भावतिरोभावौ बुद्धेर्यत्साक्षिकाविह ।
तमेकमन्तरात्मानं विद्यादव्यभिचारिणम् ॥ ११ ॥

ज्ञानात्कार्यवत्कारणस्यापि व्यभिचारे कस्याव्यभिचारः स्यादित्याशङ्क्याऽऽह । आविर्भावेति ॥ ११ ॥

तस्मादस्ति परं ब्रह्म यस्याविद्याविकल्पिताः ।
सन्तीव सत्तामालम्ब्य कार्यकारणलक्षणाः ॥ १२ ॥

सर्वानात्मकल्पना कूटस्थब्रह्मचैतन्याधीनेत्युक्त्या प्रकृतं ब्रह्मणोऽस्तित्वं सिद्धमिति फलितमाह । तस्मादिति ॥ १२ ॥

विवादगोचरापन्नं यत्किंचिद्रचनात्मकम् ।
तत्सर्वं बुद्धिमत्पूर्वं तदात्मत्वाद्घटादिवत् ॥ १३ ॥

प्रकृते ब्रह्मणोऽस्तित्वे संभावनाहेतुत्वेनानुमानमारचयति । विवादेति । यत्किंचिद्विशिष्टरचनात्मकं तत्सर्वं बुद्धिमत्पूर्वकं यथा घटघटिकादि तथाऽभिमतं जगदपि चेतनपूर्वकं विशिष्टरचनात्मकत्वात्संमतवदित्यर्थः ॥ १३ ॥

---

१ ( च. ) °विषयानि° । २ ( ग. घ. ) °गे स° । ३ ( क. ख. ) °समुत्पन्नं । ४ ( ङ. ) °मत्यं नास° । ५ ( क. ) °ज्ञानका° । ६ ( क.ख. ) °घात्मक° । ७ (च.) °त्मत्वा° ।

तत्रैतस्मिन्यथोक्तेऽर्थे श्लोकः पूर्ववदुच्यते ।
श्रुत्युक्तार्थानुवादी तु द्रढिम्ने पुंधियोऽधुना ॥ १४ ॥

ब्रह्मणः सत्त्वे ब्राह्मणानुमानाभ्यामुक्ते तदप्येष श्लोको भवतीतिमन्त्रमवतारयति । तत्रेति ॥ १४ ॥ इति षष्ठः खण्डः ॥ ६ ॥

यदिदंशब्दधीगम्यं प्रागसत्तदभूज्जगत् ।
असच्छब्देन चात्र स्याद्ब्रह्मैवानामरूपकम् ॥ १५ ॥

असद्वा इदमग्र आसीदित्यस्यार्थमाह । यदिति । इदंशब्देनेदंधियाऽवगम्यमानं यदिदानीं जगदनुभूयते तत्प्रागवस्थायामसदभूदित्यर्थः । असच्छब्दस्य शून्यविषयत्वं व्यावर्तयति । असच्छब्देनेति । शून्यस्य जगज्जन्महेतुत्वायोगादित्यर्थः ॥ १५ ॥

नामरूपात्मकं कार्यमनात्मत्वात्स्वतो ह्यसत् ।
यत्सदेकं परं ब्रह्म ततो वै सदजायत ॥ १६ ॥

जगतः स्वतः सत्त्वसंभवात्ततो वै सदजायतेत्ययुक्तमित्याशङ्क्याऽऽह । नामेति । सत्त्वं तुच्छव्यावृत्तत्वम् ॥ १६ ॥

सत्यं ज्ञानमनन्तं यत्तदुपेतमविद्यया ।
स्वात्मनैव स्वमात्मानं सत्यद्रूपमचीक्लृपत् ॥ १७ ॥

तदात्मानं स्वयमकुरुतेत्यस्यार्थमाह । सत्यमिति ॥ १७ ॥

यस्मात्स्वयमिदं सर्वमकरोन्निपुणः प्रभुः ।
सुकृतं प्रभुमेवातो महात्मानः प्रचक्षते ॥ १८ ॥

तस्मात्तत्सुकृतमुच्यत *इतिवाक्यस्यार्थमाह । यस्मादिति ॥ १८ ॥

यदि वेश्वरनिर्वृत्तं कार्यं सुकृतमुच्यते ।
निष्ठासंश्रवणात्साक्षान्न तु कर्तेश उच्यते ॥ १९ ॥

तत्सुकृतमिति स्रष्टृब्रह्मविषयत्वेन व्याख्यायार्थान्तरमाह । यदि वेति ॥ १९ ॥

---

१ ( ग. घ. ) सत्वं तु । * अत्र यद्यपि सर्वेष्वप्यादर्शपुस्तकेष्वविकारद्वयं नास्ति तथाऽपि—तस्मात्तत्सुकृतमुच्यत इतीतिवाक्यस्यार्थमाह—इत्यपेक्षितम् । श्रुतौ—तस्मात्तत्सुकृतमुच्यत इति—एतादृशवाक्यस्य स्थितत्वादनुकरणार्थं द्वितीयेतिशब्दस्यापेक्षितत्वात् ।

लोकेऽपि स्वामिना साक्षाद्यत्कृतं कर्म यत्नतः ।
तदेव सुकृतं प्राहुर्न तु भृत्यैस्तथा कृतम् ॥ २० ॥

ईश्वरेण कृतं सुकृतमित्यत्र लोकप्रसिद्धिं दर्शयति । लोकेऽपीति ॥ २० ॥

यद्वै तत्सुकृतं प्रोक्तं सत्त्यदादिस्वभावकम् ।
नीरसस्यास्य कार्यस्य रसोऽसौ परमः स्मृतः ॥२१॥

यद्वै तत्सुकृतमित्यादेरर्थमाह । यद्वै तदिति ॥ २१ ॥

रसः सारोऽमृतं ब्रह्म आनन्दो ह्लाद उच्यते ।
निःसारं तेन सारेण सारवल्लक्ष्यते जगत् ॥ २२ ॥

रसशब्दार्थं दर्शयन्नुक्तमेवं विशदयति । रस इति ॥ २२ ॥

रसस्यातीन्द्रियस्यास्य त्वानन्दत्वं कुतो न्विति ।
अतस्तत्प्रतिपत्त्यर्थं रसं हीत्युत्तरं वचः ॥ २३ ॥

रसस्याऽऽनन्दत्वमुक्तमुपपादयितुमनन्तरवाक्यमादत्ते । रसस्येति ॥ २३ ॥

एतस्मादपि हेतोस्तदस्तीत्यभ्युपगम्यताम् ।
इतश्चास्ति परं ब्रह्म रसत्वस्य प्रसिद्धितः ॥ २४ ॥

रसं हीत्यादिवाक्यस्यार्थान्तरमाह । एतस्मादिति । न केवलं कारणत्वादेव ब्रह्मास्ति किंतु ब्रह्मणो रसत्वस्य श्रुतिसिद्धत्वाच्च तदस्तीत्युक्तमेव प्रपञ्चयति । इतश्चेति ॥ २४ ॥

तृप्तिहेतू रसो नाम मधुराम्लादिलक्षणः ॥२५॥
अन्नादिरसलाभेन यथा तृप्ताः समासते ।
आनन्दिनः कामहीना निरीहाः साध्यसिद्धये ॥२६॥

प्रसिद्धरसशब्दार्थकथनमुखेन ब्रह्मणि रसत्वस्य सत्त्वसाधकत्वं साधयति । तृप्तिहेतुरिति । असतस्तृप्तिहेतुत्वायोगाद्ब्रह्मणश्च रसत्वेन तृप्तिहेतुत्वादस्ति ब्रह्मेत्यर्थः ॥ २५ ॥

तदेव स्पष्टयितुं दृष्टान्तमाह । अन्नादीति ॥ २६ ॥

अपविद्धैषणास्तद्वद्बाह्योपादानवर्जिताः ।
निःसंबोधं परानन्दं प्राप्ताः संन्यासिनोऽमलाः॥२७॥

दार्ष्टान्तिकं दर्शयति । अपविद्धेति ॥ २७ ॥

---

१ ( ग. ) °देवं सु° । २ ( क. ख. ) °त्र दर्शय° । ३ ( ग. घ. ) °तुर° ।

**नूनं तेषां परं स्वास्थ्यं चेतांस्याह्लादयन्त्यलम् ।**
**प्रह्लादचेतसां यानि तानि लिङ्गानि तेषु हि ॥ २८ ॥**

विषयोपभोगविहीनानां विशेषविज्ञानरहितं परमानन्दं प्राप्तानां परमहंसप-
रिव्राजकानां परमं स्वास्थ्यमस्तीतिस्थिते किं सिध्यतीत्याशङ्क्याऽऽह ।
नूनमिति । तत्र गमकमाह । प्रह्लादेति ॥२८ ॥

**उपाग्नि पामनस्येव सुखसंसक्तचेतसः ।**
**लिङ्गं कण्डूयमानस्य लक्षयाम्यात्मवेदिषु ॥ २९ ॥**

तान्येव लिङ्गानि दृष्टान्तोपन्यासेन स्पष्टयति ।उपाग्नीति । अग्निसमीपे वर्तमा-
नस्य पाम्ना व्याधिविशेषेण संयुक्तस्य विशेषतोऽग्निसंतापपूर्वकं लिङ्गादिकण्डूयने
प्रवृत्तस्य जायमाने सुखे संसक्तान्तःकरणस्य परमं स्वास्थ्यं प्राप्तस्य यदिन्द्रिय-
बुद्ध्यादिप्रसन्नत्वमुपलभ्यते तदेव विषयरसानाघ्रातचेतःस्वात्मवेदिषु परमहं-
सपरिव्राजकेषु लक्ष्यते । तस्मादस्ति यथोक्तरीत्या तृप्तिकारणं ब्रह्मेत्यर्थः॥२९॥

**अज्ञातानन्दतत्त्वानामनुमानमिदं भवेत् ।**
**साक्षात्कृतात्मतत्त्वानां प्रत्यक्षतममेव तत् ॥ ३० ॥**

प्रत्यक्षस्याऽऽत्मसंवेद्यस्य सुखस्य पुरुषार्थत्वाभ्युपगमादानन्दस्य प्रागुक्तलि-
ङ्गानुमेयत्वे पुमर्थत्वासिद्धिरित्याशङ्क्याविद्वदृष्ट्याऽनुमानोपन्यासाद्विद्वद्दृष्ट्या
चाऽऽनन्दस्य प्रत्यक्षत्वान्नैतदित्याह । अज्ञातेति ॥ ३० ॥

**बाह्येन्द्रियाणामध्यात्मं संहतिर्येह लक्ष्यते ।**
**एकार्थवृत्तिरूपेण सा दृष्टाऽसंहते सति ॥ ३१ ॥**

रसं ह्येत्यादिवाक्यमेवं व्याख्याय को ह्येत्यादिवाक्यमवतारयितुं भूमिकां
करोति । बाह्येन्द्रियाणामिति । या हि व्यवहारभूमौ शयनासनादीनामेकस्मिन्भो-
गाख्येऽर्थे संहत्य वृत्तिरूपेण संहतिर्दृष्टा सा शयनादिभिरसंहते शेषिणि देवदत्ते
सत्येव भवतीत्युपलब्धं तथा च वायुभेदानामिन्द्रियाणां बुद्ध्यादेश्चाध्यात्मं शरीरे
संहतिरालक्ष्यमाणा कस्मिंश्चिदसंहते सत्येव भवितुमर्हति विमता संहतिरसंहत-
चेतनार्था विशिष्टसंहतित्वात्संप्रतिपन्नशयनादिसंहतिवद्यदर्थेयं संहतिस्तदस्ति
ब्रह्मेत्यर्थः ॥ ३१ ॥

---

१ (क. ख.) °सुखं सं°। २ (ङ.) °यास्यात्म । ३ (ग. घ )°वाय्विन्द्रि°। ४ (ग. घ. च.) °वि । वाय्विन्द्रि°। ५ (ग. घ.) °नाशना°। ६ (ग. घ ) °श्चात्मश°।

अतः साक्षेपमाहेयं को ह्येवान्यादिति श्रुतिः ।
आकाशे परमे व्योम्नि ह्यानन्दो न भवेद्यदि ॥३२॥

उक्तेऽर्थे वाक्यद्वयमवतारयति । अत इति । संहतेरसंहतार्थत्वस्यानुमानसि-द्धत्वादिति यावत् । सप्तम्यन्तं पदं छित्वा श्रुतिं योजयति । आकाश इति । यदि हृदयावच्छिन्ने सर्वदोषरहिते व्योम्नि भूताकाशरूपे समस्तबुद्धिवृत्तिसाक्षि-भूतो निरतिशयसुखात्मकः प्रत्यगात्मा न भवेत्तदा प्राणापानादिसंहतिद्वारा चेष्टा न सिध्येदित्यर्थः । अथवा प्रथमान्तमाकाशपदमानन्दपदसमानाधिकरणं तत्र-श्चाऽऽकाशाभिधानः परमानन्दः परमात्मस्वभावो यदि न स्यात्तदा प्राणादिसंह-तिद्वारा प्रवृत्तिरनुपपन्नेत्यर्थः ॥ ३२ ॥

आब्रह्मस्तम्बलोकेऽस्मिन्पुण्यकर्मानुरूपतः ।
आनन्दः परमो यस्मादानन्दयति नः सदा ॥३३॥

एष ह्येवानन्दयातीत्यस्यार्थमाह । आब्रह्मेति । सातिशयस्य लौकिकानन्दस्य निरतिशयब्रह्मानन्दव्यतिरेकेणायोगात्तेन भवितव्यमित्यर्थः ॥ ३३ ॥

सोऽयं लौकिक आनन्दो निघ्नां साधनसंपदा ।
यत्र प्रपद्यते भूम्नि सोऽस्यानन्दः परो रसः ॥३४॥

तदेव प्रपञ्चयति । सोऽयमिति । साधनसंपदेत्यत्र लब्धात्मकः सन्नित्यध्या-हरणीयम् ॥ ३४ ॥

अस्तित्वे हेतवः सम्यग्ब्रह्मणोऽभिहिता यतः ।
उताविद्वानिति प्रश्नः श्रुत्याऽऽविष्क्रियतेऽधुना ॥३५॥

यदाहीत्यनन्तरवाक्यस्य संगतिं वक्तुं वृत्तं कीर्तयति । अस्तित्व इति । सोऽकामयतेत्यारभ्यातीतेन ग्रन्थेन ब्रह्मणोऽस्तित्वे यतो बाधविधुरा हेतवो दर्शितास्ततोऽस्ति नास्तीतिप्रश्नस्योत्तरं सिद्धमित्यर्थः । परिशिष्टप्रश्नद्वयनिर्ण-यार्थत्वेनोत्तरग्रन्थमवतारयति । उतेति ॥ ३५ ॥

---

१ ( ग. घ. ) °सिद्धेरय° । २ ( ग. घ. ) °देवं प्र° ।

विद्वानेवैति तद्ब्रह्म ह्यभयं भयहेतु यत् ।
तमोमात्राव॑रुद्धत्वात्तत्प्राप्तेर्नान्यदस्ति हि ॥ ३६ ॥

तत्र विद्वानेव तद्ब्रह्म प्राप्नोतीत्यैस्यार्थस्य समर्थनार्थं यदा हीत्याद्य सोऽ-
भयं गतो भवतीत्येतदन्तं वाक्यमित्याह । विद्वानेवैति । विद्वानेव ब्रह्म प्राप्नोतीत्यत्र
हेतुमाह । तमोमात्रेति । ब्रह्मप्राप्तेस्तमोमात्रव्यवहितत्वमसिद्धं देशकालादेरपि
तद्व्यवधानत्वादित्याशङ्क्याऽऽह । नान्यदिति ॥ ३६ ॥

व्यवधानं हि यद्यस्मात्तन्मोहैकहेतुकम् ।
यस्मात्तस्मादविद्यैव मोक्षप्राप्तेर्व्यवधिर्भवेत् ॥३७॥

अविद्यातिरिक्तं मोक्षव्यवधानं नास्तीत्येतदुपपादयति । व्यवधानं हीति ॥३७॥

अविद्यासाक्ष्यपि प्रत्यक्सदाऽनस्तमितोदितः ।
अविद्यया व्यवहितस्तद्बलेनैव तद्वचः ॥ ३८ ॥

आत्मनः स्वयंप्रकाशस्याविद्यासाक्षकस्य कथमविद्याऽपि व्यवधानं स्यादि-
त्याशङ्क्याऽऽह । अविद्येति । आत्मनो यथोक्तलक्षणस्यैवाविद्याव्यवहितत्वम-
विद्याबलादेवोच्यते । तस्मादात्मविद्यावशाद्ब्रह्मात्मप्राप्तिर्विदुष एवेत्यर्थः ॥३८॥

विद्वत्ताव्यतिरेकेण यदि तत्प्राप्तिरुच्यते ।
चोद्यमेतत्तदा युक्तं न त्वेवं सति युक्तिमत् ॥ ३९ ॥

ब्रह्मणः सर्वस्वरूपत्वादविदुषोऽपि तत्प्राप्तिः स्यादित्याशङ्क्य किं संसार-
हेत्वविद्यानिरासेन ब्रह्मप्राप्तिरविदुषोऽपि स्यादित्युच्यते किं वा ब्रह्मणः स्वरू-
पत्वेन प्राप्तिरविदुषोऽपि समानेति विकल्प्याद्यं दूषयति । विद्वत्तेति । ज्ञानस्य
ब्रह्मप्राप्त्यकारणत्वे स्यादविदुषोऽपि ब्रह्मप्राप्तिरिति चोद्यते । ज्ञानादनर्थहेत्व-
ज्ञाननिवृत्तिद्वारा ब्रह्मप्राप्तिरित्यङ्गीकारे तु नाविदुषो ब्रह्मप्राप्तिचोद्यमुल्लसती-
त्यर्थः ॥ ३९ ॥

या तु साधारणी प्राप्तिरात्मत्वाद्ब्रह्मणः स्वतः ।
विदुषोऽविदुषो वाऽसावस्माभिर्न नियम्यते ॥ ४० ॥

द्वितीयमङ्गीकरोति । या त्विति ॥ ४० ॥

---

१ (ग. घ.) °वबद्ध°। २ (ग. घ.) °त्यस्य°। ३ (ग. घ.) °क्षाप्त्यै व्यव°।
४ (ग. घ.) °काशावि°। ५ (ङ.) °चोद्येव । ज्ञा°।

अतोऽविद्यानिषेधेन सर्वदाऽवाप्तिरूपिणः ।
प्राप्तिः स्यादात्महेतुत्वादिति पूर्वमवादिषम् ॥ ४१ ॥

ज्ञानादनर्थहेत्वज्ञाननिराकरणेन ब्रह्मप्राप्तिर्विद्वदसाधारणीत्यत्र ब्रह्मविदाप्नोति परमितिवाक्यं प्रमाणयति । अत इति । तत्त्वज्ञानं पञ्चम्या परामृश्यते । आत्महेतुत्वादिति । ब्रह्मणः सर्वप्रत्यगात्मत्वाद्धेतोरित्यर्थः ॥ ४१ ॥

अतः परीक्ष्यते श्रुत्या तदिदानीं प्रयत्नतः ।
विद्वानेवैति नाविद्वान्यदा हीत्येवमाद्यया ॥ ४२ ॥

यतो विदुष एवाविद्यानिवृत्त्या ब्रह्मप्राप्तिर्नाविदुषः संभवत्यतस्तदेव वस्तुनिरूपणद्वारेण प्रतिपाद्यते समनन्तरवाक्येनेत्युत्तरवाक्यमादत्ते । अत इति ॥४२॥

विषयानुपातिनी या तु ह्यशेषकरणाश्रया ।
लौकिकत्वात्पदार्थस्य दृशिरत्राभिधीयते ॥ ४३ ॥

तस्मिन्वाक्ये पदानि व्याकुर्वन्नदृश्यपदार्थस्य दृश्याधीनत्वात्तस्य च दृशिनिबन्धनत्वाद्दृशिशब्दार्थमाह । विषयेति । अदृश्य इत्यत्र दृशिशब्देन विषयविषयं चक्षुःश्रोत्रादिजन्यं सर्वं ज्ञानमुच्यते । पदार्थस्य लौकिकत्वेनापूर्वत्वायोगादित्यर्थः ॥ ४३ ॥

विशेषवद्भवेद्दृश्यं तद्धि दर्शनमर्हति ।
नित्या दृष्टिरभावो वा नैव दर्शनमर्हति ॥ ४४ ॥

दृश्यशब्दार्थमाह । विशेषवदिति । सविशेषस्य वस्तुनः सर्वदर्शनयोग्यत्वादित्युक्तेऽर्थे हेतुमाह । तद्धीति । न कूटस्थबोधो नापि शून्यं दृश्यं तयोः साधारणदर्शनयोग्यत्वाभावादिति व्यावर्त्यमंशं दर्शयति । नित्येति । अदृश्यं यथोक्तदृश्यरहितं तस्मिन्ब्रह्मणीत्यदृश्यशब्दार्थः ॥ ४४ ॥

दृश्यान्वयि हि यद्वस्तु तदात्म्यमिति भण्यते ।
स्वतो ह्यस्यात्मदारिद्र्यादर्हार्थे लभते च यत् ॥४५॥

आत्मशब्दार्थं कथयति । दृश्येति । सामान्यमात्म्यशब्दवाच्यं तस्य व्यक्तिपरतन्त्रत्वात्तदतिरेकेण स्वरूपाभावादात्मानमर्हतीत्यात्म्यमिति यत्प्रत्ययार्थमाह । स्वतो हीति । अनात्म्यमिति निःसामान्यं ब्रह्म तस्मिन्नित्यर्थः ॥४५॥

---

१ (ग घ) °वाप्तरू°। २ (ग घ) न्यत। ३ (ग घ) °र्शनायो°। ४ (ग. घ) °त्वादि°। ५ (ग ङ) °स्तु तादा°। ६ (ग) °ह्यस्वात्म°। ७ (ङ) °स्यात्मादा°। ८ (ग घ. च) °क्ते स्व°।

स्याद्वा जाग्रदवस्थेयं दृश्यत्वेन प्रसिद्धितः ।
कोशत्रयमिहात्म्यं स्यादात्मार्थत्वसमन्वयात् ॥४६॥

दृश्यशब्देन पञ्चीकृतपञ्चमहाभूतात्मको विराडात्मा जागरितशब्दवाच्योऽन्नमयकोशो गृह्यते ततश्च समस्तमेव स्थूलं कार्यं दृश्यशब्दवाच्यमितिपक्षान्तरमाह । स्याद्वेति । आत्म्यशब्देनापि प्राणमयमनोमयविज्ञानमयाख्यं सूत्रमपञ्चीकृतपञ्चमहाभूतात्मकं विवक्ष्यते । तथा च सर्वमेव सूक्ष्मं कार्यमात्म्यशब्दवाच्यं तस्याऽऽत्मशेषत्वादित्याह । कोशत्रयमिति ॥ ४६ ॥

पञ्चमोऽत्र निरुक्तः स्यात्पारिशेष्यात्फलात्मकः ।
अत्यानन्दमयं ब्रह्म त्वनिरुक्तं परं पदम् ॥ ४७ ॥

आनन्दमयकोशः शरीरद्वयावच्छिन्नो ज्ञानकर्मफलात्मकश्चैतन्याभासो जीवोऽत्र पारिशेष्यान्निरुक्तशब्दवाच्यो भवतीत्याह । पञ्चम इति । कार्यकारणविनिर्मुक्तं त्वंपदलक्ष्यं चिन्मात्रमनिरुक्तशब्दवाच्यमित्याह । अत्यानन्देति । तस्मिन्ननिरुक्ते त्वंपदलक्ष्यात्मके चिन्मात्रे ब्रह्मणीत्यर्थः ॥ ४७ ॥

निलीयते जगद्यस्मिन्निलीनं जायते यतः ।
निलयं तत्परं ब्रूमः कोशपञ्चककारणम् ॥ ४८ ॥

अज्ञातं ब्रह्म सर्वस्यापि जगतः कारणं निलयनशब्दवाच्यमित्याह । निलीयत इति । अनिलयनशब्देन तत्पदलक्ष्यं नित्यशुद्धबुद्धमुक्तस्वभावं लक्ष्यं त्वंपदार्थस्वरूपभूतं ब्रह्मोच्यते । तस्मिन्ननिरुक्तेऽनिलयने ब्रह्मणीतिसामानाधिकरण्यात्तत्त्वमर्थयोरैक्यं लक्ष्ययोर्विवक्षितमित्यर्थः ॥ ४८ ॥

सच्चत्यच्चादि वाऽपेक्ष्य निषेधोऽयमिहोच्यते ।
प्राप्तिर्ह्यभवदित्युक्ता चारु प्राप्तनिषेधनम् ॥ ४९ ॥

अदृश्यादिवाक्यस्यार्थान्तरमाह । सच्चेति । सच्च त्यच्चाभवदित्यादिना ब्रह्मणि साविद्यस्य जगतः सर्वस्य प्राप्तिरुच्यते । तस्य च प्राप्तस्यादृश्यादिवाक्ये निषेधः क्रियते । वाक्यस्य निषेधरूपत्वात्प्राप्तनिषेधस्य च युक्तत्वादित्यर्थः॥४९॥

---

१ (ग. घ.) °तम°। २ (ग.घ.) °त्मविशे°। ३ (ग. घ.) °निलीयन्तं वयं ब्रू°। ४ (ङ.) °यं तं वयं ब्रू°। ५ (क. ग. घ.) °यश°। ६ (क. ग. घ.) °यश°। ७ (क. ख.) °त्माग्निनि°।

मूर्तामूर्तौ हि राशी द्वौ सत्त्वत्यच्चादिनोदितौ ।
श्रुत्यन्तरेण संगानात्तयोरेवास्त्वपह्नुतिः ॥ ५० ॥

निषेधपक्षे श्रुत्यन्तरेण नेति नेतीत्यादिना सदेकवाक्यत्वसिद्धिरिति लाभान्तरमाह । मूर्तेति ॥ ५० ॥

अस्मिन्पक्षे तु निलयो वासनानिलयो भवेद् ।
एवं च नेति नेतीति साक्षात्स्याद्ब्रह्मदर्शनम् ॥ ५१ ॥

निषेधपक्षे च मूलकारणं निलयनशब्देन न गृह्यते किंतु वासनानां निलयत्वादन्तःकरणं सवासनं निलयनशब्दवाच्यं ततश्च सवासनमन्तःकरणमनिलयनशब्देन निषिध्यते । अदृश्यादिपदैरेव मूर्तामूर्तप्रतिषेधेन कारणस्यापि निषिद्धत्वान्निराकाङ्क्षब्रह्मप्रतिपत्तिसिद्धिरित्यभिप्रेत्याऽऽह । अस्मिन्निति । सर्वप्रतिषेधानामुक्तन्यायेन प्रतिपिद्धत्वे सति वाक्यार्थज्ञानं निराकाङ्क्षं सिध्यतीतिफलितमाह । एवं चेति ॥ ५१ ॥

भावाभावात्मिका बुद्धिर्यत आत्मापचारिणी ।
भावाभावनिषेधेन प्रतीचि स्थाप्यते ततः ॥ ५२ ॥

ननु प्रत्यगात्मप्रतिपत्त्यैव पुरुषार्थपरिसमाप्तेः प्रवादात्कार्यकारणप्रपञ्चप्रतिषेधो वृथेत्याशङ्क्यानात्मप्रपञ्चस्याऽऽत्मप्यनर्थहेतुत्वान्निषेधेन ततो व्यावृत्त्याऽऽत्मन्येव बुद्धिः स्थिरीकर्तव्या ततोऽनात्मनिषेधोऽर्थवानित्याह । भावाभावेति । प्रत्यगात्मन्यन्तःकरणे प्रविष्टे सति तस्य ब्रह्मात्वबुद्ध्या पुरुषार्थपरिसमाप्तिरित्यर्थः ॥ ५२ ॥

दृश्यादिप्रतिषेधोक्त्या प्रतीचि ब्रह्म बोध्यते ।
न तदन्यत्तदन्यस्य परमार्थात्मता कुतः ॥ ५३ ॥

अदृश्यादिवाक्यस्य निषेधपरत्वे प्रतीयमाने कुतो वस्तुपरत्वमित्याशङ्क्याऽऽत्मब्रह्मणोरैक्यं स्वतः सिद्धं निषेधमुखेन बोध्यतेऽतो निषेधस्य वस्तुसिद्धौ द्वारत्वान्न निषेधपरं वाक्यं किंतु वस्तुपरमित्याह । दृश्यादीति । प्रतीचि ब्रह्म बोध्यमिति निर्देशादात्मनोऽर्थान्तरं ब्रह्मेत्याशङ्क्याऽऽह । न तदिति । तद्धि ब्रह्म नाऽऽत्मनोऽन्यद्भवितुमलमात्मनोऽन्यस्य मिथ्यात्वाद्ब्रह्मणोऽप्यन्यत्वे तत्प्रसङ्गाद्ब्रह्मात्मनोरैक्यमेवेत्यर्थः ॥ ५३ ॥

---

१ (ग. घ.) °यश° । २ (ग. घ. च.) °यश° । ३ (क. ख.) °यश° । ४ (ग. घ.) °ङ्क्षत्वप्र° । ५ (ग. घ.) °र्वेन प्र° । ६ (ख.) °आत्मोप° । ७ (ग. घ. च.) °व्यावृत्त्यात्म° । ८ (घ.) °वे ततो° ।

न नञर्थो विकल्पो वा परमार्थमकल्पितम् ।
असंप्रविश्य संसिद्धिं लभते क्वचिदन्यतः ॥ ५४ ॥

आत्मनोऽन्यस्य नास्ति परमार्थत्वमितिकल्पितत्वाभिधानात्कल्पिताक-
ल्पितयोर्भेदः स्यादित्याशङ्क्याऽऽह । नेत्यादिना । शून्यस्य कल्पितस्य वा
कूटस्थानुभवादन्यत्र सत्त्वोपलब्ध्योरसिद्धेः सच्चिदेकतानं कूटस्थं तत्त्वमास्थेयमि-
त्यर्थः ॥ ५४ ॥

दृश्यादिगुणहीनस्य स्वत आत्मत्वकारणात् ।
वेत्ति विन्दत इत्यस्मादैकार्थ्यादुपसंहृतिः ॥ ५५ ॥

ब्रह्मविदाप्नोति परमिति विदिनोपक्रम्याभयं प्रतिष्ठां विन्दत इति विन्दतिनोप-
संहारे श्रुतेरभिप्रायमाह । दृश्यादीति । अदृश्यादिवाक्योक्तस्य ब्रह्मणः स्वारस्ये-
नाऽऽत्मस्वरूपत्वात्तस्य वेदनव्यतिरेकेण लाभायोगाद्वेत्ति विन्दत इत्यनयोरेका-
र्थत्वाद्वेत्तीत्युपक्रम्य विन्दत इत्युपसंहारे न कश्चिद्दोषोऽस्तीत्यर्थः ॥ ५५ ॥

दृश्यादिगुणहीनेऽस्मिन्निरविद्यो यदाऽयम् ।
साक्षाद्वेत्ति तदैवायमभयं विन्दते परम् ॥ ५६ ॥

अभयं विन्दत इत्यस्यार्थमाह । दृश्यादीति । निर्विशेषे ब्रह्मणि प्रकृते यदा
साक्षादहमस्मीतिप्रत्यगभेदमवगच्छति तदैव विद्वान्निरविद्यः सन्नभयं कैवल्यं
लब्ध्वा कृतकृत्यो भवतीत्यर्थः ॥ ५६ ॥

ब्रह्म पुच्छं प्रतिष्ठेति यदभाणि पुरा सकृत् ।
तेनैकवाक्यतार्थाय प्रतिष्ठामिति भण्यते ॥ ५७ ॥

प्रतिष्ठापदप्रयोगे ब्रह्मज्ञानफलं ब्रह्मैव नान्यदितिप्रदर्शनमभिसंहितमित्याह ।
ब्रह्मेति । ब्रह्मविद्याप्राप्तेरनन्तरं स विद्वानभयं ब्रह्म प्राप्य कृतकृत्यो निर्विण्णो भव-
तीत्यथ सोऽभयं गतो भवतीतिवाक्यमर्थाद्व्याख्यातमितिभावः ॥ ५७ ॥

अथाधुना यथा विद्वान्प्रेत्य नैति परं पदम् ।
व्याख्यायते तथा स्पष्टं यदा हीत्येवमाद्यया ॥ ५८ ॥

विद्वान्ब्रह्म प्राप्नोत्युत नेतिप्रश्ने प्राप्नोत्येव विद्वान्ब्रह्मेति निर्धारितम् । इदानी-
मविद्वानपि ब्रह्म प्राप्नोति न वेतिप्रश्नं प्रत्याह । अथेति ॥ ५८ ॥

---

१ (ग. घ.) °लब्धेर°। २ (ग. घ.) इत्येवयो°। ३ (ग.) °स्वयो°। ४ (क. ख.) °र्शनार्थम°। ५ (क. च.) °संहृत°। ६ (क. ख.) °वाक्यार्थो°।

सदा लब्धात्मकस्यापि यतोऽज्ञानमनाप्तिकृत् ।
अवाप्युच्चैरतः श्रुत्या विद्वानेतीति सादरम् ॥ ५९ ॥

ज्ञानस्य ब्रह्मप्राप्तिहेतुत्वाभिधानादज्ञस्य ब्रह्मप्राप्तिरयुक्तेत्येतदुपपादयति । सदेति ॥ ५९ ॥

यस्मादेव ततोऽविद्वाँल्लभते न तमीश्वरम् ।
अविद्याव्यवधानाद्धि लब्ध एव न लभ्यते ॥६०॥

विद्यावतो ब्रह्मलाभे सिद्धे फलितमाह । यस्मादिति । अविद्वान् लभते ब्रह्मेत्ययुक्तं तस्याऽऽत्मत्वेन सदा लब्धत्वादित्याशङ्क्याऽऽह । अविद्येति॥ ६० ॥

यदा ह्येवैष आत्मैको दृश्यत्वादिविवर्जितः ।
एतस्मिन्वर्तमानोऽपि वञ्चितोऽविद्ययैव हि ॥६१॥

यदा ह्येवैष एतस्मिन्नितिवाक्याक्षराण्यपेक्षितं पूरयन्योजयति । यदा ह्येवेति । ततश्च स्वरूपमप्राप्तमिव पश्यतीति शेषः ॥ ६१ ॥

हस्तप्राप्तमपि द्रव्यमप्राप्तमिव मन्यते ।
मोहादेवमनाप्तिः स्यादात्मनोऽपि ममाऽऽत्मनः ॥६२॥

आत्मत्वेन प्राप्तमेव ब्रह्म मोहव्यवहितत्वादप्राप्तवद्भवतीत्येतद्दृष्टान्तेन स्पष्टयति । हस्तेति । ममाऽऽत्मनोऽपि ब्रह्मण प्रत्यग्भूतस्य मोहादनाप्तिरितिसम्बन्धः ॥ ६२ ॥

अविद्यया तदोद्धृत्य रज्ज्वा रज्जुमिव स्वयम् ।
अहित्वेनाद्वयाद्बोधात्कुरुते कर्तृभोक्तृभिः ॥ ६३ ॥

एवमविद्यया वञ्चितत्वे किं स्यादित्याह । अविद्ययेति । यदायमात्मा प्रागुक्तेन न्यायेनाविद्यया वञ्चितो वर्तते तदा यथा रज्जुः स्वाविद्यया स्वात्मानमहित्वेन करोति तथाऽयमप्यात्मा स्वाविद्यया स्वमात्मानमद्वयाद्बोधाद्ब्रह्मणः सकाशात्पृथक्कृत्य कर्तृभोक्तृस्वरूपेण करोतीत्यर्थः ॥ ६३ ॥

---

१ (ग घ) °स्य च न्न° । २ (ग घ) रज्ज्वा र° । ३ (क ख) °यमात्मा । ४ (क ख) °या स्वात्मा° । ५ (ङ च) °कृ°।

अरं छिद्रं भिदाऽन्यत्वं वेद्यवेत्तृत्वलक्षणम् ।
यस्मादुरुकुरुते मोहादात्मनो ब्रह्मणः स्वतः ॥६४॥

उदरमन्तरं कुरुत इत्यस्यार्थमाह । अरमिति । यदाऽऽत्मन्यविद्यया कर्तृ-
त्वादिकमारोप्य पश्यति तदा ब्रह्मात्मनोर्भेदं यस्मान्मन्यते तस्मान्मिथ्या ज्ञानी
भवतीत्यर्थः ॥ ६४ ॥

अन्योऽसावीश्वरो मत्तस्तस्माच्चाहमनीश्वरः ।
इति च्छिद्रयतोऽच्छिद्रं छिद्रेऽनर्थो भवेद्भयम् ॥६५॥

मिथ्याज्ञानफलं कथयन्नथ तस्येत्यादिवाक्यस्यार्थमाह ।अन्योऽसाविति॥६५॥

निर्भयोऽपि स्वतो विद्वानेकं सन्तमनेकधा ।
प्रकल्प्याविद्ययाऽऽत्मानं तमेव भयमाप्नुयात् ॥६६॥

आत्मब्रह्मणोर्भेदं पश्यतः संसारभयप्राप्तिरित्येतदेव प्रपञ्चयति । निर्भयोऽ-
पीति । विभागेन दृष्टमात्मानं तच्छब्देन परामृशति ॥ ६६ ॥

भयहेतोर्द्वितीयस्य हिशब्देन परिग्रहात् ।
द्वितीयाद्वै भयं हीति श्रुतिरुच्चैरतोऽन्वशात् ॥६७॥

द्वितीयाद्वै भयं भवतीत्यत्र हिशब्देन द्योतितमर्थं कथयति । भयहेतोरिति । द्वितीयद-
र्शिनो भयमवश्यं भावीत्येतदिहोच्यते तदेव श्रुत्यन्तरेऽपि दर्शितमित्याह ।
द्वितीयादिति । यतो द्वितीयं भयकारणमतः श्रुतिरेवमनुशास्तीत्यर्थः ॥ ६७ ॥

ईशितव्याद्विभक्तो यद्यस्मादीशो भयंकरः ।
इति कल्पयतस्तस्मादभयं जायते भयम् ॥ ६८ ॥

तत्त्वेवेत्यादिवाक्यमवतारयितुं भूमिकां करोति । ईशितव्यादिति । यस्मा-
न्मद्विच्छेदादीशितव्याज्जीवाद्विभक्तत्वेन दृष्टः सन्नीश्वरो विभागदर्शिनो भयं-
करो भवति तस्मादभयमेव ब्रह्म विभागेन परिकल्प्य विभक्तं पश्यतस्तदेव भयं
जायते भेददर्शनस्य भयकारणत्वादित्यर्थः ॥ ६८ ॥

---

१ ( क. ग. ) °वेदितृल°। २ ( क. ख. ) °च्छिद्रं य°। ३ ( ङ. ) °श्यं भव-
तीत्ये°। ( च. )°श्यं भवत्ये°। ४ ( क. ख. ) °देवच्छ्रुत्य°। ५ ( ग. घ. ) °रे द°।
६ ( क. ख. ) °तीये भ°। ७ ( क. ग. घ. ) °क्तो मद्य°। ८ ( ङ. ) °न्मच्छब्दि-
तादी°। ९ ( च. ) °गेनि ।

अहो बलमविद्याया अतिशेते न कश्चन ।
अग्न्यादिभयहेतोर्या ब्रह्मणोऽपि भयंकरी ॥ ६९ ॥

ब्रह्मैवाभयमात्मा चेत्कुतस्तस्य भयमित्याशङ्क्याविद्यासामर्थ्यादित्याह । अहो इति ॥ ६९ ॥

निर्भयो भयकृद्देव ईश्वराणामपीश्वरः ।
भयं तस्यापि जनयेन्नाज्ञानस्यास्त्यगोचरः ॥ ७० ॥

अविद्यासामर्थ्यं प्रपञ्चयति । निर्भय इति ॥ ७० ॥

यज्ज्ञात्वा विन्दते विद्वानभयं हीत्यवादिपम् ।
तत्त्वेवाभयकृद्ब्रह्म स्यान्मोहादात्मनो भयम् ॥ ७१ ॥

उक्तेऽर्थे तत्त्वेव भयमितिवाक्यभागं विभजते । यज्ज्ञात्वेति ॥ ७१ ॥

निषिद्धदृश्यस्त्वाद्येकमभयं मोहनिह्नवात् ।
यत्तस्यैव भयं तत्स्यादविद्यावशवर्तिनः ॥ ७२ ॥

तदेव स्पष्टयति । निषिद्धेति ॥ ७२ ॥

अपि वालाग्रमात्रेण विदुषः प्रत्यगात्मनः ।
भिन्नं ब्रह्मेतिसंमोहादात्मैवास्य भयं भवेत् ।
व्याख्यानं वा पुरोक्तस्य च्छिद्रस्य क्रियतेऽनया॥७३॥

विदुषो मन्वानस्येतिभागं योजयति । अपीति । प्रत्यगात्मनः सकाशादीपन्मात्रेणापि भिन्नं ब्रह्मेति पश्यतः संमोहवशवर्तिनो मोहादात्मैव भयं भवतीत्यर्थः । अविद्याया नास्ति दुष्करमित्येवं परत्वेन तत्त्वेवेत्यादिवाक्यं व्याख्याय व्याख्यानान्तरमाह । व्याख्यानं वेति ॥ ७३ ॥

अमन्वानस्य तद्ब्रह्म विदुषोऽपि भयंकरम् ॥ ७४ ॥
वेद्यवेत्तृत्वशून्यत्वाद्विद्वत्ताऽपि तमोमयी ।
रजतत्वादिवच्छुक्तावमन्वानो भवेदतः ॥ ७५ ॥

व्याख्यानप्रकारमेव प्रकटयति । अमन्वानस्येति । यथा शुक्त्यादौ रजतत्वा-
दि तमोमयं वस्तुतो नास्ति तथा ब्रह्मण्यात्मनि विद्वत्ताऽपि तमोमयी वस्तुतो
न विद्यते ब्रह्मात्मनो वेद्यवेत्तृत्वविभागशून्यत्वादतश्चावेद्यं ब्रह्मात्मत्वेनामन्वानो
यो भवेत्तस्यैकत्वेन ब्रह्मामन्वानस्यावेद्यमेव तद्वेद्यतया भिन्नत्वेन पश्यतोऽपि
भयंकरमापद्यते । अन्यथादर्शित्वादित्यर्थः ॥ ७४ ॥ ७५ ॥

यस्यामतं तस्य मतं मतं यस्य न वेद सः ।
विदिताविदिताभ्यां तदन्यदेवेति हि श्रुतिः ॥ ७६ ॥

वेद्यवेत्तृत्वशून्यं ब्रह्मेत्यत्र श्रुत्यन्तरमुदाहरति । यस्येति ॥ ७६ ॥

अन्यदेव हि तद्वेद्यादवेद्यादन्यदेव तत् ।
वेद्यवेत्तृद्वयाच्चान्यदितिश्रुत्यनुशासनम् ॥ ७७ ॥

उदाहृतश्रुत्यन्तरस्य विवक्षितमर्थमाह । अन्यदेवेति ॥ ७७ ॥

वेद्यावेद्यात्मता यस्माच्छब्दाद्यर्थानुपातिनी ।
वेद्यवेत्तृत्वमप्येवमन्यथा तदसंगतेः ॥ ७८ ॥

ब्रह्मात्मनो वेद्यत्वमवेद्यत्वं वेत्तृत्वं च नास्तीत्यत्र श्रुतिमुदाहृत्य तत्रैव श्रुतिसि-
द्धेऽर्थे युक्तिं समुच्चिनोति । वेद्येति । ज्ञानोदये वेद्यरूपता जडेषु शब्दार्थेष्वनुप्रवि-
श्यवर्तते ज्ञानानुदये च तदविषयत्वमवेद्यात्मत्वं तेष्वेव तिष्ठति । एवमेव वेद्ये-
ष्वर्थेषु वेत्तृत्वं ज्ञानकर्तृत्वं च साभासान्तःकरणस्य परिणामवतो जडस्यैव
युज्यते यस्मादात्मनः संविदेकतानस्याजडस्य वेद्यत्वादि नोपपद्यते तस्मात्तस्य
कूटस्थदृष्टिरूपस्य सिद्धमविषयत्वमित्यर्थः । यद्यात्मनो वेद्यत्वाद्यभ्युपगम्येत
तदा तस्य कूटस्थाद्वयदृष्टिब्रह्मत्वं शास्त्रसिद्धमसंबद्धमापद्येतातो न तस्य वेद्यत्वा-
दीत्युक्तामेव युक्तिं व्यनक्ति । अन्यथेति ॥ ७८ ॥

---

१ (ग. घ.) °नोवेंद्य°। २ (ङ.) °वेदितृत्व°। ३ (ग. घ.) °त्वेन म°। ४ (ग. घ.) °ता या स्यात्सा शब्दार्थां°। ५ (ग. घ.) °त्मनोवेंद्य°। ६ (क. ख.) °त्वं च। ७ (क. ख. च.) °ब्दाद्यर्थें°। ८ (ग. घ.) °मविद्या°। ९ (ग. घ.) °त्मकं वे°।

व्युत्थाप्य वेद्याद्विद्याया वेत्तुश्चाज्ञानकल्पितात् ।
तदन्येभ्यश्च जानीयादहं ब्रह्मेतिवाक्यतः ॥ ७९ ॥

आत्मनः सर्वविशेषविलक्षणत्वे कथं प्रतिपत्तव्यतेत्याशङ्क्याऽऽह । व्युत्थाप्येति । वेद्यं विद्यावेत्तेति त्रयमवेद्यमविद्याऽवेत्तेति च त्रयं तस्मादेतस्मादज्ञानकल्पितादशेषात्पृथक्कृत्याऽऽत्मानं तत्त्वमस्यादिवाक्यादहं ब्रह्मास्मीति विद्याद्भेदेन तु सविशेषतया दृष्टं ब्रह्म मयोवहं भवतीत्यर्थः ॥७९॥ इति सप्तमः खण्डः ॥७॥

यथोक्तबोधविरहादीश्वराणामपीश्वराः ।
प्रतीचो ब्रह्मणो भीताः स्वकर्माणि प्रकुर्वते ॥ ८० ॥

ब्राह्मणोक्तेऽर्थे तदप्येष श्लोको भवतीति मन्त्रमवतार्य भीषाऽस्मादित्यादिश्लोकाक्षराणि व्याचष्टे । यथोक्तेति ॥ ८० ॥

वातादयो महावीर्याः स्वतन्त्रा बाहुशालिनः ।
तेऽपि भीताः प्रवर्तन्ते ब्रह्मणोऽपि महत्तमाः ॥ ८१ ॥

उक्तमेव प्रपञ्चयति । वातादय इति ॥ ८१ ॥

यस्माद्ब्रह्मण आनन्दाद्भीता वातादयोऽवशाः ।
स्वकर्मसु प्रवर्तन्ते भृत्याः स्वामिभयादिव ॥
तस्याऽऽनन्दस्य मीमांसा विचारः क्रियतेऽधुना ॥८२॥

सैषाऽऽनन्दस्य मीमांसा भवतीतिवाक्यं व्याचष्टे । यस्मादिति ॥ ८२ ॥

उत्कर्षेतरहीनोऽसौ य आनन्दोऽधिगम्यते ॥ ८३ ॥
दृष्टः सातिशयस्तावदानन्दः कर्महेतुकः ।
आब्रह्मनरपर्यन्ते लोकेऽस्माभिः प्रमाणतः ॥ ८४ ॥

यो विचारेणाऽऽनन्दोऽधिगम्यतेऽसावुत्कर्षापकर्षरहितः सर्वविशेषवर्जितो निरतिशयो भवतीतिविचारसिद्धानन्दस्य स्वरूपं कथयति । उत्कर्षेति ॥८३॥

ब्रह्मानन्दस्य निरतिशयत्वे कथं प्राणिनिष्ठानन्दस्य सातिशयत्वप्रतीतिरित्याशङ्क्य कर्मफलभूतानन्दस्य सातिशयत्वं प्रतिभातीत्याह । दृष्ट इति ॥८४॥

१ (क. ख.) °पणवि°। २ (ङ.) °याय भ°। ३ (ङ.) °दितिश्लो°। ४ (ङ.) °श्रा बहु°। ५ (ग. घ.) °न्दस्व°। ६ (ग. घ. ट. च.) °णिष्वान°।

उत्कृष्यमाणो यत्रायं परां निष्ठां प्रपद्यते ।
अनापन्नादिमध्यान्तं तद्ब्रह्मेत्यवधारयेत् ॥ ८५ ॥

ब्रह्मादिषु मनुष्यपर्यन्तेषु सातिशयश्चेदानन्दो दृश्यते तर्हि ब्रह्मानन्दोऽपि सातिशयः स्यादानन्दत्वाविशेषादित्याशङ्क्य निरतिशयानन्दं ब्रह्माहमस्मीति-निर्धारणार्थं ब्रह्मानन्दस्य निरतिशयत्वमाश्रयितव्यमित्याह । उत्कृष्यमाण इति ॥ ८५ ॥

ब्रह्मादिनरपर्यन्तं पुण्यकर्मानुरूपतः ।
उपजीवति लोकोऽयं यस्याऽऽनन्दस्य विप्रुषम् ॥८६॥

तर्हि सातिशयानन्दो निरतिशयानन्दश्चेत्यानन्दभेदप्रसक्तिरित्याशङ्क्यैतस्यैवाऽऽनन्दस्यान्यानि भूतानि मात्रामुपजीवन्तीति श्रुत्या परिहरति । ब्रह्मादीति । स एव ब्रह्मानन्दः शुभकर्मजनितबुद्धिवृत्त्यवच्छिन्नः सातिशयोऽनवच्छिन्नो निरतिशय इति न भेदप्रसक्तिरित्यर्थः ॥ ८६ ॥

उत्तरोत्तरवृद्ध्यैवं मनुष्यादधि तं वयम् ।
प्रतिपद्यामहे साक्षादानन्दं स्वात्मनि स्थितम् ॥८७॥

कल्पितेन सातिशयानन्देन निरतिशयानन्दस्याकल्पितस्य प्रतिपत्तिरित्युपायोपेयभावमुपन्यस्यति । उत्तरोत्तरेति । वक्ष्यमाणेन प्रकारेण मनुष्यादारभ्योपरिष्टाद्ब्रह्मपर्यन्तमुत्तरोत्तरभूमौ शतगुणाभिवृद्धिद्वारेण निरतिशयानन्दं स्वात्मनि पर्यवसितं स्वरूपत्वेनापरोक्षतया प्रतिपद्यामहे तेन विचारद्वारा निरतिशयानन्दप्रत्यग्भूतब्रह्मप्रतिपत्तिरित्यर्थः ॥ ८७ ॥

विषयेन्द्रियसंबन्धसमुत्थो वा भवेदयम् ।
लौकिकानन्दवत्स्याद्वा सर्वसाधननिस्पृहः ॥ ८८ ॥

विचारस्वरूपं दर्शयति । विषयेति ॥ ८८ ॥

तत्र लौकिक आनन्दो बाह्याध्यात्मिकसाधनः ।
संपन्निमित्तो यो दृष्टः सैषेति स इहोच्यते ॥ ८९ ॥

सैषाऽऽनन्दस्येत्यत्राऽऽनन्दशब्दार्थमाह । तत्रेति ॥ ८९ ॥

---

१ ( ख. ङ. ) विप्रुष° । २ ( ग. घ. ङ. च. ) °शयमान° । ३ ( क. ख. ) °तं सम्य° ।

उत्कृष्यमाणेनानेन ह्यस्मद्गोचरवर्तिना ।
असाधनमसाध्यं तमानन्दं व्याचचक्ष्महे ॥ ९० ॥

किमिति कर्मफलं सुखमानन्दशब्देनोच्यते निरतिशयानन्दमखादमस्मीति-प्रतिपत्तेरेवाभिप्रेतत्वादित्याशङ्क्याऽऽह । उत्कृष्यमाणेनेति ॥ ९० ॥

निष्ठां सातिशयं यस्मात्स्वतोऽनतिशयात्मनि ।
गच्छदीक्षामहे यस्मादेवमानन्द ईक्ष्यताम् ॥९१॥

सातिशयानन्देन निरतिशयानन्दस्य प्रतिपत्तिमेव दृष्टान्तेन स्पष्टयति । निष्ठामिति । सातिशयं परिमाणादीतिशेषः । द्वितीयो यस्माच्छब्दस्तस्मादि-त्यस्मिन्नर्थे द्रष्टव्यः ॥ ९१ ॥

येयं सातिशया संख्या संख्येयार्थावसायिनी ।
यथैवमस्मदानन्दः स्यात्परानन्दनिष्ठितः ॥ ९२ ॥

उक्तमेव दृष्टान्तदार्ष्टान्तिकरूपमर्थं समर्थयते । येयमिति ॥ ९२ ॥

आविष्करिष्यन्त्याहात इममर्थं श्रुतिः स्वयम् ।
बहिष्प्रवणदृष्टीनां स्वतोऽसामर्थ्यदर्शनात् ॥ ९३ ॥

उक्तस्यैव निरतिशयानन्दस्य प्रतिपादकत्वेन युवा स्यादित्यादिश्रुतिमवता-रयति । आविष्करिष्यन्तीति । यतः सातिशयानन्देनाऽऽनन्दो निरतिशयो गम्यतेऽतश्चेममेव निरतिशयानन्दाख्यमर्थं सातिशयानन्दद्वारेण प्रकटीकरिष्य-न्ती श्रुतिर्युवा स्यादित्याद्याहेतियोजना । ननु निरतिशयानन्दस्य स्वप्रकाश-त्वपगात्मभूतस्य स्वारस्येन समधिगतिसंभवादनर्थिका सातिशयानन्दोक्तिरिति चेत्तत्राह । बहिरिति ॥ ९३ ॥

युवा प्रथमवयाः स्याद्यूनः साधुयुवेतिकिम् ।
पञ्चविंशाब्दिकः साधुरिति साधुयुवोच्यते ॥ ९४ ॥

एवं तात्पर्यमुक्त्वा युवशब्दार्थमाह । युवेति । साधुयुवेत्यत्र यूनः साधुरिति विशेषणं किमर्थमिति पृच्छति । यून इति । तत्रोत्तरं वक्तुं प्रथमं प्रथमवयस्त्वं पूर्वोक्तं प्रकटयति । पञ्चविंशेति । साधुश्चासौ युवा चेति व्युत्पत्त्या साधुरितिपूर्वो-क्तस्य यूनो विशेषणमिति तावदाह । साधुरितीति ॥ ९४ ॥

---

१ ( ग. घ. च. ) °पत्तिरे°। २ ( ङ. ) °शयस्यान°। ३ ( ग. ) °शात्मकः । ४ ( क. ख. ग. ) प्रथमप°।

मिथः सव्यभिचारित्वात्साधुयौवनयोरतः ।
विशेषणमिदं तस्मात्पुनः साधुयुवेति हि ॥ ९५ ॥

इदानीं प्रश्नस्योत्तरमाह । मिथ इति । युवत्वं परित्यज्य स्थविरे साधुत्व दृश्यते । साधुत्वं विधूयोन्मादवति पञ्चविंशाब्दिके पर्याप्तचेष्टाविशिष्टे युवत्वमुपलभ्यते । अतः साधुयौवनयोरन्योन्यव्यभिचारित्वाद्यूनः साधुरिति विशेषणमर्थवद्भवति तस्माद्विशेषणवैयर्थ्यचोद्यं नास्तीत्यर्थः ॥ ९५ ॥

अध्येति सर्वमध्येयमतोऽध्यापक उच्यते ।
क्षिप्रकार्यतिशायित्वादाशिष्ठोऽसौ भवेदतः ॥९६॥

अध्यापकशब्दार्थमाह । अध्येतीति । आशिष्ठशब्दार्थमाह । क्षिप्रेति । क्षिप्रकारिषु मध्ये स्वयमतिशयवत्त्वादिति यावत् । अतःशब्दस्तु पञ्चम्या संबध्यते ॥९६॥

समग्राशेषचार्वङ्गो दृढिष्ठः परिकीर्त्यते ।
अभिभूय यतः सर्वान्बलिनो वर्तते ततः ॥
बलिष्ठस्तेन विद्वद्भिः कीर्त्यते पृथुकीर्तिभिः ॥ ९७ ॥

दृढिष्ठशब्दार्थमाह । समग्रेति । बलिष्ठशब्दं योजयति । अभिभूयेति । तेन बलातिरेकेणेति यावत् ॥ ९७ ॥

यावदाध्यात्मिकं किंचित्पुंभिरापेक्ष्यते क्वचित् ।
दृष्टादृष्टभोगाय तेन सर्वेण संयुतः ॥ ९८ ॥

युवेत्यादिवाक्यस्याक्षरार्थमुक्त्वा तात्पर्यार्थमाह । यावदिति ॥ ९८ ॥

तस्येयं पृथिवी सर्वा पूर्णा वित्तस्य चेद्भवेत् ।
इति साधनमुक्तं स्याद्दृष्टादृष्टार्थकर्मणः ॥ ९९ ॥

बाह्योपकरणैरपि संपन्नत्वमनन्तरवाक्यावष्टम्भेन दर्शयति । तस्येति । यदि यथोक्तवित्तसंपत्तिस्तदा बाह्यसाधनसंपत्तिरित्यर्थः । वाक्यत्रयार्थमुपसंहरति । इतीति । साधनमित्याध्यात्मिकं बाह्यं चेत्युभयं साधनं गृह्यते ॥ ९९ ॥

बाह्यैराध्यात्मिकैश्चैव संपन्नः साधनैः पुमान् ।
लभते यमसौ ह्लादं नरानन्दः स उच्यते ॥ ५०० ॥

स एको मानुष आनन्द इत्यस्यार्थमाह । बाह्यैरिति ॥ ५०० ॥

---

१ ( ग. घ. च. ) प्रश्नोत्त'। २ ( ङ.च. ) 'भूय योन्मा'। ३ ( क. ) 'युवयौ'। ४ ( ग. घ ) 'यर्थ्यं चो'। ५ ( क. ङ. ) 'कार्योति'। ६ ( ङ. ) 'न तद्विद्भिः'। ७ ( ग घ. च. ) 'संपूर्तिरि'। ८ ( ख. ङ. ) 'श्चैवं सं'।

य एते शतमानन्दा मानुषाणां समाहृताः ।
नरगन्धर्वकाणां स्यात्तावानेकः प्रमाणतः ॥ १ ॥

ते ये शतमित्यादिवाक्यद्वयस्यार्थमाह । य एत इति ॥ १ ॥

सुगन्धिनः कामरूपा अन्तर्धानादिशक्तयः ।
नृत्यगीतादिकुशला गन्धर्वाः स्युर्नृलौकिकाः ॥ २ ॥

मनुष्यानन्दापेक्षया शतगुणितो मनुष्यगन्धर्वाणामानन्दो भवतीत्यत्र कारणं वक्तुं मनुष्यगन्धर्वस्वरूपमाह । सुगन्धिन इति ॥ २ ॥

भूयोद्वन्द्वप्रतीघातशक्तिसाधनसंपदा ।
नारगन्धर्विको भूयानानन्दो मानुषादधि ॥ ३ ॥

तेषामानन्दाधिक्ये विवक्षितं कारणमाह । भूयोद्वन्द्वेति । भूयसां द्वन्द्वानां प्रतिघाते प्रतिक्षेपे शक्तिश्च साधनानि च तेषां संपदा सामर्थ्येति यावत् ॥ ३ ॥

आविरिञ्चाद्भवेदेवं पूर्वस्मादुत्तरोऽधिकः ।
सहस्रदशभागेन ह्युत्तरोत्तरतः क्रमात् ॥ ४ ॥

यथा मानुषानन्दान्मनुष्यगन्धर्वानन्दस्य शतगुणमाधिक्यं साधनबहुत्वादुक्तमेवं हिरण्यगर्भपर्यन्तं पाठक्रमानुसारेणोत्तरोत्तरभूमौ पूर्वपूर्वापेक्षया शतगुणितः सन्नानन्दः साधनबहुत्वमेव प्रयोजकीकृत्य प्रवृत्तोऽस्तीत्यतिदिशति । आविरिञ्चादिति ॥ ४ ॥

श्रोत्रियोऽधीतवेदः स्यात्साध्वाचारः प्रसिद्धितः ।
कामानुपहतात्माऽपि स्यादकामहतस्तथा ॥ ५ ॥

श्रोत्रियस्य चाकामहतस्येत्यस्यार्थमाह । श्रोत्रिय इति । तस्य साध्वाचारत्वविशेषणं कुतो लब्धमित्याशङ्क्याधीतस्वाध्याये स्वाचारवति वृद्धानां श्रोत्रियत्वप्रसिद्धेरित्याह । प्रसिद्धित इति ॥ ५ ॥

---

१ (ग. घ.) °न्दा मनुष्याणां° । २ (ङ.) °क्यस्या° । ३ (ङ.) °स्मान्य° । ४ (ग. घ.) °नि ते° । ५ (क. ख.) °मेव हि° । ६ (ग. ङ.) °[illegible]°

मार्त्याद्भोगाद्विरक्तस्य ह्युत्तराह्लादकामिनः ।
सहस्रदशभागेन मानुषाद्गुणतो भवेत् ॥ ६ ॥
इत्येतस्य प्रसिद्ध्यर्थमादावग्रहणं कृतम् ।
अकामहत इत्यस्य हेतोरानन्दवृद्धये ॥ ७ ॥

प्रथमे पर्याये श्रोत्रियत्वादेरग्रहणे कारणमाह । मार्त्यादिति । मनुष्यसंबन्धिनः सुखभोगाच्छर्दितान्नादिवेद्विरक्तस्य तदपेक्षयोत्तरत्र च मनुष्यगन्धर्वानन्दे तत्प्राप्तिसाधनानुष्ठानव्यतिरेकेणात्रैव प्राप्तिमिच्छतो मानुषानन्दाच्छतगुणतो मनुष्यगन्धर्वेण तुल्यः सन्नानन्दो भवेदित्येतस्यार्थस्य प्रतिपत्त्यर्थमकामहतत्वादेरग्रहणं प्रथमे पर्याये कृतं ततश्च मानुषाद्भोगाद्वैराग्यहेतोर्मनुष्यगन्धर्वेण तुल्यानन्दलाभान्मानुषाद्विरक्तस्य मनुष्यापेक्षया सुखवृद्धिसिद्ध्यर्थं श्रोत्रियस्य चाकामहतस्येत्यादौ नोक्तं यदि प्रथमपर्याय एवाकामहतो गृह्येत तदा तस्य सार्वभौमानन्देनाऽऽनन्दः समः स्यात् । ततश्च व्याघातो मानुषानन्दे विरक्तो मानुषानन्दभोगभागी चेति ततो मनुष्यगन्धर्वानन्देन तुल्यमानन्दं मनुष्यानन्दाद्विरक्तस्य दर्शयितुं प्रथमपर्याये श्रोत्रियत्वादेरग्रहणमित्यर्थः ॥ ६ ॥ ७ ॥

श्रोत्रियात्वृजिनत्वे द्वे सर्वत्रैव समे अपि ।
कामानुपहतत्वस्य वृद्धौ ह्लादो विवर्धते ॥ ८ ॥

श्रोत्रियत्वमवृजिनत्वमकामहतत्वमित्येतानि त्रीणि सुखप्राप्तौ साधनानि तेष्ववान्तरविशेषमाह । श्रोत्रियेति । अपिशब्दो द्विशब्देन सर्वशब्देन च संबध्यते । एवशब्दस्तु समशब्देन संबन्धनीयः । कथं तर्हि सुखवृद्धिरित्याशङ्क्याऽऽह । कामेति ॥ ८ ॥

यतोऽकामहतत्वं स्यात्सर्वातिशायिनोऽञ्जसा ।
सुखस्य प्राप्तये तस्मात्तदेवोत्कृष्टिकृद्भवेत् ॥ ९ ॥

तदेव स्पष्टयति । यत इति । निरतिशयानन्दप्राप्तौ निरतिशयाकामहतत्वं यतो हेतुस्तस्मादानन्दस्यावान्तरोत्कर्षोऽपि तस्यैवाकामहतत्वस्यावान्तरोत्कर्षाधीनः स्यादित्यर्थः ॥ ९ ॥

---

१ (ग. घ.) °द्गुणितो°। २ (ग. घ. ङ.) °व विर°। ३ (ग. घ.) °णात्र प्रा°। ४ (ग. घ.) °थमे प°। ५ (क. ख) °तत्वे स्या°।

तस्माद्यथोदितानन्दप्राप्तये साधनत्रयम् ।
श्रोत्रियावृजिनत्वे द्वे तथाकामहतात्मता ॥ १० ॥

श्रोत्रियत्वादीनां त्रयाणामवान्तरविशेषमुक्त्वा साधारणं रूपमाह । तस्मादिति । श्रुतत्वाविशेषादित्यर्थः । अवृजिनत्वं यथोक्तकारित्वं तदत्रानुक्तमपि श्रुत्यन्तरसिद्धं संगृह्यते ॥ १० ॥

तुल्ये आब्रह्मगः पूर्वे उत्कर्षस्तूत्तरस्य च ।
अकामहततैवातः पूर्वाभ्यां साधनं परम् ॥ ११ ॥

यदुक्तं श्रोत्रियावृजिनत्वे द्वे सर्वत्रैवेत्यादि तदेव स्पष्टयति । तुल्ये इति । श्रोत्रियत्वावृजिनत्वयोस्तुल्यत्वमुत्कर्षश्चाकामहतत्वस्येति स्थिते फलितमाह । अकामहततेति ॥ ११ ॥

चिरकालस्थितिर्येषु पितृलोकेषु ते स्मृताः ।
चिरलोकलोकास्तेऽपि स्युः पितृश्राद्धादिकारिणः॥१२॥

स एकः पितॄणां चिरलोकलोकानामानन्द इत्यत्र पितॄणां चिरलोकलोकत्वं विशेषणं तदुपपादयति । चिरकालेति । के ते चिरकालं पितृलोकेषु वसन्ति तानाह । तेऽपीति ॥ १२ ॥

आजानो देवलोकः स्यात्तज्जा आजानजाः स्मृताः ।
स्मार्तकर्मकृतस्तत्र जायन्ते देवभूमिषु ॥ १३ ॥

स एक आजानजानां देवानामित्यादावाजानशब्दार्थमाह । आजान इति । केषां देवलोके जातत्वमित्युक्ते वापीकूपतटाकादिसुकृतकारिणामित्याह । स्मार्तेति ॥ १३ ॥

कर्मणैव त्वविद्वांसो ये जाताः सुरसद्मसु ।
कर्मदेवांस्तु तान्विद्याद्देवांश्चोत्तरमार्गगान् ॥ १४ ॥

स एकः कर्मदेवानामित्यादौ कर्मदेवशब्दार्थमाह । कर्मणैवेति । कर्मशब्देनाग्निहोत्रादि केवलं कर्म गृह्यते। स एको देवानामित्यादौ देवशब्दार्थमाह। देवानिति। देवाः समुच्चयकारिणो देवयानमार्गगामिनो देवान्विद्यादितिसंबन्धः ॥ १४ ॥

---

१ (ग. घ.) ॰न्तरं सि॰। २ (क. ख. च ) ॰नजश॰। ३ (क. ङ.) ॰देवांस्तु।

त्रैलोक्यदेहश्चात्र स्याद्विराडेव प्रजापतिः।
समष्टिव्यष्टिरूपश्च ब्रह्मेह परिगृह्यते ॥ १५ ॥

स एकः प्रजापतेरानन्द इत्यादौ प्रजापतिशब्दार्थमाह। त्रैलोक्येति। स एको ब्रह्मण आनन्द इत्यत्र ब्रह्मशब्दस्य सूत्रात्मविषयत्वमाह। समष्टीति ॥ १५ ॥

त एते सर्व आनन्दा यत्रैकत्वं व्रजन्ति नः।
कामश्च तन्निमितोऽर्थो ज्ञानं यच्च द्वयात्मकम् ॥१६॥
तथाकामहतत्वं च निष्ठां यत्र प्रपद्यते।
तमानन्दं विजानीयाद्धर्मनाऽनेन वाक्यतः ॥ १७ ॥

तथाऽपि कथं निरतिशयानन्दसिद्धिरित्याशङ्क्याऽऽह। त एत इति। यत्र हिरण्यगर्भानन्दात्परस्मिन्नानन्दे गणनं व्यावर्तते यत्र चाऽऽनन्दाः सातिशयाः सर्वे पर्यवस्यन्ति यत्र च कामः सातिशयविषयः सहेतुको ज्ञानाद्बाध्यते ज्ञानं च सातिशयं सर्वं यस्य ज्ञानान्निवर्तते तमानन्दमनतिशयं ब्रह्मात्मत्वेन सातिशयेन निरतिशयस्यानुमानमित्युक्त्वाऽनुमानानुगृहीतेन तत्त्वमस्यादिवाक्येनाहमस्मीति जानीयादित्यर्थः ॥ १६ । १७ ॥

आनन्दानन्दिनोश्चात्र न भेदः स्यान्मनागपि।
श्रुत्यैवापोदितो यस्माच्छिद्रं कुर्वन्मनागपि ॥ १८ ॥

कर्मफलानन्दतद्वतोरिव ब्रह्मानन्दतद्वतोरपि भेदात्कथं यथोक्तमानन्दं ब्रह्मात्मत्वेन जानीयादित्याशङ्क्याऽऽह। आनन्देति। अत्रेति ब्रह्म गृह्यते। ब्रह्मणि स्वल्पमात्रस्यापि भेदस्याभावे हेतुमाह। श्रुत्यैवेति ॥ १८ ॥

न साधनमयं किंचित्स्वात्मसिद्धावपेक्षते।
स्वतःसिद्धेरविद्याया हानमात्रमपेक्षते ॥ १९ ॥

ब्रह्मानन्दस्यापि कर्मफलानन्दवदेव साधनसव्यपेक्षत्वाद्भिन्नतेत्याशङ्क्याऽऽह। न साधनमिति। प्रत्यग्भूतस्य ब्रह्मानन्दस्य स्वतःसिद्धत्वेन सर्वेषामानन्दरूपता किमिति न भातीत्याशङ्क्याविद्यावृतत्वादित्याह। अविद्याया इति ॥१९॥

---

१ (ग. घ.) च यत्र निष्ठां प्र°। २ (ग. घ.) °वर्त्यते। ३ (च.) °नव्य°।

गुरुभारावसन्नस्य भारापनयतो यथा ।
उत्कृष्यते क्रमात्स्वास्थ्यं स्वात्मन्येवं तमःक्षयात् ॥२०॥

स्वरूपत्वेन माप्तस्यैवाऽऽनन्दस्याविद्यानिवृत्तिमपेक्ष्याभिव्यक्तिरित्युक्तं दृष्टान्तेन स्फोरयति । गुरुभारेति ॥ २० ॥

अथेदानीं परीक्षाया अद्वैतानन्दलक्षणम् ।
उपसंह्रियते साक्षात्फलं साधननिस्पृहम् ॥ २१ ॥

स यश्चायमित्यादिवाक्यत्रयस्य तात्पर्यमाह । अथेति । सैषाऽऽनन्दस्येत्यादौ सातिशयानन्दद्वारा निरतिशयानन्दमनुमाय यद्ब्रह्म निरतिशयानन्दात्मकं निर्धारितं तदत्राऽऽत्मत्वेन संक्षिप्य प्रतिपाद्यत इत्यर्थः ॥ २१ ॥

निर्धूताशेषसंसारः सत्यमित्यादिनोदितः ।
व्युत्थाप्यासत्यज्ञानादेर्बुद्धौ चाऽऽत्मनि दर्शितः॥२२॥

न केवलं विचारफलोपसंहारार्थमिदं वाक्यं किंतु सत्यज्ञानादिमन्त्रार्थोपसंहारार्थमपीत्याह । निर्धूतेति । यो हि परमात्मा सत्यज्ञानादिवाक्येन सत्यादिलक्षणो दर्शितः स एव यो वेद निहितं गुहायामिति बुद्धौ चाऽऽत्मनि बुद्धिस्वरूपे प्रविष्टो निर्दिष्टः । स एव चात्र स यश्चायमित्यादावुपसंह्रियत इत्यर्थः ॥ २२ ॥

निष्कृष्याविद्योत्संगस्थात्तत्साक्षिणमनात्मनः ।
साक्षात्तेनैव तं विद्मः प्रात्यक्ष्यात्सोऽयमित्यतः ॥२३॥

सत्यज्ञानादिवाक्यार्थस्यात्रोपसंहारे किं फलमित्यपेक्षायामाह । निष्कृष्येति । अविद्योत्संगस्थादविद्याकार्यादहंकारादेरनात्मनः सकाशात्तत्साक्षिणं विविच्य गृहीत्वा तेनैव सत्यज्ञानादिरूपेण ब्रह्मणा तमात्मानं साक्षादेव विद्म इति योजना। सत्यं ज्ञानमित्यत्रैकत्वेनोपक्रम्य स यश्चायमित्यादौ तेनैवोपसंह्रियते । ब्रह्मात्मनोरेकत्वज्ञानदृढीकरणार्थमित्यर्थः । वाक्यत्रयतात्पर्यमित्थमुक्त्वा प्रथमवाक्यगतमयंशब्दं व्याकरोति । प्रात्यक्ष्यादिति । बुद्धिसाक्षिणः स्वयंप्रकाशत्वेनापरोक्षत्वादयमिति स निर्देशार्हो भवतीत्यर्थः । अतःशब्दस्य पूर्वपङ्क्त्या संबन्धः ॥ २३ ॥

---

१ (क. ख.) °स्फोटय°। २ (ग. घ.) °दं किं°। ३ (ग. घ.) क्षणेन द°। ४ (घ.) °म्रः प्रत्यक्षात्सोऽ°। ५ (क. ख.) °र्थाई°। ६ (ग. घ.) °शात्सा°। ७ (ख. ङ.) °ति । मन्यशादि°। ८ (ग. घ.) मन्निर्दे°।

अकामहत इत्येवं निरवद्योऽभिधीयते ।
तस्यामसत्यां तद्ब्रह्म स्वयमेवानुभूयते ॥ २४ ॥

श्रोत्रियस्य चाकामहतस्येत्यन्त्ये पर्याये ज्ञानान्निरस्ताविद्यस्य प्रत्यगात्मनः
सन्निहितत्वादपि ब्रह्मात्मा प्रत्यगात्मैवायंशब्देन निर्दिश्यत इत्याह । अका-
महत इत्येवमिति । विद्यया निरविद्यत्वं चेदुच्यते कथं तर्हि ब्रह्मसिद्धिरिति
तत्राऽऽह । तस्यामिति ॥ २४ ॥

अज्ञातं ज्ञायते यत्र प्रमातृत्वाद्यनिह्नवात् ।
तत्र मानान्तरापेक्षा न स्वतोऽवगमात्मके ॥ २५ ॥

ब्रह्म स्वयमेव सिध्यतीत्ययुक्तं तस्य वस्तुत्वेन घटादिवन्मानान्तरसापेक्षत्वा-
नुमानादित्याशङ्क्य जडत्वोपाधेर्मैवमित्याह । अज्ञातमिति ॥ २५ ॥

प्रमैवात्मात्मिका यत्र त्वनन्यानुभवात्मिका ।
नात्र मानान्तरापेक्षा सैवानस्तमितोदिता ॥ २६ ॥

साधनव्याप्तिपरिहारार्थं न स्वतोऽवगमात्मक इत्युक्तं तत्प्रपञ्चयति । प्रमैवेति ।
श्रुतिः स्वविषयमात्मानमविषयत्वेनैव बोधयन्ती तद्गताविद्यानिवर्तकत्वेन तत्र
प्रविशतीतिभावः ॥ २६ ॥

आधेयार्थप्रधानेयं सप्तमी पुरुषात्परा ।
योऽयमित्यादिना तद्वच्छ्रुतिरेवं प्रमादिनी ॥२७॥

वाक्यद्वयेऽपि सप्तमीप्रयोगस्याधारप्रधानत्वाभावान्नोपासनापरत्वमाधेयात्म-
ब्रह्मपरत्वात्तु तयोरेकत्वपरत्वं पुरुषग्रहणस्यादित्योपलक्षणत्वादित्यभिप्रे-
त्याऽऽह । आधेयेति । आधारार्थत्वं परित्यज्याऽऽधेयप्रधाना सप्तमी न दृष्टेत्या-
शङ्क्य योऽयं विज्ञानमयः प्राणेष्वित्यत्राऽऽधेयात्मप्रधाना सप्तमी दृष्टेत्याह ।
योऽयमित्यादिनेति ॥ २७ ॥

अकामहतधीगम्यो योऽयंबुद्धेः सदेक्षकः ।
अयं पुरुष इत्यत्र स एव त्वभिधीयते ॥ २८ ॥

स यश्चायं पुरुष इतिवाक्यस्य त्वंपदलक्ष्यमर्थमुक्तमुपसंहरति । अका-
मेति ॥ २८ ॥

---

१ (ग घ) 'दित्याऽऽ' ।

प्रध्वस्तास्मद्विभागश्च रोचिष्णुर्यश्च भास्करे ।
सूर्य आत्मेतिमन्त्रोऽपि योऽसाविति च साक्ष्यथ॥२९॥

यश्चासावादित्य इतिवाक्यस्य तत्पदलक्ष्यार्थविषयत्वमाह । प्रध्वस्तेति । आदित्यमण्डले परमात्मा सन्निहितोऽस्तीत्यत्र श्रुतिस्मृती प्रमाणयति । सूर्य इति ॥ २९ ॥

क्षेत्रज्ञेश्वरभेदेन ह्यभिन्नं वस्त्वविद्यया ।
तस्मात्तद्धानतश्चैक्यं घटेतरखयोरिव ॥ ३० ॥

स एक इतिवाक्यस्य तात्पर्यार्थमाह । क्षेत्रज्ञेति । अभिन्नमेव वस्तुतो वस्तु क्षेत्रज्ञश्चेश्वरश्चेत्यविद्यया भिन्नं यस्माद्भासते तस्मादविद्यानिरासद्वारा घटाकाशमहाकाशयोरिव जीवेश्वरयोरैक्यमत्र बोध्यमित्यर्थः ॥ ३० ॥

मूर्तामूर्तात्मकस्यास्य ह्युत्कर्षः परमो रविः ।
स्वान्तर्गतेन तस्यैक्यं तन्निमित्तनिषेधतः ॥ ३१ ॥

आदित्याधारं तत्पदार्थमुक्त्वा त्वंपदार्थं चान्तःकरणाधारमुपदिश्य तयोरैक्यकथने[१] फलितमाह । मूर्तेति । भूतपञ्चकस्य प्रधानं कार्यं तद्गतेन लिङ्गेन[२] सहादित्यमण्डलं तत्र सन्निहितस्य ब्रह्मणस्तत्पदार्थस्य साक्षिणा त्वंपदार्थेनैक्यमध्यारोपितोत्कर्षापकर्षकारणाविद्यानिराकरणेनात्र बोध्यते ततश्चाऽऽदित्याधारत्वात्तदर्थस्योत्कृष्टत्वं त्वमर्थस्य चान्तःकरणाधिकरणत्वेन रागादिकलुषितत्वान्निकृष्टत्वमित्याशङ्का न कर्तव्येत्यर्थः ॥ ३१ ॥

अनूद्य स य इत्येवमपकृष्टं[३] नृबुद्धिगम् ।
उत्कृष्टेनेश्वरेणाथ विशिनष्टयहिरज्जुवत् ॥ ३२ ॥

तत्त्वंपदार्थयोरेकत्वबोधनप्रकारमत्राभिमतं[४] प्रकटयति । अनूद्येति । यथा यः सर्पः सा रज्जुरित्युच्यते तथा बुद्धिस्थमपकृष्टत्वेन कल्पितं त्वंपदार्थमनूद्याऽऽदित्यमण्डलस्थेन प्रकृष्टतया कल्पितेन तत्पदार्थेनैक्यमत्र बोध्यते तथा चोत्कर्षापकर्षहीनं सच्चिदानन्दात्मकं वस्तु परिशिष्टं भवतीत्यर्थः ॥ ३२ ॥

---

१ (च.) °त्यर्थमा°। २ (क.) °नेन फ°। ३ (क. ख.) °ष्टं स्वबु°। ४ (ग. घ. च.) °रमात्रा°।

उत्कृष्टो यदपेक्ष्येशस्तत्तावद्बाध्यते बलात् ।
जहाति पश्चादुत्कर्षमपकृष्टाश्रयो हि सः ॥ ३३ ॥

विशेषणफलं विशदयति । उत्कृष्ट इति । ईश्वरो हि जीवगतमपकृष्टत्वमपेक्ष्य स्वयमुत्कृष्टो व्यपदिश्यते । तच्च जीवगतमपकृष्टत्वं जीवानुवादेन तस्य ब्रह्मणा विशेष्यत्वे व्यावर्तते । ब्रह्म हि जीवस्य विशेषणं तद्गतमपकृष्टत्वं बलादेव बाधते । उत्कृष्टस्य निकृष्टं प्रति विशेषणत्वायोगाज्जीवगतापकर्षनिवृत्तौ च ब्रह्म स्वगतमुत्कर्षं परित्यजति । तस्यापकर्षसापेक्षत्वादित्यर्थः ॥ ३३ ॥

नादित्यस्थस्तदोत्कर्षो नापकृष्टिस्तथाऽऽत्मनि ।
हित्वोभयमवाक्यार्थं नेति नेतीति विन्दते ॥ ३४ ॥

उत्कर्षापकर्षनिवृत्तावात्मनो ब्रह्मत्वं ब्रह्मणश्चाऽऽत्मत्वं सिध्यतीत्युत्कर्षापकर्षनिवृत्त्यनुवादेन तत्फलं कथयति । नेत्यादिना । विशेषणविशेष्यत्वावस्था जीवब्रह्मणोस्तदेति परामृश्यते ॥ ३४ ॥

उत्कृष्टिर्वाऽपकृष्टिर्वा नेह स्वात्मनि विद्यते ।
तमोपहतदृष्टीनामुत्कर्षेतरवीक्षणम् ॥ ३५ ॥

उत्कृष्टत्वापकृष्टत्वयोर्वस्तुत्वे कुतो निवृत्तिरित्याशङ्क्याऽऽह । उत्कृष्टिरिति ॥ ३५ ॥

अविद्यैव यतो हेतुरुत्कृष्टयादेर्न वस्त्वतः ।
जग्धायां विद्यया तस्यां नानात्वं विनिवर्तते ॥ ३६ ॥

उत्कर्षादेरविद्याकार्यत्वे फलितमाह । अविद्यैवेति ॥ ३६ ॥

अतिशेते यतः सर्वानानन्दानाग्रजादधि ।
विकल्पभूमेर्व्यावृत्तेरैक्यं स्वात्मरविस्थयोः ॥ ३७ ॥

ज्ञानफलमपकर्षाद्यनर्थनिवृत्तिरेव न भवति किंतु निरतिशयानन्दप्राप्तिरपीत्याह । अतिशेत इति । अग्रजो हिरण्यगर्भो ब्रह्मा तत्पर्यन्ता ये केचिदानन्दास्तान्कर्मफलभूतानशेषानतिशेते यस्मादुपरिष्टाद्व्यवस्थितो निरतिशयो ब्रह्मानन्दस्तस्मादात्मन्यन्तःकरणे साक्षित्वेनावस्थितस्य त्वंपदलक्ष्यस्याऽऽदित्यमण्डलेऽवस्थितस्य ब्रह्मणस्तत्पदलक्ष्यस्य निरतिशयानन्दात्मकस्य वाक्यादैक्यमास्थेयं[4] तज्ज्ञानाच्च सर्वविकल्पाश्रयस्याज्ञानस्य व्यावृत्तेरनर्थनिवृत्त्युपलक्षितं निरतिशयसुखमाविर्भवतीत्यर्थः ॥ ३७ ॥

---

१ ( ग. घ. ) °स्तदाऽऽत्म° । २ ( ग. घ. ) °मुत्कृष्टेत° । ३ ( ग. घ. ) °त्कृष्टादे° । ४ ( क. ख. ) °यं यज्ज्ञा° । ५ ( ग. घ. च. ) °शयं सु° ।

सत्यं ज्ञानमिति ह्यस्मादसत्याद्यर्थवारणात् ।
भेदाश्रयस्य व्यावृत्तेरैक्यं स्वात्मरविस्थयोः ॥ ३८ ॥

यदुक्तं ब्रह्मात्मनोरैक्यं तदेव साधयति । सत्यमिति । सत्यं ज्ञानमनन्तं ब्रह्मेत्यस्माद्वाक्याद्ब्रह्मणः सत्यादिरूपत्वविधानादसत्यादेरर्थस्य निवारणाज्ज्ञानत्वविधानादज्ञानस्य भेदादिकारणस्य निराकरणाद्ब्रह्मात्मनोरैक्यं युक्तमित्यर्थः ॥ ३८ ॥

कार्येण रसलाभेन प्राणनाद्युपपत्तिभिः ।
अस्तीत्यपाक्रियैतस्य प्राहुर्भाष्यकृतः स्वयम् ॥३९॥
प्रश्नयोरस्ति नास्तीति व्याख्यातत्वादथाधुना ।
आहो विद्वानमुं लोकमित्यस्यापाक्रियोच्यते॥ ४० ॥

संप्रति भाष्यकारीयं व्याख्यानमनुवदति । कार्येणेति । सोऽकामयतेत्यादिना प्रागुक्तोपपत्त्यनुरोधेन ब्रह्मोऽस्तीत्यस्यार्थस्य सिद्धत्वादस्ति नास्तीत्येतस्य प्रश्नस्य व्याख्यातत्वादपाकृतत्वादनन्तरमवशिष्टयोः प्रश्नयोर्याऽपाक्रिया कर्तव्या तदवसरे प्राप्ते सत्याहो विद्वानित्यादिर्यो द्वितीयः प्रश्नस्तस्यैतस्यापाक्रिया स यथायमित्यादिनोच्यते । विद्वानेव ब्रह्म प्राप्नोतीत्युक्ते चार्थादविद्वान्न प्राप्नोतीत्युताविद्वानित्यादिप्रश्नोऽपि निर्णीतो भवतीति स्वयं भाष्यकृतः प्राहुरिति वार्तिकयोरक्षरयोजना ॥ ३९ ॥ ४० ॥

तद्वाणीभानुसंप्लुष्टबहुलाज्ञानधीरहम् ।
यदाहीत्यादिना मन्ये उतेत्योर्दर्विनिर्णयम् ॥ ४१ ॥

इदानीं स्वव्याख्यानं दर्शयति । तद्वाणीति ॥ ४१ ॥

उताविद्वानमुं लोकमिति प्रश्नविनिर्णयात् ।
अस्ति नास्तीति सिद्धः स्यात्प्रश्नयोरपि निर्णयः॥४२॥

उताविद्वानित्यादिप्रश्नस्योत्तरं यदा ह्येवैष एतस्मिन्नित्यादिना शब्देनैवोच्यते न त्वर्थादिति स्थिते लाभान्तरमाह । उताविद्वानिति । उताविद्वानित्यादिना प्रश्नयोरुभयोर्विनिर्णयादस्ति नास्तीत्यस्यापि प्रश्नस्य निर्णयलाभात्त्रयाणामपि प्रश्नानामत्रैव निर्णयः सिद्धः स्यादिति योजना । असतोऽर्थस्य ज्ञानाज्ञानाभ्यां मुक्तिबन्धयोरयोगाद्यदाहीत्यादि वाक्यं त्रयाणामपि प्रश्नानां भवत्युत्तरमित्यर्थः ॥ ४२ ॥

---

१ ( क. ख. ) °वि यस्मा°। २ ( ङ. ) °ह्मास्मीत्य°। ३ ( च. ) °योरथैपा°। ४ ( ग. घ ) °योऽपक्रि°। ५ ( ग. घ. ) °त्यादिवि°।

विद्वत्ताव्यतिरेकेण फलं भिन्नं यथा तथा ।
अकामहततायास्तु परानन्दो न भिद्यते ॥ ४३ ॥

सं यथायमित्यादिवाक्येन ब्रह्मात्मनोरेकत्वमुक्तं तज्ज्ञानफलं समूलानर्थनिवृ-
त्तिरनतिशयानन्दश्चेतिभावाभावात्मकं मिथो भिन्नमित्याशङ्क्याऽऽह । विद्वत्तेति ।
विद्वत्ता विदुषो भावो ब्रह्मत्वं तस्या व्यतिरेकेण पूर्णत्वेन हेतुना तस्माद्ब्रह्मभावाद्वि-
द्वद्रूपात्फलं यथा भिन्नं न भवति तस्याद्वितीयत्वान्नकारस्तूपरिष्टात्ततोत्रानुपज्यते
तथैवाकामहततायाः समूलानर्थनिवृत्तेः सकाशात्परमानन्दो न भिद्यते समस्ता-
नर्थनिवृत्त्युपलक्षितस्य ब्रह्मणो निरतिशयानन्दत्वस्य निर्धारितत्वात्तस्मादैक्य-
ज्ञानफले नास्ति [1]भेदशङ्केत्यर्थः ॥ ४३ ॥

अनेकजन्मसंसिद्धः स यः कश्चिद्बवेदिह ।
यथोदितार्थवित्साक्षादस्माद्रागेतरात्मकात् ॥ ४४ ॥
लोकादाध्यात्मिकात्प्रेत्य यश्च स्यादाधिभौतिकः ।
तदुत्क्रान्तेर्भवेद्धेतुरन्नसृष्टिस्थितिक्षयः ॥ ४५ ॥

अनेकेति । अनेकेष्वतिक्रान्तेषु जन्मसु
स य एवं विदित्यादेरर्थमाह । अनेकेति । संसिद्धो लब्धज्ञानसामग्रीको
ज्ञानसाधनानुष्ठानद्वारा क्षपितज्ञानोत्पत्तिप्रतिबन्धकः संसिद्धो लब्धज्ञानसामग्रीको
मनुष्याणां सहस्रेषु कश्चिदेव योऽत्र संसारमण्डले यथोक्तार्थे सर्वानर्थरहिते
निरतिशयानन्दे ब्रह्मात्मन्यहमस्मीति साक्षादेव वेदिता संभावितः सोऽस्मादनु-
भवारूढादाध्यात्मिकाद्देहादनेकानर्थकलुषितादाधिभौतिकादाधिदैविकाच्च सर्व-
स्मादेव कोशपञ्चकात्प्रेत्य ज्ञानबलात्तत्राभिमानं परित्यज्याभये निर्विशेषे स्वात्मनि
प्रतिष्ठां प्राप्नोतीत्यर्थः ॥ ४४ ॥ ४५ ॥

लोकादस्मात्समुत्क्रम्य ह्येवं विदितिवाचकः ।
सर्वशेषमितिन्यायं तद्व्याख्यानाय चोत्तरम् ॥ ४६ ॥

विद्वान्देहाभिमानं परित्यज्य किं करोतीत्यपेक्षायामाह । लोकादिति ।
एवंविदित्ययंशब्दो वाचको यस्य स विद्वानेवंविच्छब्दवाच्यो देहादभिमानतः
स्वीकृतादध्यात्मादिभेदभिन्नात्तत्त्वज्ञानबलमवलम्ब्य समुत्क्रम्य तत्राभिमानम-
पवाध्यासङ्गोदासीनः स्थितः सर्वत्र वक्ष्यमाणोपसंक्रमणे शेषत्वेन कर्तत्येवमभ्यु-
पगन्तुं युक्तं सर्वत्रोपसंक्रमणकर्ता विद्वानेवेत्येतस्यार्थस्य व्याख्यानार्थमन्नमय-
मित्यादिवाक्यमित्यर्थः ॥ ४६ ॥

---

१ ( ग. घ. ) °वृत्तिः साति°। २ ( ग. घ. ङ. च. ) °भेदाश°। ३ (क. ख. ) °ति-
°तिकात्°। ४ ( ग. ) °क्षयाः ॥ ४५ ॥ ५ ( ग. घ. ) °कार्थस°। ६ ( च. ) °ति-
ष्ठामाप्नो°।७ ( ग. घ. ) °दितिश°। ८ ( क. ख. )°हाभि°। ९ ( क. ख. )°स्यार्थे°।

गत्वेहान्नमयात्मानं तत्कार्यं यद्वदत्यगात् ।
अन्नेनान्नमयं तद्वद्विद्वान्प्राणमयात्मना ॥ ४७ ॥
तस्यापि ह्यन्तरात्मानमही रज्जुमिव स्वतः ।
मनोमयात्मना बाह्यमुपसंक्रामतीश्वरः ।
पूर्वपूर्वप्रहाणं स्यादुत्तरोत्तरगामिभिः ॥ ४८ ॥

व्याख्यानप्रकारं प्रकटयति । गत्वेत्यादिना । अत्र सर्वत्रेत्थंभावे तृतीया । उत्क्रमणं कोशपञ्चकेऽभिमानापबाधः संक्रमणं कोशपञ्चकस्यैव बाध इति भेदः । पदार्थपरिशोधनावस्थायां प्रथमं विराडात्मानमात्मत्वेन प्राप्य तत्कार्यं पुत्रपौत्रादिकं सर्वं तन्मात्रत्वेनापबाध्य यथान्नमयोऽस्मीत्येवंतिष्ठते । तथैवान्नमयमपि प्राणमयमात्रत्वेन बाधित्वा प्राणमयमात्मरूपेण विद्वान्वर्तते प्राणमयस्यापि पुनरभ्यन्तरमात्मानं मनोमयं प्राप्य तेनाऽऽत्मना बाह्यं प्राणमयं स्वसामर्थ्यादेव जहाति यथा कल्पितः सर्पो रज्जुं प्राप्य तत्स्वभावसामर्थ्यादेव सर्पत्वं मुञ्चत्येवमेव पूर्वस्य मनोमयस्य विज्ञानमयात्मना प्रहाणं विज्ञानमयस्य च पूर्वस्याऽऽनन्दमयात्मनावस्थानं तस्य चाऽऽनन्दमयस्य पुच्छब्रह्ममात्रत्वेन स्थितिरिति पदार्थविवेककुशलो निरूपयति । तथा निरूपणानन्तरं वाक्याद्वाक्यार्थं प्रतिपद्य कोशपञ्चकमपबाध्य निर्भये ब्रह्मणि तिष्ठतीत्यर्थः ॥ ४७ ॥ ४८ ॥

दृश्यादृश्यादिहीनेऽथ प्रतिष्ठां विन्दतेऽभयम् ॥४९॥
योऽसावेवंविदित्युक्तः परस्मात्किमसौ भवेत् ।
स्वतो भिन्नोऽथवाऽभिन्नो यदि वोभयलक्षणः ॥५०॥

वाक्यार्थज्ञानमुपसंहरति । दृश्येति ॥ ४९ ॥

स य एवंविदित्यादेरित्थं पदार्थव्याख्यानं कृत्वा विचारमवतारयति । योऽसाविति । ब्रह्मविद्ब्रह्मणः सकाशाद्भिन्नो वा स्यादभिन्नो वा भिन्नाभिन्नो वेति विमर्शनार्थः । स्वतः स्वभावादुपाधिपरामर्शमन्तरेणेति यावत् ॥ ५० ॥

भेदश्रुतिविरोधः स्यादन्योऽसावितिनिन्दनात् ।
कर्मकर्तृत्वमेकस्य दोषो भेदेऽपि विद्यते ॥ ५१ ॥

तत्त्वमस्यादिवाक्यविरोधो भेदनिन्दाश्रुतिविरोधश्चेति भेदपक्षे दोषं सूचयति । भेद इति । उपसंक्रमणमतिक्रमणं प्राप्तिर्वा द्विधाऽप्यानन्दमेयं परमात्मानमुपादाय कर्मकर्तृत्वविरोधमभेदपक्षे दर्शयति । कर्मेति ॥ ५१ ॥

---

१ (ग.घ.) °ञ्चकाभि°। २ (च.) °त्रयोपादि°। ३ (ग. घ.) °त्यन्नाव°। ४ (ग. घ.) तथान्न°। ५ (ग. घ.) °ल्पितस°। ६ (ग. घ.) °ज्ञानात्म°। ७ (ग घ.) °वस्यचाऽऽन°। ८ (ग.घ.) °स्य च पु°। ९ (ग.घ.) °भये॥४९॥ १० (ग.घ.च.) °नफलमु°। ११ (ग.घ.) °मयमा°।

परस्य दुःखिता चैवं पराभावः प्रसज्यते।
तस्मान्निर्धारणार्थोऽयं विचारः क्रियतेऽधुना ॥ ५२ ॥

जीवपरयोरभेदे जीवस्य संसारित्वात्परोऽपि संसारी स्यात्। ततश्च परासत्त्व-
मित्यभेदपक्षे दोषान्तरमाह। परस्येति। विद्वच्छब्देनाऽऽत्ममात्रमत्र गृह्यते।
भेदाभेदपक्षे तु विरोधोऽतिस्फुटत्वान्नोद्भाव्यते। पक्षत्रयेऽपि दोषस्य सत्त्वाददुष्ट-
पक्षनिर्धारणार्थं विचारः कर्तव्य इत्याह। तस्मादिति ॥ ५२ ॥

निश्चितं हि परिज्ञानं फलवत्स्यात्प्रसिद्धितः ॥ ५३ ॥
नान्यस्यान्यात्मता यस्माद्ध्वंसे वाऽध्वंस एव वा।
तस्मादनन्यो विज्ञेयः परस्मादात्मनो बुधः ॥ ५४ ॥

अदुष्टपक्षनिर्धारणं किमर्थमित्याशङ्क्याऽऽह। निश्चितं हीति। प्रसिद्धितो
निश्चितस्य ज्ञानस्य फलवत्तायाः वृद्धव्यवहारे प्रसिद्धत्वादित्यर्थः ॥ ५३ ॥
ब्रह्म वेद ब्रह्मैव भवतीतिश्रवणादन्यो जीवो ज्ञानद्वारा ब्रह्म प्राप्नोतीत्यभ्यु-
पगमाद्भेदपक्षे प्राप्ते सिद्धान्तमाह। नान्यस्येति। न हि नष्टस्यानष्टस्य वाऽन्य-
स्यान्यभावो युज्यते। घटे नष्टेऽनष्टे च पटभावानुपलम्भात्तस्मादात्मा सदा ब्रह्मैव
न ततोऽन्यो भवतीत्यर्थः ॥ ५४ ॥

अनन्यश्चेद्ब्रह्मविद्विद्वान्भूतत्वाद्भवतीति किम्।
बाढं प्राप्तं परं ब्रह्म नानात्माऽऽप्नोति येन तत् ॥ ५५ ॥

जीवस्य सदा ब्रह्मभावे ब्रह्म वेद ब्रह्मैव भवतीतिश्रुतिरनुपपन्नेति शङ्कते।
अनन्यश्चेदिति। तत्रानन्यत्वमन्यस्यान्यभावानुपपत्तेरेवाङ्गीकरोति। बाढ-
मिति ॥ ५५ ॥

दशमाप्तिवदज्ञानात्स्वरूपादिव वर्ण्यते।
विद्यया तदवाप्नोति यदनाप्तमविद्यया ॥ ५६ ॥

शङ्कितश्रुतिविरोधं दृष्टान्तेन निराचष्टे। दशमेति। यथा दशमो माणवकः
स्वस्वरूपादविद्यया विभक्तवद्भातीति तदवाप्तिर्ज्ञानादुच्यते तथा जीवोऽपि ब्रह्मस्व-
रूपादज्ञानाद्विभक्तवद्भातीतिज्ञानात्तद्भावो वर्ण्यते शास्त्रेणेत्यर्थः। ब्रह्मण्यप्राप्तिरपि-
द्याकृताविद्याकृतातन्निवृत्तिरेव प्राप्तिरित्युक्तमेव व्यक्तीकरोति। विद्ययेति ॥ ५६ ॥

---

१ (च.) °मित्यर्थ। अभे। २ (ग. घ.) °मात्रं गृ°। ३ (क. ख.) पक्षे नि°।
४ (ग घ.) प्राप्तप°। ५ (क ख.) °स्यान्यो भा°। ६ (ग. घ.) कः स्वरू।°

तमोहृन्त्यतिरेकेण नेह ग्रामाद्यवाप्तिवत् ।
तत्प्राप्तिसाधनं ज्ञानं ग्राममार्गप्रबोधवत् ॥ ५७ ॥
इत्येवं चेन्न वैधर्म्यान्न हि तत्रोपदिश्यते ।
गन्तव्यविषयं ज्ञानं यथा सत्यादिलक्षणम् ॥ ५८ ॥

ग्रामादिप्राप्तिवद्ब्रह्मण्यपि प्राप्तिर्मुख्यैव किं न स्यादित्याशङ्क्य प्रत्यग्भूतत्वाद्ब्रह्मणस्तत्राज्ञाननिवृत्त्यतिरेकेण नास्ति प्राप्तिरित्याह । तमोहृन्तीति । यथा ग्रामस्य मार्गज्ञानं गमनद्वारेणैव प्राप्तिसाधनमेवं ब्रह्मज्ञानमपि स्वाभ्यासद्वारेणैव ब्रह्मप्राप्तिसाधनमिति ब्रह्मणि मुख्यावाप्तिः सिध्यतीति शङ्कते । तत्प्राप्तीति । उपदेशवैषम्योपन्यासेन परिहरति । न वैधर्म्यादिति । यथा सत्यज्ञानानन्तानन्दात्मकं ब्रह्म तत्त्वमसीति प्राप्यं ब्रह्माधिकृत्य ज्ञानमुपदिश्यते न तथा दृष्टान्ते गन्तव्यं ग्रामं विषयीकृत्य ज्ञानमुपदिश्यमानं दृश्यते । तत्प्राप्तिमार्गस्तु तत्रोपदिश्यते तेन तत्र गमनद्वारा मुख्या प्राप्तिः । इह तु ज्ञानादज्ञाननिवृत्त्या प्राप्तिरौपचारिकीत्यर्थः ॥ ५७ ॥ ५८ ॥

कर्मापेक्षं परप्राप्तौ ज्ञानं स्यादिति चेन्न तत् ।
मुक्तौ न कर्मणः कार्यं यस्मादण्वपि विद्यते ॥ ५९ ॥

उपदेशवैषम्येऽपि ज्ञानस्य कर्मापेक्षस्य ब्रह्मप्राप्तिहेतुत्वात्तत्प्राप्तेर्मुख्यत्वसिद्धिरिति शङ्कते । कर्मापेक्षमिति । मोक्षे कर्मकार्यस्य कस्यचिदपि वक्तुमशक्यत्वान्न तत्र कर्मापेक्षा ज्ञानस्येति दूषयति । न तदिति ॥ ५९ ॥

बुद्धं यस्मात्स्वतस्तत्त्वमत्र शुद्धं स्वतो भवेत् ।
अतो मुक्तं स्वतो ब्रह्मवदस्यात्कर्मणाऽत्र किम् ॥ ६० ॥

चतुर्विधमपि कर्मकार्यं मुक्तौ [illegible]नास्तीत्येतदेव साधयति । बुद्धमिति ॥ ६० ॥

स्रष्टृप्रवेष्ट्रोश्चैक[illegible]दभिन्नः स्यात्पराद्बुधः ।
विपश्चिद्व्यतिरे[illegible]ण यदीशोऽन्यो न विद्यते ॥
ततः स्यादभ[illegible]प्राप्तिर्द्वितीयाद्वै भयश्रुतेः ॥ ६१ ॥

विद्वद्ब्रह्मणोर्भेदपक्षं [illegible]राकृत्याभेदपक्षे समर्थिते प्रमाणमाह । स्रष्ट्रिति । मोक्षान्यथानुपपत्त्याऽपि [illegible] तयोरैक्यमास्थेयमित्याह । विपश्चिदिति ॥ ६१ ॥

---

१ (ग.) °प्रभ्रष्टा । २ (च.) °त्यग्रूपत्वा° । ३ (ग. घ.) °ह्मज्ञानप्रा° । ४ (ग. घ.) °प्राप्यब्र° । ५ (क. ख.) कर्मकार्यापे° । ६ (क.) °ति । °मुक्ताविति ॥५९॥ ७ (ग. घ.) °ष्ट्रोरैक° । ८ (ग.) भयं श्रु° ।

द्वितीयं चेदविद्योत्थमेकं वस्तु स्वतो यदि ।
न स वेदैकधैवेति विभागोक्तिस्तदा भवेत् ॥ ६२ ॥

अभेदस्य पारमार्थिकत्वं भेदस्य भ्रान्तत्वमित्यभ्युपगमे सत्यथ योऽन्यां देव-
तामुपास्तेऽन्योसावन्योऽहमस्मीति न स वेदेति भेददर्शने तस्याप्यविद्याकृतत्वेन
भेदस्यावस्तुत्वोक्तिरेकधैवानुद्रष्टव्यमित्यभेदविधानं चोपपद्यतेऽतोऽपि जीवपर-
योरैक्यमभ्युपगन्तव्यमित्याह । द्वितीयमिति ॥ ६२ ॥

यदि तैमिरिकादन्यैर्द्वितीयो नेक्ष्यते शशी ॥ ६३ ॥
चन्द्र एक इति ज्ञानं तदा स्यात्पारमार्थिकम् ।
तद्गृह्यते द्वितीयं चेन्न सुषुप्तेऽग्रहः श्रुतेः ॥ ६४ ॥

यथाचन्द्रैकत्वज्ञाने सत्यदर्शनाच्चन्द्रद्वित्वस्य भ्रान्तिदर्शनासिद्धत्वं तथाद्वैतं
न कदाचिदपि न गृह्यते तस्मादभ्रान्तद्वैतमितिशङ्कते । यदीति । न हि
निर्दुष्टदृष्टिभिर्द्वितीयश्चन्द्रो दृश्यते तेन दोषजन्यभ्रान्तिविषयत्वाद्द्वितीयश्चन्द्रो
मिथ्येति युक्तं चन्द्रैक्यज्ञानस्य निर्दोषकरणजन्यत्वेन सम्यक्त्वाच्चन्द्रैक्यं पारमा-
र्थिकं न तथा द्वितीयं कदाचिन्न गृह्यते तस्माद्द्वैतस्य परमार्थत्वायोगाद्द्वैतस्यैव
परमार्थतेत्यर्थः । न तावत्सुषुप्त्यवस्थायां द्वैतस्य ग्रहोऽस्ति न तु तद्द्वितीयम-
स्तीतिश्रुतेरतो द्वैतस्य कदाचिद्ग्रहेऽपि कदाचिदग्रहाव्यभिचाराद्युक्तं मिथ्यात्व-
मिति दूषयति । न सुषुप्त इति ॥ ६३ ॥ ६४ ॥

न चेहान्यमनस्ता स्यात्सर्वेषामग्रहो यतः ।
अस्त्येवैतद्द्वितीयं चेद्ग्रहणात्स्वप्नबोधयोः ॥ ६५ ॥

सुषुप्ते विद्यमानस्यैव द्वैतस्यान्यमनस्कत्वादग्रहणं न स्वभावादित्याशङ्क्या-
ऽऽह । न चेति । यदि सुषुप्ते द्वैतस्याग्रहणादसत्त्वं तर्हि जाग्रत्स्वप्नयोर्ग्रहणात्तस्य
सत्त्वं किं न स्यादिति शङ्कते । अस्त्येवेति ॥ ६५ ॥

---

१ (ग. घ.) °तिभे° । २ (च.) °र्शनं त° । ३ (क. ख.) °विद्यया कृ° । ४ (ङ. च.) °पद्येतातो° । ५ (ख. ङ.) नेक्षते । ६ (ङ.) °म् । न गृह्य° । ७ (ग. घ.) सति द° । ८ (च.) °द्वितीयस्य । ९ (च.) °द्धत्वे त° । १० (ङ.) °यचन्द्रो । ११ (ग. घ.) °यद्वारा द्वि° । १२ (ङ.) °यचन्द्रो° । १३ (ग. घ.) °पज° ।

अविद्योत्थानतो नैवं तदा तद्भावभावतः ।
द्वयाबोधः सुषुप्तेऽपि त्वज्ञानादिति चेन्न तत् ॥
स्वाभाविकत्वात्तस्यापि निमित्तस्यानपेक्षणात् ॥६६॥

अज्ञोऽहमिति स्फुटतराविद्याप्रतिभाने द्वैतप्रतिभानात्तदभावे च तत्प्रतिभानाभावादविद्याकृतं द्वैतं न परमार्थतोऽस्तीति परिहरति । अविद्येति । यथाऽन्धकारावृतो घटादिर्विद्यमानोऽपि तदावृतत्वान्नोपलभ्यते तथा द्वैतमपि विद्यमानमेव सुषुप्त्यवस्थायामज्ञानावृतत्वादनुपलब्धमिति शङ्कते । द्वयेति । सौषुप्तस्याग्रहणस्य निमित्तनिरपेक्षत्वेन स्वभावतः सिद्धत्वान्न तत्र द्वैताग्रहणमावृतत्वप्रयुक्तमिति दूषयति । न तदिति ॥ ६६ ॥

अन्यापेक्षं हि यद्रूपं न तत्तस्य स्वतो भवेत् ।
विक्रियाऽविक्रिया त्वस्य तत्त्वमन्यानपेक्षणात् ॥६७॥

किंच ग्रहणस्य विक्रियात्वेन हेतुकृतत्वादस्वाभाविकत्वात्तद्विषयस्यापि द्वैतस्य दृश्यत्वादेव रज्जुसर्पादिवत्कल्पितत्वात्तस्य सुषुप्ते ग्रहणाभावादक्रियत्वमेवास्य स्वाभाविकं रूपमित्यभिप्रेत्याऽऽह । अन्यापेक्षं हीति ॥ ६७ ॥

स्वप्नवन्न सुषुप्तोऽतः स्वत एवाद्वयत्वतः ।
द्रष्टुर्दृष्टेर्न लोपः स्यात्सत्यमेवं श्रुतेर्वचः ॥ ६८ ॥

यथा स्वाप्नं रूपं मिथ्या तथा सौषुप्तमपि रूपं मिथ्यैवेति युक्तमवस्थावच्छिन्नत्वाविशेषादित्याशङ्क्याऽऽह । स्वप्नवदिति । अन्यापेक्षामन्तरेण सौषुप्तमात्मरूपं परमार्थतोऽद्वितीयत्वान्न स्वप्नतुल्यमित्यर्थः । विनाशमेवापीतो भवतीतिश्रवणादात्मैव सुषुप्ते नास्तीत्याशङ्क्य विनाशश्रुतेर्विशेषविज्ञानविनाशाभिप्रायत्वान्मैवमित्याह । द्रष्टुरिति ॥ ६८ ॥

आत्मनोऽन्यो भवेद्येषामीश्वरः कारणात्तथा ।
कार्ये भयानिवृत्तिः स्यादन्यहेतुत्वसंश्रयात् ॥ ६९ ॥

एवं जीवेश्वरयोरभेदपक्षं प्रसाध्य भेदपक्षे दोषान्तरमाह । आत्मन इति । जीवेश्वरयोर्भेदे कार्यकारणयोश्च भिन्नत्वे भेदेन दृष्टादीश्वराज्जीवस्य भयं भवेदन्यस्य हेतोरुपलब्धस्य भयहेतुत्वाद्द्वितीयाद्वै भयं भवतीत्यादिश्रुतेरित्यर्थः॥६९॥

१ (ग. घ.) °भानाद्द्वै°। २ (ग.) °स्य ग्र°। ३ (ग. घ.) °क्रियत्वं स्यात्त्वम्°। ४ (ङ.) °यात्वेन। ५ (च.) °व कल्पि°। ६ (क. च.) °दविक्रि°। ७ (ग.) °मेव श्रु°। ८ (ग. घ.) °त्वाद्विशे°। ९ (च) °त्मस्वरू°। १० (ग. घ.) °र्वाविश्रु°।

अन्यस्य भयहेतुत्वमधर्मापेक्षयेति चेद्व ।
मैवं तस्यापि तुल्यत्वान्निवृत्तेः स्यादसंभवः ॥ ७० ॥

ईश्वरस्यान्यत्वेऽपि सहायीभूताधर्माद्यभावान्न भयहेतुरिति शङ्कते । अन्य-
स्येति । सहकार्यभावादीश्वरस्य भयं प्रत्यकारणत्वमित्येवं नोपपद्यते सहायीभू-
ताधर्मादेरपि जीवगतस्य जीवत्वादौ कारणे सति सत्त्वस्य तुल्यत्वान्निवृत्तेर-
संभवो यस्माद्भवतीति दूषयति । मैवमिति ॥ ७० ॥

निर्निमित्तं भयं चेत्स्यान्न तस्यास्ति निवारणम् ।
ध्वंसेन वा निवृत्तिः स्यादात्मनो नेष्यते तथा ॥७१॥

संसारभयस्य निमित्तनिरपेक्षत्वान्न तस्येश्वरकृतत्वमिति शङ्कते । निर्नि-
मित्तमिति । तर्हि संसारभयं सदा स्यादिति दूषयति । न तस्येति । किंच
स्वाभाविकं भयमात्मन्यभ्युपगम्यते चेत्तस्याऽऽत्मनिवृत्त्यैव निवृत्तिः स्यान्न
चाऽऽत्मनो निवृत्तिर्वैदिकैरिष्यते तस्माद्भेदपक्षे मोक्षस्यैवानुपपत्तिरित्याह ।
ध्वंसेन वेति । वाशब्दश्चार्थे ॥ ७१ ॥

एकत्वपक्षे त्वेतेषां दोषो नान्यतमो भवेत् ।
भयस्याज्ञानहेतुत्वात्तन्निवृत्तौ निवर्तते ॥ ७२ ॥

अभेदपक्षे यथोक्तसर्वदोषराहित्यमित्याह । एकत्वेति । सर्वदा संसारित्वं न
कदाचिन्मुक्तत्वं वन्धहेतोर्मोक्षहेतोश्चाऽऽनर्थक्यं शास्त्रविरोधश्चेत्येतेषामिति या-
वत् । तत्र हेतुं सूचयति । भयस्येति ॥ ७२ ॥

अन्यहेतुः स्वतो वा स्याद्भयं नोभयथाऽपि हि ।
स्वातन्त्र्याभावादन्यस्मिन्स्वात्महानं च नेष्यते ॥७३॥

किंच भेदपक्षे भयस्यान्यकृतत्वमात्मकृतत्वं वेति विकल्प्योभयथाऽपि तन्निवृत्ति-
र्न संभवतीत्याह । अन्येति । अन्यस्मिन्भयनिमित्ते स्वीकृते सत्यात्मनः स्वात-
न्त्र्याभावादन्यनिमित्तं संसारभयं सदा स्यादेवेत्यन्यहेतुत्वपक्षे भयनिवृत्तिं साध-
यति । स्वातन्त्र्येति । आत्महेतुत्वपक्षे तु भयस्याऽऽत्मनाशानङ्गीकारात्तत्कृतं
भयं सदा संभाव्यतेत्याह । स्वात्मेति ॥ ७३ ॥

१ (ग. घ.) °त् । नैव । २ (क. ख. ङ.) °हायभू° । ३ (ग. च.) °त्येवं नो° । ४ (ग. घ.) °ति । नैव° । ५ (क. ख. ङ. च.) °ङ्कयति । नि° । ६ (ग.) °स्यात्मवात्म° । ७ (च.) °वे यस्मा° । ८ (ग. घ. ङ. च.) °सेनैवे° । ९ (क. ख. ङ.) °हेतुः स्व° । १० (ख. ग. घ. च.) °यानिवृ° । ११ (ख. ग. घ.) °भाव्येते° ।

अनिवर्त्यं स्वमात्मानं न भयस्य निराक्रिया ।
निवृत्तावपि नैव स्यान्निवृत्त्यैव समाप्तितः ॥ ७४ ॥

कुलालकृतस्य घटस्य कुलालनाशमन्तरेण नाशवदात्मकृतस्य भयस्याऽऽत्मनाशादृतेऽपि नाशः स्यादित्याशङ्क्याऽऽत्मनो भयं प्रति निरपेक्षहेतुत्वान्नैवमित्याह । अनिवर्त्येति । तर्हि स्वात्मनिवृत्त्या भयनिवृत्तिरित्याशङ्क्याऽऽत्मनो निवृत्त्या भयनिवृत्तावपि निवृत्तिरूपेणैवाऽऽत्मनः समाप्तत्वाद्भयनिवृत्तिफलेन फलितत्वायोगान्नैतद्युक्तमित्याह । निवृत्ताविति ॥ ७४ ॥

अविद्यामात्रहेतौ तु सर्वमेतत्समञ्जसम् ।
तस्यामसत्यां तन्न स्यात्सत्यामेव हि भीर्यतः ॥ ७५॥

त्वत्पक्षेऽपि यथोक्तं सर्वं समानमित्याशङ्क्यैकत्वपक्षे त्वेतेषामित्यत्रोक्तं स्मारयति । अविद्येति ॥ ७५ ॥

यदज्ञानाद्भयं यत्स्यात्तज्ज्ञानात्तत्कुतो भवेत् ।
रज्जुसर्पादिवत्तस्मादविद्यैव भयोद्भवः ॥ ७६ ॥

विदुषोऽपि भयदर्शनान्नाविद्याहेतुत्वं भयस्येत्याशङ्क्याऽऽह । यदज्ञानादिति । विदुषो भयस्य बाधितानुवृत्त्या भानेऽपि वस्तुतस्तदसंभवे फलितमाह । रज्जुसर्पेति ॥ ७६ ॥

विद्याविद्यात्मकं ब्रह्म मतं चेन्न विरोधतः ।
पृथक्क दृश्यमानत्वादात्मनो घटरूपवत् ॥ ७७ ॥

आत्मन्यविद्यया भयप्रतीतिर्विद्यया च तन्निवृत्तिरित्यङ्गीकारे विद्याविद्ये च तत्र स्वीकृते स्यातामित्याशङ्क्य तयोरात्मनि स्वरूपत्वं धर्मत्वं वेति विकल्प्याद्यमनूद्य दूषयति । विद्येति । तयोरात्मस्याभावे हेत्वन्तरमाह । पृथक्चेति ॥ ७७ ॥

प्रत्यक्षेण हि दृश्येते विद्याविद्ये मनोगते ।
न तयोरात्मधर्मत्वं तस्मात्ते नामरूपयोः ॥ ७८ ॥

कल्पान्तरं प्रत्याह । प्रत्यक्षेणेति । विद्या कादाचित्कं ज्ञानमविद्या मिथ्याज्ञानमग्रहणं च तयोर्मनोनिष्ठत्वानुभवात्तदुपादानभूतानाद्यनिर्वाच्याज्ञानगतत्वमेव साश्रययोर्विद्याविद्ययोरित्याह । तस्मादिति । नामरूपशब्देनानाद्यज्ञानमुच्यते ॥ ७८ ॥

---

१ (ग घ. च) °त्मनि° । २ (ख ग. घ.) °लितायो° । ३ (ग. घ.) °ह्म गतं ।

अन्तरा नामरूपे ये ब्रह्मबाह्ये तयोर्हि तत् ।
न स्तो ब्रह्मणि ते भानावुदयास्तमयाविव ॥ ७९ ॥

नामरूपयोर्ब्रह्मणश्च मिथो विलक्षणत्वे प्रमाणमाह । अन्तरेति । ये नामरूपे
ते ब्रह्मणः सकाशाद्बाह्ये विलक्षणे तयोश्च नामरूपयोस्तद्ब्रह्मान्तरा विलक्षणमि-
त्यर्थः । विलक्षणत्वेऽपि नामरूपयोर्ब्रह्मणि संगतिमाशङ्क्यासङ्गत्वश्रुतिविरोधा-
न्नैवमित्याह । न स्त इति ॥ ७९ ॥

कर्मकर्तृकृतैकस्य दोषः स्यादिति चेन्न तत् ।
संक्रान्तेर्ज्ञानमात्रत्वात्तद्धि भेदनिरासिनः ॥ ८० ॥

यत्तु जीवब्रह्मणोरभेदश्चेदेतमानन्दमयमात्मानमुपसंक्रामतीत्यत्र कर्मकर्तृत्व-
विरोधः स्यादिति तदनूद्य दूषयति । कर्मेति । अत्र हि वाक्ये संक्रान्तेरहं
ब्रह्मास्मीति ज्ञानमात्रत्वात्तस्य च ब्रह्मात्मन्यध्यस्तसकार्याविद्यानिवर्तकत्वात्मा-
प्तायां विद्यायां कर्मकर्तृत्वविरोधाशङ्का नास्तीति दूषणमेव प्रपञ्चयति । संक्रान्ते-
रिति ॥ ८० ॥

सुखदुःखादिसंबद्धमात्माऽऽत्मानं न वेत्ति चेत् ।
भवतो मुमुक्षुता कस्माद्विस्रम्भादेतदुच्यताम् ॥८१॥

ब्रह्मात्मनि नित्यमुक्ते संसारस्यैवाभावात्कुतस्तन्निवृत्तिर्विद्याफलमित्याश-
ङ्क्य ब्रह्मव्यतिरिक्तसंसार्यभावाद्ब्रह्मणः संसाराभावे मुमुक्षोरभावान्मोक्षशास्त्रान-
र्थक्यं स्यादित्याह । सुखेति ॥ ८१ ॥

जाग्रत्स्वप्नसुषुप्तेषु वस्तुवृत्तानुरोधतः ।
श्यामः सुखी न वेद्मीति वेत्त्यात्मानं प्रसिद्धितः ॥८२॥

न केवलं मोक्षशास्त्रानुपपत्त्यैव ब्रह्मणि संसारसिद्धिः किंतु स्वानुभववशाद-
पीत्याह । जाग्रदिति । वस्तुवृत्तानुरोधतः प्रसिद्धित इति संबन्धः । वस्तुनो वृत्तं
स्वरूपभूतं चैतन्यं तदनुसारात्प्रसिद्धिः स्वानुभवस्तद्वशादिति यावत् ॥८२॥

कार्यकारणहानाच्च न विभागः परात्मनि ।
अभावात्कर्मकर्त्रादेर्बोध एवावशिष्यते ॥ ८३ ॥

ब्रह्मात्मन्युपपत्तेरनुभवाच्च संसारसमारोपमुक्त्वा कर्मकर्तृविरोधाभावे हेत्व-
न्तरमाह । कार्येति । आत्मनि कर्मकर्तृकरणादिविभागाभावे किमवशिष्टं भवती-
त्याशङ्क्याऽऽह । अभावादिति ॥ ८३ ॥

१ (ग. घ.) °णोर्भेद° । २ (च.) °ति निज्ञा° । ३ (क.) °रोवश° । ४ (क.
ख.) संपन्नमा° । ५ (क. ख.) °द्विश्रम्भा° ।

कारकाण्युपमृद्नाति विद्या बुद्धिमिवोषरे ।
कारकत्वमविद्योत्थं स्वतश्चाकारकात्मता ॥ ८४ ॥

किंच कूटस्थस्याऽऽत्मनः स्वाभाविकत्वात्कर्तृत्वादेरविद्याकृतत्वात्तन्निवृत्त्या निवृत्तेर्न कर्मकर्तृत्वविरोधाशङ्काऽस्तीत्याह । कारकाणीति ॥ ८४ ॥

यद्धि यस्य स्वतो रूपं न तत्प्राप्तावपेक्षते ।
क्रियामन्यनिमित्तत्वादपेक्षा कर्त्रपह्नवे ॥ ८५ ॥

आत्मरूपमेव कूटस्थत्वं क्रियापेक्षमित्याशङ्क्याऽऽह । यद्धीति । विक्रियाया उत्पत्त्यादिरूपायां क्रियाया निमित्तत्वादितिहेतुमाह । अन्येति । तर्हि त्वत्पक्षे कर्मशास्त्रमनर्थकमित्याशङ्क्य बुद्धिशुद्धिद्वारेण सर्वजगन्निर्माणकारणाज्ञानापनोदिज्ञानप्राप्तौ कर्मापेक्षेत्यवैयर्थ्यं कर्मकाण्डस्येत्याह । अपेक्षेति ॥८५॥

नैवेहान्नमयात्मानं जलूकावत्परोऽञ्जसा ।
उपसंक्रामतीत्यस्माद्गौणी संक्रान्तिरिष्यते ॥ ८६ ॥

किमित्युपसंक्रमणं गौण्या वृत्त्या ज्ञानमात्रमिति व्याख्यातं प्रसिद्धमेवोपसंक्रमणं कस्मान्न स्यादित्याशङ्क्याऽऽह । नैवेति ॥ ८६ ॥

बहिःप्रवृत्तेः संक्रान्तिः प्रत्यावृत्त्येति चेन्मतम् ।
मनोमयादिवन्नैवं विरुद्धा स्वात्मनि क्रिया ॥ ८७ ॥

यथा मनो बुद्धिर्वा स्ववृत्तिद्वारेण विषयपर्यन्तं गत्वा तस्मात्प्रत्यावृत्त्य स्वात्मानमेवोपसंक्रामति । तथात्माऽपि मनोद्वारेण देहादौ बहिर्भूत्वा ततो निष्क्रम्याऽऽत्मानमेव प्रविशतीति मुख्या संक्रान्तिरत्र संभवतीति शङ्कते । बहिरिति । कर्मकर्तृभावस्यैकत्र विरुद्धत्वान्न हि तदिति दूषयति । नैवमिति ॥ ८७ ॥

स्फुरन्ती न जलूकापि स्वात्मानं स्वात्मनाऽञ्जसा ।
उपसंक्रामतीत्यत्र निर्भागत्वात्तथाऽपि न ॥ ८८ ॥

विरोधमेव दृष्टान्तेन स्पष्टयति । स्फुरन्तीति । जलूकायाः सावयवत्वादेकेनांशेन संक्रमणे कर्तृत्वमंशान्तरेण कर्मत्वं चाविरुद्धमित्याशङ्कामङ्गीकृत्य नैवमात्मनि संभवति । निरवयवत्वादित्याह । अत्रेति ॥ ८८ ॥

---

१ (ख. ग. घ. ङ.) °वोखरे । २ (ग. घ.) °स्थत्वस्या° । ३ (ग. घ.) °न्निवृत्ते° । ४ (ग. घ.) °त्मस्वरू° । ५ (क. ख.) °स्थत्वक्रि° । ६ (ख.) °मुत्पाद्यादिरू° । ७ (क. ख.) जलौका° । ८ (ङ.) मुख्यसंक्रामविर° । ९ (क. ख.) °° । १० (ख. ग.) °शङ्क्याङ्गी° (घ. च.) °शङ्क्यम° ।

तस्मात्प्राप्तिर्न संक्रान्तिर्न च कोशात्मकर्तृका ।
पञ्चकोशातिरिक्तात्मकर्तृका परिशिष्यते ॥ ८९ ॥

आत्मनि मुख्यसंक्रान्तेरतिक्रमणस्य प्राप्तेर्वा यथोक्तन्यायेनायुक्तत्वाद्वाक्या-
र्थज्ञानमेवात्र संक्रमणं न च तत्कोशपञ्चककर्तृकं पञ्चानां कोशानामचेतनत्वा-
ज्ज्ञानकर्तृत्वायोगादित्युपसंहरति । तस्मादिति । तर्हि किंकर्तृका यथोक्ता
संक्रान्तिरित्याशङ्क्याह । पञ्चकोशेति । कार्यकारणात्मककोशपञ्चकव्यतिरि-
क्तकूटस्थचिन्मात्रब्रह्मकर्तृका संक्रान्तिरहं ब्रह्मास्मीतिज्ञानरूपा वाक्यकृता
स्वीकृता न च कूटस्थस्याज्ञानमन्तरेण कर्तृत्वमित्यज्ञाने ज्ञानान्निवृत्ते तदुत्थं कर्तृ-
त्वमपि निवृत्तमेवेत्यात्मनः स्वेन निर्विशेषात्मनाऽवस्थानसिद्धिरित्यर्थः ॥८९॥

कोशातिरिक्तरूपस्य सर्वान्तरतमात्मनः ।
अक्रियस्यैव संक्रान्तिर्नभोवत्स्यात्परात्मनः ॥ ९० ॥

आकाशमवकाशं ददातीतिवदात्मनो ज्ञानकर्तृत्वं कूटस्थस्याज्ञानोत्थमास्थे-
यमिति साधयति । कोशेति ॥ ९० ॥

गुहाश्रयाभिसंबन्धो योऽविद्याविभ्रमाद्भवेत् ।
आत्मज्ञानाद्भ्रमध्वस्तौ संक्रान्तिरिति गीरियम् ॥९१॥

आत्मनि संक्रमणमौपचारिकं न मुख्यमित्यत्रैव हेत्वन्तरमाह । गुहाश्रयेति ।
गुहा बुद्धिराश्रयो यस्याभासस्य तद्वता साभासेन कोशपञ्चकेनात्मनो यः संब-
न्धोऽविद्याकृतविभ्रमप्रयुक्तो भवति स पुनर्वाक्योत्थात्मज्ञानात्तदज्ञाननिवृत्त्या
तदुत्थविभ्रमध्वस्तौ कोशपञ्चकातिक्रमणादात्मा ब्रह्मैव भवतीत्यतः संक्रान्ति-
रित्यौपचारिको व्यपदेश इत्यर्थः ॥ ९१ ॥

तस्मात्सत्यमनन्तं यत्सर्वदाऽविकलेक्षणम् ।
तदस्मीतिप्रबोधार्थं बहुस्यामिति कल्प्यते ॥ ९२ ॥

ब्रह्मात्मनि कर्तृत्वं वास्तवमेव सृष्टिश्रुतिवशादेष्टव्यमित्याशङ्क्य प्रदर्शितम-
कारेण ज्ञानोत्पत्त्यर्थत्वेन सृष्टिप्रवेशादेरारोपितत्वान्मैवमित्याह । तस्मादिति ॥९२॥

पञ्चकोशातिवर्त्यात्मा ज्ञानभानूदयात्क्रमात् ।
जग्ध्वा पञ्चापि कोशांस्तान्निर्वात्यात्मनि दीपवत् ॥९३॥

ज्ञानफलमिदानीमुपसंहरति । पञ्चकोशेति ॥ ९३ ॥

---

१ (ग. घ.) °त्वमज्ञा । २ (ग. घ.) °मेवात्म । ३ (ग. घ.) गीयते ॥९१॥
४ (क. च.) °द्वत्तभा° । ५ (ग. घ.) °नर्वाक्यो° । ६ (ख. ङ.) कल्पते
॥ ९२ ॥ ७ (ख.) °र्यात्मज्ञा° ।

कारकाण्युपमृद्गाति विद्या बुद्धिमिवोपरे ।
कारकत्वमविद्योत्थं स्वतश्चाकारकात्मता ॥ ८४ ॥

किंच कूटस्थस्याऽऽत्मनः स्वाभाविकत्वात्कर्तृत्वादेरविद्याकृतत्वात्तन्निवृत्त्या निवृत्तेर्न कर्मकर्तृत्वविरोधाशङ्काऽस्तीत्याह । कारकाणीति ॥ ८४ ॥

यद्धि यस्य स्वतो रूपं न तत्प्राप्तावपेक्षते ।
क्रियामन्यनिमित्तत्वादपेक्षा कर्त्रपह्नवे ॥ ८५ ॥

आत्मरूपमेव कूटस्थत्वं क्रियापेक्षमित्याशङ्क्याऽऽह । यद्धीति । विक्रियाप्राप्त्युत्पत्त्यादिरूपायां क्रियाया निमित्तत्वादितिहेतुमाह । अन्येति । तर्हि त्वत्पक्षे कर्मशास्त्रमनर्थकमित्याशङ्क्य बुद्धिशुद्धिद्वारेण सर्वजगन्निर्माणकारणाज्ञानापनोदिज्ञानप्राप्तौ कर्मापेक्षेत्यवैयर्थ्यं कर्मकाण्डस्येत्याह । अपेक्षेति ॥८५॥

नैवेहान्नमयात्मानं जलूकावत्परोञ्जसा ।
उपसंक्रामतीत्यस्माद्गौणी संक्रान्तिरिष्यते ॥ ८६ ॥

किमित्युपसंक्रमणं गौण्या वृत्त्या ज्ञानमात्रमिति व्याख्यातं प्रसिद्धमेवोपसंक्रमणं कस्मान्न स्यादित्याशङ्क्याऽऽह । नैवेति ॥ ८६ ॥

बहिःप्रवृत्तेः संक्रान्तिः प्रत्यान्त्येति चेन्मतम् ।
मनोमयादिवन्नैवं विरुद्धा स्वात्मनि क्रिया ॥ ८७ ॥

यथा मनो बुद्धिर्वा स्ववृत्तिद्वारेण विषयपर्यन्तं गत्वा तस्मात्प्रत्यावृत्य स्वात्मानमेवोपसंक्रामति । तथात्माऽपि मनोद्वारेण देहादौ बहिर्भूत्वा ततो निष्क्रम्याऽऽत्मानमेव प्रविशतीति मुख्या संक्रान्तिरत्र संभवतीति शङ्कते । बहिरिति । कर्मकर्तृभावस्यैकत्र विरुद्धत्वान्न हि तदिति दूषयति । नैवमिति ॥ ८७ ॥

स्फुरन्ती न जलूकापि स्वात्मानं स्वात्मनाऽञ्जसा ।
उपसंक्रामतीत्यत्र निर्भागत्वात्तथाऽपि न ॥ ८८ ॥

विरोधमेव दृष्टान्तेन स्पष्टयति । स्फुरन्तीति । जलूकायाः सावयवत्वादेकेनांशेन संक्रमणे कर्तृत्वमंशान्तरेण कर्मत्वं चाविरुद्धमित्याशङ्कामङ्गीकृत्य नैवमात्मनि संभवति । निरवयवत्वादित्याह । अत्रेति ॥ ८८ ॥

---

१ (ख. ग. घ. ङ.) °वोत्थरे । २ (ग. घ.) °स्थत्वस्या° । ३ (ग. घ.) °न्निवृत्ते° । ४ (ग. घ.) °त्मस्वरू° । ५ (क. ख.) °स्थत्वक्रि° । ६ (ख.) °मुत्पाद्यादिरू° । ७ (क. ख.) जलौका° । ८ (ङ.) मुख्यसंक्रामविर° । ९ (क. ख.) °र्तृत्वमा° । १० (ख. ग.) °शङ्क्याङ्गी° (घ. च.) °शङ्कयम° ।

न मातृयायिनो यस्मात्प्रत्यया बुद्धिकर्तृकाः ।
तन्निवृत्तौ निवर्तन्ते तस्मात्ते मनसा सह ॥ ९९ ॥

मनसा सहेतिभागस्यार्थमाह । नेत्यादिना । प्रत्यया विपरिणामा बुद्धि-
कर्तृकाः सर्वे बुद्धितद्वृत्तिसाक्षिणि मातारं यस्माद्गन्तुं न पारयन्ति तस्मात्तेषां
प्रत्ययानां साक्षिणः सकाशान्निवृत्तौ तज्जनकाः शब्दाः स्वकार्यभूतैर्मनःशब्दि-
तैस्तैरेव प्रत्ययैः सह निवर्तन्ते । अतः शब्दतज्ज्ञानयोरविषयो ब्रह्मेत्यर्थः ॥९९॥

यतो वाचोऽभिधानानि प्रयुक्तान्युपलब्धये ।
सर्वाण्यनभिधायैव निवर्तन्तेऽवबोध्य च ॥ ६०० ॥

तर्हि कुतो ब्रह्मणः शास्त्रप्रमाणकत्वमित्याशङ्क्य लक्षणावृत्त्या वचांसि शा-
स्त्रस्य बोधकत्वमित्युक्तं स्मारयति । यत इति । वाचकत्वाभावेऽपि लक्षणया
बोधमाधायैव निवृत्तेर्न शब्दप्रमाणकत्वहानिरितिशेषः ॥ ६०० ॥

उदयादि च यच्छब्दैर्ज्ञानमाकारवद्धियः ।
स्वतो बुद्धे तदप्राप्य नाम्ना सह निवर्तते ॥ १ ॥

ज्ञानेन सह शब्दानां निवृत्तिमुक्त्वा शब्देन सह ज्ञानस्य निवृत्तिं दर्शयति ।
उदयादीति ॥ १ ॥

माहात्म्यमेतच्छब्दस्य यदविद्यां निरस्यति ।
सुपुप्त इव निद्राया दुर्बलत्वाच्च बाध्यते ॥ २ ॥

ब्रह्मणः शब्दतज्जन्यज्ञानाविषयत्वे कथं तद्गताविद्यानिवर्तकत्वं शब्दस्य
सिद्ध्यतीत्याशङ्क्याह । माहात्म्यमिति । तत्त्वमस्यादिवाक्यस्यात्मविषयत्वम-
न्तरेण तद्गताविद्यानिवर्तकत्वे दृष्टान्तमाह । सुपुप्त इति । यथा सुपुप्ते पुरुषे
देवदत्तोत्तिष्ठेत्यादिस्तद्बोधकः शब्दस्तमविषयीकुर्वन्नेव तद्गतनिद्राया निवर्तको
दृश्यते तथाऽत्रापीत्यर्थः ॥ २ ॥

---

१ ( ग. घ. ) °तद्गति गा° । २ ( ग. घ. ) °वसन्न° । ३ ( ङ. च. ) °णत्त° ।
४ ( ग. घ. ) °ज्ञापि° ।

तदेतस्मिन्यथोक्तेऽर्थे श्लोको मन्त्रोऽपि विद्यते ।
अशेषानन्दवल्ल्यर्थसारस्यास्य प्रकाशकः ॥ ९४ ॥

निरतिशयानन्दरूपं निःशेषानर्थनिवृत्त्युपलक्षितं ब्रह्म तदज्ञानादात्मा संसरति तज्ज्ञानाच्च मुक्तो भवतीत्यस्मिन्ब्राह्मणोक्तेऽर्थे तदप्येष श्लोको भवतीति-मन्त्रमवतारयति । तदेतस्मिन्निति ॥ ९४ ॥ इत्यष्टमः खण्डः ॥ ८ ॥

यतो वाचो निवर्तन्ते तद्ब्रह्मेति प्रतीयताम् ॥९५॥
शब्दप्रवृत्तिहेतूनां प्रत्यगात्मन्यसंभवात् ।
शब्दार्थासंभवं प्राह ह्यप्राप्येत्यादराच्छ्रुतिः ॥ ९६ ॥

१ शब्दातिरिक्तप्रमाणागम्यं ब्रह्माहमस्मीति प्रतिपत्तव्यमित्यस्मिन्नर्थे यत इत्यादिवाक्यमाकाङ्क्षां पूरयन्योजयति । यत इति ॥ ९५ ॥

अप्राप्येत्यत्र विवक्षितमर्थं कथयति । शब्दप्रवृत्तीति । षष्ठीगुणक्रियाजातिरूपः शब्दप्रवृत्तिहेतवः शब्दार्थासंभवः शब्दवाच्यत्वासंभवः ॥ ९६ ॥

तस्माल्लक्षणवाचीनि सत्यादीनि पुराऽब्रुवम् ।
विशेषणविशेष्याणां निषेधात्कोशशायिनाम् ॥ ९७ ॥

कथं तर्हि ब्रह्मणः शब्दप्रमाणकत्वमित्याशङ्क्योपक्रमे दर्शितं स्मारयति । तस्मादिति । वाच्यत्वासंभवादिति यावत् ॥ ९७ ॥

निर्ममं निरहंकारं ब्रह्मैवास्मेत्युपास्महे ।
द्रव्यादिविषये यानि प्रयुक्तानि प्रयोक्तृभिः ॥
स्वार्थहेतोर्निवृत्त्यैव निवर्तन्ते वचांस्यतः ॥ ९८ ॥

लक्षणावृत्त्या बोधकेशब्दवशादुत्पन्नज्ञानात्प्रत्यक्त्वेनैव ब्रह्मप्रतिपत्तिरिति न्यं दर्शयति । निर्ममिति । यत इत्यादिवाक्यस्यार्थं पूर्वोक्तमुपसंहरति । नैव-दीति । यानि लोके द्रव्यगुणाद्यनात्मविषये श्रोतृबुद्धिसिद्ध्यर्थं प्रयोक्तृभि-र्वचांसि प्रयुक्तानि प्रतीयन्ते तानि स्वार्थे प्रवृत्तिहेतोः षष्ठ्यादेर्निवृत्त्यैव

४ ( ग. ॰वर्तन्ते तस्मान्न ब्रह्मणो वाच्यतेत्यर्थः ॥ ९८ ॥
७ ( क. ख. ;
१० ( ख. ग. ) १ ( ग. घ. ङ. ) ॰कत्व॰ ।

न मातृयायिनो यस्मात्प्रत्यया बुद्धिकर्तृकाः ।
तन्निवृत्तौ निवर्तन्ते तस्मात्ते मनसा सह ॥ ९९ ॥

मनसा सहेतिभागस्यार्थमाह । नेत्यादिना । प्रत्यया विपरिणामा बुद्धिकर्तृकाः सर्वे बुद्धितद्वृत्तिसाक्षिणि मातरि यस्माद्गन्तुं न पारयन्ति तस्मात्तेषां प्रत्ययानां साक्षिणः सकाशान्निवृत्तौ तज्जनकाः शब्दाः स्वकार्यभूतैर्मनःशब्दितैस्तैरेव प्रत्ययैः सह निवर्तन्ते । अतः शब्दतज्ज्ञानयोरविषयो ब्रह्मेत्यर्थः ॥ ९९ ॥

यतो वाचोऽभिधानानि प्रयुक्तान्युपलब्धये ।
सर्वाण्यनभिधायैव निवर्तन्तेऽवबोध्य च ॥ ६०० ॥

तर्हि कुतो ब्रह्मणः शास्त्रप्रमाणकत्वमित्याशङ्क्य लक्षणावृत्त्या ब्रह्मणि शास्त्रस्य बोधकत्वमित्युक्तं स्मारयति । यत इति । वाचकत्वाभावेऽपि लक्षणया बोधमाधायैव निवृत्तेर्न शब्दप्रमाणकत्वहानिरितिशेषः ॥ ६०० ॥

उदयादि च यच्छब्दैर्ज्ञानमाकारवद्धियः ।
स्वतो बुद्धे तदप्राप्य नाम्ना सह निवर्तते ॥ १ ॥

ज्ञानेन सह शब्दानां निवृत्तिमुक्त्वा शब्देन सह ज्ञानस्य निवृत्तिं दर्शयति । उदयादीति ॥ १ ॥

माहात्म्यमेतच्छब्दस्य यदविद्यां निरस्यति ।
सुषुप्त इव निद्राया दुर्बलत्वाच्च बाध्यते ॥ २ ॥

ब्रह्मणः शब्दतज्जन्यज्ञानाविषयत्वे कथं तद्गताविद्यानिवर्तकत्वं शब्दस्य सिद्ध्यतीत्याशङ्क्याह । माहात्म्यमिति । तत्त्वमस्यादिवाक्यस्यात्मविषयत्वमन्तरेण तद्गताविद्यानिवर्तकत्वे दृष्टान्तमाह । सुषुप्त इति । यथा सुषुप्ते पुरुषे देवदत्तोत्तिष्ठेत्यादिस्तद्बोधकः शब्दस्तमविषयीकुर्वन्नेव तद्गतनिद्राया निवर्तको दृश्यते तथाऽत्रापीत्यर्थः ॥ २ ॥

---

१ (ग घ) °वद्गति मा°। २ (ग घ) °तत्तन्°। ३ (ङ. च.) °णत्व°।
४ (ग. घ.) °न्यवि°।

दुर्बलत्वादविद्याया आत्मत्वाद्बोधरूपिणः ।
शब्दशक्तेरचिन्त्यत्वाद्विद्मस्तं मोहहानतः ॥ ३ ॥

अविद्याया दुर्बलत्वाच्च प्रत्यगात्मनि शब्दोत्थविद्या तद्बाधिकेत्याह । दुर्बलत्वाच्चेति । दार्ष्टान्तिकं प्रपञ्चयति । दुर्बलत्वादिति । बोधैकरसस्यात्मत्वात्तत्राविद्याया दुस्थत्वाद्विषमन्त्रादिषु दृष्टत्वादेव शब्दसामर्थ्यस्याचिन्त्यत्वादात्मनो विषयीकरणमन्तरेण तदाकारज्ञानोदयमात्रेण तत्राविद्यां शब्दो निवर्तयतीत्यर्थः॥३॥

अगृहीत्वैव संबन्धमभिधानाभिधेययोः ।
हित्वा निद्रां प्रबुध्यन्ते सुषुप्ते बोधिताः परैः ॥ ४ ॥

सुषुप्तदृष्टान्तं पूर्वोपदिष्टं प्रपञ्चयति । अगृहीत्वैवेति । सुषुप्ते हि स्थाने पार्श्वस्थैर्बोधिताः सुषुप्तास्तत्काले शब्दार्थयोः संबन्धं पूर्वविदितमपि स्मरणेनाप्रतिपद्यैव शब्दोत्थज्ञानान्निद्रां परित्यज्योत्तिष्ठन्तीत्यर्थः ॥ ४ ॥

जाग्रद्वन्न यतः शब्दं सुषुप्ते वेत्ति कश्चन ।
ध्वस्तेऽतो वचसाऽज्ञाने ब्रह्मास्मीति भवेन्मतिः ॥५॥

सुषुप्तिकाले संबन्धास्मरणे शब्दास्मरणं कारणमाह । जाग्रद्वदिति । यथा सुषुप्तिकाले संबन्धस्मरणमन्तरेण फलवती शब्दार्थप्रतिपत्तिर्दृश्यते तथाऽखण्डैकरसवाक्यार्थान्वयित्वमाद्यर्थे संबन्धग्रहणादृते एव शबले त्वमाद्यर्थे शक्तिग्रहणमात्रेण लक्षणावृत्त्या प्रत्यग्भूते ब्रह्मण्यविषये शब्दो बुद्धिं जनयति तया बुद्ध्या ध्वस्ते सत्यज्ञाने ब्रह्माहमस्मीत्यनुभवो भवतीत्याह । ध्वस्त इति ॥ ५ ॥

नाभेदः क्रिययोरत्र क्रियातत्फलभेदतः ।
किं पूर्वमितिचोद्यस्य नात्रातः संभवो भवेत् ॥ ६ ॥

ज्ञानस्य कारणत्वादज्ञानध्वंसस्य कार्यत्वात्कार्यकारणयोश्च पूर्वापरीभावस्य व्यवस्थितत्वाच्चोद्याभासस्य निरवकाशत्वमित्याह । नेत्यादिना ॥ ६ ॥

अविद्याघातिनः शब्दादहं ब्रह्मेतिधीर्भवेत् ।
नश्यत्यविद्यया सार्धं हत्वा रोगमिवौषधम् ॥ ७ ॥

ज्ञानस्याज्ञाननिवर्तकत्वेपि निवर्तकान्तरं तस्य मृग्यमित्याशङ्क्याह । अविद्येति ॥ ७ ॥

१ (ग. घ. च.) °ब्दोत्थावि°। २ (ग. घ.) पूर्वं विहित° (च.) पूर्वगृहित। ३ (ग. घ.) °रणमम°। ४ (ङ.) °पुमो वे°। ५ (ग. घ.) °ले शब्दम°। ६ (ङ.) न भे°। ७ (ग. घ.) °ब्दापादं°।

अवशिष्टं स्वतो बुद्धं शुद्धं मुक्तं ततो भवेत् ।
नातः स्याद्भावनापेक्षा नापि मानान्तरं प्रति ॥ ८ ॥

सकार्याविद्यानिवृत्तौ किमवशिष्यते तदाह । अवशिष्टमिति । यथोक्तस्य वस्तुनोऽवशिष्टत्वे तत्र नियोगभावनयोरन्यतरापेक्षा मानान्तरापेक्षा वा नावतरतीति विचारान्तरं प्रस्तौति । नात इति । भावनाशब्देन नियोगोऽपि गृह्यते नित्यत्वादुक्तस्य मुक्तिरूपस्य वस्तुनो नियोगभावनयोरपेक्षा न युक्ता बुद्धत्वान्मानान्तरं प्रत्यपि नापेक्षा तत्र सिद्ध्यतीत्यर्थः ॥ ८ ॥

अलौकिकत्वाद्बोधस्य स्वतश्चावगमात्मनः ।
बोध्ये हि लौकिकेऽपेक्षा परतोऽवगतौ तथा ॥ ९ ॥

मानान्तरायोग्यत्वाच्चोक्ते वस्तुनि तदपेक्षा नास्तीत्याह । अलौकिकत्वादिति । तत्रैव हेत्वन्तरं पूर्वोक्तं स्मारयति । स्वतश्चेति । मानान्तरापेक्षा तर्हि कुत्रेत्याशङ्क्य मानान्तरयोग्ये स्वप्रकाशत्वरहिते च तदपेक्षेत्याह । बोध्ये हीति ॥ ९ ॥

नद्यास्तीरे फलानीव प्रत्यक्षाद्यनपेक्षतः ।
किमिवेहान्यमानेषु तवापेक्षाऽभिधाश्रुतेः ॥ १० ॥

उक्तस्य वस्तुनो मानान्तरापेक्षाभावं व्यतिरेकदृष्टान्तेन स्फोरयति । नद्या इति । यथा नद्यास्तीरे फलानि सन्तीति लौकिकाभिधाश्रुतेराप्तप्रयुक्ताया मूलप्रमाणापेक्षा दृश्यते न तथा तत्त्वमस्याद्यभिधाश्रुतेरन्यमानेषु तवापेक्षा युक्ता तदर्थे प्रत्यक्षाद्यपेक्षाया वक्तुमशक्यत्वादतो वस्तु तन्मानं चानपेक्षमित्यर्थः ॥ १० ॥

प्रमाता च प्रमाणं च प्रमेयो निश्चितिस्तथा ।
यत्सांनिध्यात्प्रसिध्यन्ति तत्सिद्धौ किमपेक्षते ॥११॥

किंच सर्वसाधकत्वात्पूर्वोक्तस्य वस्तुनो नास्ति मानान्तरापेक्षत्वमित्याह । प्रमाता चेति ॥ ११ ॥

---

१ (ख. ग. घ.) °द्बोध्यस्य । २ (ग. घ.) °रानपेक्षत्वा° । ३ (ङ.) °क्षकः । किं° । ४ (क ख.) °रे पक्व फ° । ५ (क) °पेक्षितमि° ।

जाग्रत्स्वप्नसुषुप्तेषु घटोऽयमितिसंविदः ।
व्यवधानं न चेहास्ति तद्भावाभावसाक्षितः ॥ १२ ॥

यथा घटोयमितिसंविदो देशकालज्ञानबुद्धिवृत्तिलक्षणं व्यवधानमस्ति न तथा जागरितायवस्थात्रये प्रत्यगात्मनः सिद्धौ किंचिद्व्यवधानमुपलभ्यतेऽतो व्यवधानभावाभावसाक्षित्वादात्मनः सदाभानान्न तत्र मानान्तरापेक्षेत्याह । जाग्रदिति ॥ १२ ॥

इदमेवमिदं नैवमितिबुद्धिर्विभागभाक् ।
अनात्मिकात्मवत्यत्र येनासौ किमपेक्षते ॥ १३ ॥

किंचेदं कर्तव्यमिदं न कर्तव्यमित्येवंप्रकारा बुद्धिर्भागभागिनी स्वारस्येन स्वरूपशून्या येन चिदात्मना स्वरूपवत्यालक्ष्यते नासावात्मा भावनां नियोगं मानान्तरं वा किंचिदपेक्षितुं क्षमते तस्य सर्वप्रकारबुद्धिसत्ताप्रदत्वादित्याह । इदमिति ॥ १३ ॥

कर्त्रादिव्यापृतेः पूर्वमसंकीर्ण उपाधिभिः ।
अविक्षिप्तो ह्यसंमुप्तोऽनुभवः किमपेक्षते ॥ १४ ॥

कर्त्रादिकारकव्यापारात्पूर्वमेव स्वापादावात्मनः सद्भावोपलब्धेश्च न तत्सिद्धौ नियोगभावनामानान्तरेष्वपेक्षास्तीत्याह । कर्त्रादीति ॥ १४ ॥

अभिधेयं न यद्वस्तु प्रत्ययैश्च न ढौकते ।
नियुक्तोऽपि नियोगेन कथं तद्द्रष्टुमर्हति ॥ १५ ॥

किंचात्मनो नियोगापेक्षा न स्वसत्तासिद्धये युक्ता तदीयसत्ताया नित्यत्वान्न च तद्दर्शनाय नियोगापेक्षा संभवतीत्याह । अभिधेयमिति ॥ १५ ॥

अपि मानान्तरप्राप्तं वस्तुवृत्तं निवर्तयेत् ।
नियोगार्थानुरोधेन यदि वस्त्ववबोध्यते ॥ १६ ॥

अपिच वैधज्ञानानुरोधेन यदि वस्तुसिद्धिरिष्यते तदा तत्त्वमस्यादिवाक्यं द्रष्टव्यादिवाक्यापेक्षया मानान्तरं तेनावगतं यत्प्रत्यग्भूतं ब्रह्म तदयं वादी निराकुर्यान्नियोगानुरोधेन वस्तुबोधने तत्त्वमस्यादिवाक्यस्यापि नियोगसिद्धावेवोपक्षीणत्वादन्यपरस्य प्रत्यक्षादिविरोधे वस्तुनि मानत्वानुपपत्तेरित्याह । अपि मानान्तरेति ॥ १६ ॥

---

१ (क. ख.) °भावान्न । २ (ग. घ.) °प्रमातृत्वा° (च.) °प्रदातृत्वा° । ३ (ग.) °पेक्ष्यते । ४ (ग. घ.) °यस्तु न । ५ (च.) च दर्श° । ६ (ग. घ. ङ.) °गानुप्रवेशेन । ७ (ग. घ.) °पेक्षाया । ८ (ग घ) °द्वानिवो° । ९ (क ख.) °न्यतरस्य । १० (क. क्ष.) °क्षादि° ।

भाव्यते सन्नपीहार्थः प्रसिद्धैर्लौकिकाद्विवत् ।
ब्रह्मणस्त्वप्रसिद्धत्वात्तथाप्यत्र सुदुर्लभम् ॥ १७ ॥

ब्रह्मज्ञाने विध्यसंभवे हेत्वन्तरमाह । भाव्यत इति । यद्यप्यसन्नपि द्युलोकस्याग्नित्वलक्षणोऽर्थो व्यवहारभूमावसौ वाव लोको गौतमाग्निरिति श्रुत्या भाव्यते । द्युलोकोऽग्निश्चेति पदार्थयोरत्र प्रसिद्धत्वात्तथाऽपि ब्रह्मणोऽभिमेतस्य नित्यशुद्धत्वादिलक्षणस्य लोकवदग्निवच्चाप्रसिद्धत्वादत्र ब्रह्मज्ञाने विधानमतिदुर्लभमनुपपन्नमित्यर्थः ॥ १७ ॥

क्रियते लौकिकोऽप्यर्थः पदार्थान्वयरूपतः ।
अवाक्यार्थात्मकं ब्रह्म तथाप्यत्र सुदुष्करम् ॥ १८ ॥

अतश्च ब्रह्मज्ञानं विधातुमशक्यमित्याह । क्रियत इति । यद्यपि नियोगो भावना वेत्यलौकिकोऽप्यर्थः कर्तुं शक्यते पदार्थान्वयद्वारा संसृष्टरूपत्वात्तथाऽपि महावाक्यार्थात्मकमखण्डैकरसमतो न तज्ज्ञाने विधानं सुकरमित्यर्थः ॥ १८ ॥

प्रमाणमप्रमाणं च प्रमाभासस्तथैव च ।
कुर्वन्त्येव प्रमां यत्र तदसंभावना कुतः ॥ १९ ॥

अवाक्यार्थात्मकं ब्रह्मेत्यत्युक्तं ब्रह्मणोऽसंभावितत्वादित्याशङ्क्याह । प्रमाणमिति । प्रमाणादिसाधकत्वेन नित्यदृष्टिस्वभावस्य ब्रह्मणः सिद्धत्वात्तदसंभावना नास्तीत्यर्थः ॥ १९ ॥

प्रामाण्यमेतत्पृष्टेन कस्मान्नैत्यभिधाश्रुतिः ।
नियोगस्यापि मानत्वं नानपेक्ष्य प्रमामिमाम् ॥२०॥

वेदान्तेषु ज्ञाननियोगानङ्गीकारे कथं प्रामाण्यमित्याशङ्क्य पूर्वोक्तकूटस्थानुभवस्थिताविद्यातत्कार्यनिवर्तकज्ञानकारणत्वेन वेदान्तप्रामाण्यं नियोगमन्तरेणाविरुद्धं सिध्यतीत्याह । प्रामाण्यमिति । किंच नियोगस्य संसर्गाक्षेपकत्वेन तत्प्रामाण्यं त्वपेष्यते न च जडस्य नियोगस्य यथोक्तमनुभवमन्तरेण मानत्वमनुमन्तुं शक्यते तस्मान्नियोगसाधनत्वेन प्रागुक्तानुभवस्याभ्युपगन्तव्यत्वादलं ज्ञाननियोगाङ्गीकारेणेत्यभिप्रेत्याह । नियोगस्येति ॥ २० ॥

---

१ ( ग. घ. ) विधासं । २ ( घ. च. ) घस । ३ ( ग. घ. ) को गौत । ४ ( ग. घ. च. ) नाचैत्य । ५ ( क. ख. ) गापेक्षक । ६ ( ग. घ. ) नुमातुं श । ७ ( च. ) ल निज्ञा । ८ ( ग. घ. ) ज्ञानं नि ।

पश्येदात्मानमित्यादि वाक्यं यत्स्याद्विधायकम् ।
ज्ञानकर्तव्यतायां तं नियोज्य पुरुषं प्रति ॥ २१ ॥

किंच वेदान्तेषु विध्यभ्युपगमे विधिवाक्याद्वाक्यान्तराद्वा ब्रह्मसिद्धिरिति विकल्प्य विधायकस्य वाक्यस्य विधावेव चरितार्थत्वान्न वस्तुनि मानतेत्याद्यं दूषयति । पश्येदिति ॥ २१ ॥

स्वव्यापारेऽनपेक्ष्यैव वस्तुवृत्तं वचो यतः ।
नियुङ्क्ते पुरुषं तस्माद्वस्तुवृत्तं सुदुर्लभम् ॥ २२ ॥

पुरुषव्यापारे वस्तुवृत्तमनपेक्ष्यैव पुरुषस्य प्रवर्तकत्वाद्विधायकं वाक्यं वस्तुनः साधकं न भवतीत्येतदेव साधयति । स्वव्यापार इति ॥ २२ ॥

स्वशक्त्यननुरूपं चेत्कार्यं वाक्यशतैरपि ।
नियुक्तोऽपि न तत्सिद्धावलं शक्ये स हीश्वरः ॥२३॥

ज्ञानस्य विधेयत्वमङ्गीकृत्योक्तं तदेव नास्तीत्याह । स्वशक्तीति । यद्धि ज्ञानाख्यं कार्यं पुरुषस्य कर्तुमकर्तुमन्यथा कर्तुमशक्यं तत्र द्रष्टव्यादिवाक्यैरनेकैर्नियुक्तोऽपि पुरुषो न ज्ञानसिद्धौ स्वातन्त्र्यमवलम्बन्ते । ज्ञानस्य प्रमाणवस्तुपरतन्त्रस्य पुरुषाधीनत्वाभावाद्यागादौ हि पुरुषः स्वाधीने स्वतन्त्रो भवति तस्माद्विधिघटनायोग्यत्वाज्ज्ञानस्य न तत्र विधिरस्तीत्यर्थः ॥ २३ ॥

अभिधाश्रुतितत्सिद्धौ व्यापृच्छेत प्रयत्नतः ।
विधिवाक्यानुगामित्वान्नार्थस्यैकस्यात्स्वतन्त्रतः ॥२४॥

तत्त्वमस्यादिवाक्याद्विधिवाक्यातिरिक्ताद्वस्तुसिद्धिरिति द्वितीयं कल्पमुत्थापयति । अभिधेति । अभिधाश्रुतेरपि विध्यनुसारित्वान्न स्वातन्त्र्येण वस्तुसाधकत्वमिति दूषयति । विधीति ॥ २४ ॥

---

१ ( क. ख. ) ज्ञानंक । २ ( क. ख. ) व्यतां यां । ३ ( ग घ. ) षं कृति । ( ङ. ) षं कृत्वा । ४ ( ग. घ. ) विश्व वा । ५ ( ग. ) धायैव । ६ ( क. ख.) षं यस्मा । ७ ( ग. घ. ङ. ) यद्विज्ञा । ८ ( ग. घ. च. ) भावा क । ९ (ग. घ. न सि । १० ( ग. घ. ङ. ) व्यायच्छेत । व्यापारं कुर्यादित्यर्थः । ११ ( ग. घ. ङ. ) धिवर्त्मानु । १२ ( ङ स्यैकमा स्वत ।

स्वमांसान्यपि खादन्ति नियोगानतिलङ्घिनः ॥२५॥
जहत्यपि प्रियान्प्राणाञ्शक्यार्थत्वात्ततोऽपि हि ।
अशक्ये विनियुक्तोऽपि कृष्णलाञ्श्रपयेदिति ॥२६॥

ज्ञानस्य पुरुषतन्त्रत्वाभावात्तत्कर्तुं पुरुषो न शक्नोतीत्यत्र वैधर्म्यदृष्टान्तमाह । स्वमांसानीति । यथा कृष्णलाञ्श्रपयेदिति विक्लित्तिफलके कृष्णलपाके सर्वथैवाशक्ये नियुक्तोऽपि बुद्धिपूर्वकारी न प्रवर्तते तथा ततोऽपिकृष्णलपाकादशक्ये ज्ञाने नियुक्तो विवेकी तदशक्यत्वबुद्ध्या नैव तत्र प्रवर्तितुं प्रभवति ततः स्वानधीने ज्ञाने न युक्तो विधिरिति साधर्म्यदृष्टान्तेन स्पष्टयति । ततोऽपीति ॥ २५ ॥ २६ ॥

सर्वात्मनाऽप्यसौ कुर्वन्कुर्यात्तस्करकन्दुवत् ॥२७॥
नैचोपासान्तराधीनो ब्रह्मज्ञानोदयो भवेत् ।
तं यथा तं तमेवेतिन्यायदृब्धश्रुतेः स्मृतेः ॥ २८ ॥

यदि पुनः सर्वात्मना कर्तुमशक्यमपि ज्ञानमसौ नियोज्यो नियोगबलादेव कुर्यात्तदाऽयं सामर्थ्यमनपेक्ष्य नियोगमेवानुरुध्य कुर्वन्केवलक्लेशभागी भूत्वा स्वापेक्षितं पुरुषार्थं न प्रतिपद्यत इति सदृष्टान्तमाह । सर्वात्मनेति । कश्चिच्चौर्यं कृत्वा स्वकीयचौर्यसंवरणार्थं संनिहितं कन्दुगृहं प्रविष्टो गृहस्वामिना कन्दुनाकन्दुकर्मणि नियुक्तस्तत्कर्मण्यशक्ये विनियुक्तत्वात्तत्कुर्वन् राजपुरुषैस्तस्करमन्वेषमाणैस्तत्र झटिति समागतैरुक्ते कर्मण्यकुशलतां समालोच्य तस्करोऽयमिति ज्ञात्वा गृहीतो व्यर्थक्लेशभागी यथा तस्करकन्दुः संवृत्तस्तथा ब्रह्मज्ञाने नियुक्तोऽपि तस्य कर्तुमशक्यत्वात्तत्कुर्वन्व्यर्थक्लेशभागी भवेदित्यर्थः ॥ २७ ॥

ज्ञाने विध्यभावेऽपि वैधोपासनातो ज्ञानं भवतीत्याशङ्क्य श्रुतिस्मृतिभ्यामुपासनस्य ज्ञानातिरिक्तफलश्रवणान्मैवमित्याह । नचेति । न्यायशब्देन तत्क्रतुन्यायो गृह्यते ॥ २८ ॥

नार्थस्पृग्भावना चेत्स्याद्ब्रह्मधीजन्मने न सा ।
स्वभ्यस्ता राजती नो धीः शुक्तिकाज्ञानजन्मने॥२९॥

किंचोपासनस्यार्थसाधकत्वे ज्ञानानतिरेकादर्थासंस्पर्शित्वं वक्तव्यं ततश्च ज्ञानसाधनत्वासिद्धिरित्याह । नार्थेति । उपासनस्यार्थास्पर्शित्वेऽप्यभ्यासप्रकर्षाद्भवति सम्यग्धीहेतुतेत्याशङ्क्याह । स्वभ्यस्तेति ॥ २९ ॥

---

१ ( ग. घ. ) °ने तेन नि° । २ ( ग. घ. ) नमोपा° । ३ ( ग. घ. ) °दृष्टश्रु° । ४ ( ग. घ. ङ. ) °गवत्वादे° । ५ ( घ. च. ) °यं समा° । ६ ( ग. घ. ) °न्दुः सं° । ७ ( ग. घ. ) °सनतो । ८ ( क. ख ) °कार्था° । ९ ( ग. घ. ) °त्तेत्वभ्या° ।

द्रष्टव्यश्चेद्भवेदात्मा स्यान्नियोगस्तदात्मनि ।
निषेधाद्दर्शनस्येह न नियोगोऽस्त्यतः परे ॥ ३० ॥

द्रष्टव्यश्रुतेरात्मज्ञाने तदुपासने वा नियोगः स्यादित्याशङ्क्य न दृष्टेरित्यादिना दर्शनादिविषयत्वनिषेधान्नात्मज्ञाने तदुपासने वा नियोगोऽस्तीत्याह । द्रष्टव्यश्चेदिति । आत्मनीत्यात्मज्ञाने तदुपासने वेत्यर्थः । दर्शनस्येत्युपासनस्याप्युपलक्षणमतः परे दर्शनादेरगोचरे वस्तुनि दर्शनादौ न नियोगोऽस्तीत्यर्थः ॥ ३० ॥

नियोगानुप्रवेशेन वस्तुतत्त्वं प्रबोध्यते ।
न हि विध्यनपेक्षस्य प्रामाण्यमनुवादिनः ॥३१॥

नियोगानभ्युपगमे वेदान्तानामनुवादकत्वे नाप्रामाण्यप्रसङ्गान्नियोगद्वारैव तेषां वस्तुबोधकत्वमिति शङ्कते । नियोगेति ॥ ३१ ॥

नैवं यतः क्रियैवेह चोदनाभिर्विधीयते ।
स्वव्यापारे यतस्ताभिर्नियोक्तुं शक्यते पुमान् ॥
द्रव्यस्वरूपे साध्यत्वात्कथं ताभिः प्रवर्त्यते ॥ ३२ ॥

किं वेदान्तेष्वात्मनि तज्ज्ञाने वा विधिर्विवक्ष्यते नाऽऽद्य इत्याह । नैवमिति । विधिव्यवहाभूमौ क्रियाया एव कर्तव्यत्वेन विधिभिरभिधानान्नात्मनि विधिशङ्केत्यर्थः । साध्येऽर्थे नियोगस्य सावकाशत्वादात्मनि सिद्धेऽर्थे तस्य निरवकाशत्वमित्येतदुपपादयति । स्वव्यापार इति ॥ ३२ ॥

नचापीहात्मविज्ञानं चोदनाभिर्विधीयते ।
स्वाध्यायोऽध्येतव्य इति ह्येतस्मात्तस्य सिद्धितः॥३३॥

न द्वितीय इत्याह । नचेति । किं शाब्दमात्मज्ञानं विधेयं किंवा ज्ञानान्तरं प्रथममपि स्वोत्पत्त्यर्थं स्वफलार्थं वा विधीयते नाऽऽद्य इत्याह । स्वाध्याय इति ॥ ३३ ॥

---

१ ( ग. घ. ) °द्विति वि° । २ ( ग. घ. ) °त्वेन मा° । ३ ( क. ) °मित्याश° । ४ (ग.घ.) °व्यस्य सू° । ५ (घ.) °भिर्नि । ६ ( ग. ) °भिर° । ७ (ङ.) शाब्दात्म° ।

कर्मावबोधो न यथा नियोगान्तरमीक्षते ।
तथैवात्मावबोधोऽपि न नियोगान्तराद्भवेत् ॥ ३४ ॥

शाब्दस्यात्मविज्ञानस्याध्ययनविध्यनुरोधादेवोत्पत्तेरुपपत्तेस्तदर्थं नास्ति विध्यन्तरापेक्षेत्येतदेव दृष्टान्तेन साधयति । कर्मेति ॥ ३४ ॥

स्यादेतदात्मबोधस्य नियोगविरहाद्यदि ।
पुमर्थकारिता पुंभिर्लभ्यते न तु लभ्यते ॥ ३५ ॥
नियोगैकाधिगम्यत्वाज्ज्ञानकार्यस्य नान्यतः ।
प्रमान्तरादिदं सिद्ध्येन्नापि स्यादभिधानतः ॥ ३६ ॥

आत्मज्ञानस्य विधेयत्वमन्तरेण फलवत्त्वं चेन्न तस्य विधेयत्वं सिध्येन्नचान्तरेण विधेयत्वं फलवत्त्वं तस्य लभ्यते तेन तस्य फलसिद्ध्यर्थं विधेयतेति कथान्तरमुत्थापयति । स्यादेतदिति ॥ ३५ । ३६ ॥

नैतदेवं यतो नेह ज्ञेयार्थव्याप्तिमात्रतः ।
फलान्तरं प्रबोधस्य किंचित्संभाव्यतेऽण्वपि ॥३७॥

ज्ञेयनिश्चयस्य ज्ञानफलत्वात्तस्य च ज्ञानोत्पत्तिनान्तरीयकत्वान्न फलाय ज्ञाने विधिरिति परिहरति । नैतदिति ॥ ३७ ॥

अन्तरेण नियोगं च स्वात्मबोधस्य सिद्धितः ।
स्वाध्यायोऽध्येतव्य इति ब्रूहि स्यात्किं नियोगतः॥ ३८॥

ज्ञानं चेदुत्पद्यते तदा ज्ञेयाभिव्याप्तिरूपं फलं विधिमन्तरेण सिध्यतु तदुत्पत्तिरेव विध्यभावे कथं सिद्ध्येदित्याशङ्क्य न चापीत्यत्रोक्तं स्मारयति । अन्तरेणेति ॥ ३८ ॥

नैवं यतोऽन्यदेवेदं विज्ञानान्तरमात्मनि ।
सोपायं कार्यमित्येवं चोद्यते केवलं परम् ॥ ३९ ॥

न वयं शाब्दज्ञानं विधेयं ब्रूमः किंतु ज्ञानान्तरमेव शमदमाद्युपायसहितं विधेयमितिमतान्तरमुत्थापयति । नैवमिति ॥ ३९ ॥

शब्दाजनितविज्ञानाद्व्यतिरिक्तं परात्मगम् ॥ ४० ॥

असंसृष्टापरोक्षवस्तुगोचरत्वं केवलत्वं ज्ञानान्तरमेव विशदयन्परत्वं स्फोरयति । शब्दादिति ॥ ४० ॥

१ ( ट ) 'विहराद्य' । २ ( ग. घ. च. ) 'लवत्वा' । ३ ( ङ. ) स्वात्माबो' । ४ ( ग. घ ङ. ) 'नं चैतद्' । ५ ( ङ. च. ) शाब्दं ज्ञा' । ६ ( ङ ) 'नादवि' ।

न हि शब्दसमुत्थेन ब्रह्मज्ञानेन शक्यते ।
तस्यावाक्यार्थरूपत्वात्परिच्छेत्तुं घटादिवत् ॥ ४१ ॥

शाब्दज्ञानेनैव ब्रह्मणः सिद्धत्वादनर्थकं ज्ञानान्तरविधानमित्याशङ्क्याऽऽह । न हीति ॥ ४१ ॥

नानापदार्थसंसर्गलभणोऽयं यतः स्मृतः ।
वाक्यार्थो वाक्यविद्भिर्हि प्रमावाक्यं च नो मतम् ॥
तस्य चाविषयत्वात्तु ब्रह्मावाक्यार्थरूपभृत् ॥ ४२ ॥

कथमवाक्यार्थरूपत्वं ब्रह्मणः स्यादित्याशङ्क्याखण्डैकरसत्वाङ्गीकारादित्याह । नान्येति । ब्रह्मणि वाक्यं प्रमाणमित्यभ्युपगमादवाक्यार्थत्वं तस्यासिद्धमित्याशङ्क्य वाक्यं ब्रह्मणि प्रमाणमित्येतदङ्गीकृत्य वाक्यार्थत्वं तस्य निरस्यति । प्रमेति ॥ ४२ ॥

विज्ञानान्तरगम्यं तदभ्युपेयं बलादपि ।
नचेद्वाक्योत्थविज्ञानग्राह्यं ब्रह्माभ्युपेयते ॥
नाऽऽम्नायार्थो भवेत्तर्हि नैवं वेदार्थ एव च ॥ ४३ ॥

अवाक्यार्थत्वे ब्रह्मणः सिद्धे शाब्दज्ञानातिरिक्तज्ञानगम्यत्वं तस्य बलादेव प्राप्नोतीति फलितमाह । विज्ञानान्तरेति । ब्रह्मणो वाक्योत्थज्ञानाविषयत्वे वेदवाक्यं तत्र प्रमाणमित्यङ्गीकारो विरुध्येतेति शङ्कते । न चेदिति । वेदवाक्योत्थज्ञानाभ्यासप्रसाध्यसाक्षात्कारलक्षणज्ञानगम्यत्वाद्वेदार्थत्वं ब्रह्मणः सिध्यतीति परिहरति । नैवमिति ॥ ४३ ॥

कथं वेदार्थतैतस्य न चेद्वाक्यार्थ इष्यते ॥ ४४ ॥
पुंव्यापारानधीनत्वान्न नियोगादयं भवेत् ।
पदार्थानन्वयान्नापि वाक्योत्थो बोध आत्मनि ॥४५॥

उक्तमेव सैद्धान्तिके चोद्यमनुवदति । कथमिति ॥ ४४ ॥

वेदोत्थज्ञानगम्यत्वेन वेदार्थत्वमिति भवन्नियोगाद्वदाज्ञावलान्नायमर्थः सिध्येदयमस्य वाक्यस्यार्थ इत्यस्यार्थस्य पुरुषव्यापारसाध्यत्वाभावादिति पूर्ववादी परिहरति । पुंव्यापारेति । धर्मस्य वाक्योत्थज्ञानगम्यत्वेन वाक्यार्थत्ववद्ब्रह्मणोऽपि स्यादित्याशङ्क्याऽऽह । पदार्थेति । पदस्यार्थत्वेन पदानन्वयाद्ब्रह्मणोऽपदार्थत्वाद्धर्मवैलक्षण्यान्न वाक्यजन्यज्ञानगम्यत्वमित्यर्थः ॥ ४५ ॥

---

१ (ग.) मन्न वा । २ (क.ख.) ॰म्राह्मन्न॰ । ३ (ग) ॰नैव वे॰ । ४ (ग.घ) ॰त्वब॰ ।

तदन्वयेऽपि नैवायं वाक्यार्थत्वं समश्नुते।
सामान्यमात्रवाचित्वे पदानां संक्षयो यतः ॥ ४६ ॥

पदेन पदार्थतया ब्रह्मणोऽन्वयेऽपि न तस्य वाक्यगम्यत्वं पदस्य सामान्यमात्रविषयत्वाद्वाक्यस्य विशेषविषयत्वाद्ब्रह्मणश्च सामान्यत्वेऽपि विशेषत्वाभावादित्याह। तदन्वयेऽपीति। वस्तुतस्तु ब्रह्म त्वया सामान्यविशेषभावशून्यमभ्युपगतं तत्र कुतः शब्दप्रवृत्तिरित्यर्थः ॥ ४६ ॥

पदार्थव्यतिरेकेण न चावाक्यार्थवाचकः।
अतोऽवाक्यार्थरूपोऽयं योऽहं ब्रह्मेति निश्चयः ॥४७॥

किंच पदवाच्यादर्थाद्व्यतिरेकेण ब्रह्मणोऽपदार्थत्वादपदार्थस्य चावाक्यार्थत्वादवाक्यार्थस्य ब्रह्मणो वाचको बोधकः शब्दो नास्ति। न च लक्षणया शब्दो ब्रह्म बोधयति। सर्वथा वाच्यत्वरहितस्य लक्ष्यत्वायोगादतो न ब्रह्मणि शब्दप्रवृत्तिरित्याह। पदार्थेति। यस्मादेवं शाब्दज्ञानाविषयो ब्रह्म तस्मादवाक्यार्थरूपमशाब्दं ज्ञानान्तरमसंसृष्टापरोक्षाकारं विधेयं तच्च शाब्दज्ञानाभ्यासोपायसाध्यापरोक्षज्ञानलक्षणमिति तद्गम्यं ब्रह्म वेदप्रमाणकमुपचारादित्युपसंहरति। अत इति। योऽहं ब्रह्मास्मीत्यसंसृष्टापरोक्षाकारो निश्चयोऽभ्यासादुत्पद्यते स यद्यपि शाब्दो बोधो न भवति तथाऽपि तथाविधबोधाभ्यासप्रचयप्रसूतत्वात्तद्गम्ये ब्रह्मणि शास्त्रं प्रमाणमिति शक्यमेवं वक्तुमित्यर्थः ॥ ४७ ॥

नियोगानुप्रवेशेन वस्तुतत्त्वमितीरितम्।
यत्तस्य परिहाराय श्लोकोऽस्माभिर्यथोदितः ॥४८॥

नियोगानुरोधाद्वस्तुसिद्धिर्न [4]वेदप्रसादादिति त्वदीयचोद्यस्य यतो वाचो निवर्तन्त इत्यादिश्लोकेनोक्तं समाधानमिति सिद्धान्तमाह। नियोगेति ॥ ४८ ॥

इदं ज्ञेयमिदं ज्ञानं ज्ञाताऽस्मीति विभागतः।
सर्वदा दर्शनात्तावन्नाविद्याऽस्त्यैषु विद्यते ॥ ४९ ॥

कथमस्य श्लोकस्य यथोक्तचोद्यपरिहारहेतुत्वमित्याशङ्क्य तत्सिद्ध्यर्थमनात्मप्रपञ्चस्य कल्पितत्वं साधयति। इदमिति। ज्ञेयादित्रितयस्यासंकीर्णत्वेन सदा भासनादस्याऽऽत्मनस्तद्विषयाज्ञानाभावात्तस्मिन्नज्ञातत्त्वायोगात्तस्य प्रमाणगम्यत्वासिद्धेः सर्पादिवदविद्याविजृम्भितत्वमित्यर्थः ॥ ४९ ॥

---

१ (ग. घ) °सृष्टच्य°। २ (ग. घ.) °द्गम्य ब्र°। ३ (ग घ.) °द्गम्यत्वे ब्र°। ४ (ग. घ.) °वेदे प्र°। ५ (ग. घ.) °ज्ञानायो°।

चिन्मात्रव्यतिरेकेण सर्वप्रत्ययसाक्षिणः ।
रूपान्तरं न संभाव्यं प्रमाभासात्तथा ह्यनुतिः ॥५०॥

चिदात्मनोऽपि सदासिद्धत्वाविशेषात्प्रमाणागम्यत्वादज्ञातत्वमन्तरेण तदयोगादविद्याविजृम्भितत्वं तुल्यमित्याशङ्क्याऽऽह । चिन्मात्रेति । प्रत्यगात्मनः सर्वकल्पनाधिष्ठानत्वादविद्याकल्पितत्वं रूपान्तरमसंभाव्यमित्यर्थः । आत्मा चिद्रूपश्चेत्कथं यथावदस्फुरणमित्याशङ्क्याज्ञानादित्याह । प्रमाभासादिति । ह्नुतिरित्यस्फूर्तिरुच्यते ॥ ५० ॥

हानोपादानहीनोऽयं तत्साक्षित्वात्स्वतो ध्रुवः ।
द्रष्ट्रादिसाक्षिताऽप्यस्य तत्कारणसमाश्रयात् ॥५१॥

कल्पितत्वं जगतो वदता प्रत्यगात्मनोऽधिष्ठानत्वेनाकल्पितत्वं स्वयंप्रभत्वं चोक्तम् । इदानीं तस्य कूटस्थत्वमाह । हानेति । कूटस्थस्य कथं साक्षित्वमित्याशङ्क्य हानोपादानाद्यात्मकस्य द्वैतस्य कारणं साभासमज्ञानं तदवष्टम्भादस्य साक्षित्वमित्याह । द्रष्ट्रादीति ॥ ५१ ॥

इदं वेद्मि न वेद्मीदमिति बुद्धिर्विवर्तते ।
प्रत्यभिज्ञाश्रया सा स्याद्द्रष्टैवोभयरूपभाक् ॥५२॥

अज्ञानादात्मनः साक्षित्वमित्युक्ते ज्ञानाज्ञानयोरेकाश्रयत्वादात्मन्यज्ञानसंबन्धवज्ज्ञानसंबन्धस्यापि वक्तव्यतया निर्विशेषत्वहानिरित्याशङ्क्याह । इदमिति । बुद्धिरहंवृत्तिः सैव ज्ञानाज्ञानरूपेण भातीति नात्मनः सविशेषत्वप्रसिद्धिरित्यर्थः । अहंवृत्तेरात्माश्रयत्वादात्मनि सविशेषत्वं दुष्परिहरमित्याशङ्क्य प्रत्यभिज्ञावृत्तेरन्तःकरणाश्रयत्वात्प्रत्यभिज्ञाशब्दितान्तःकरणाश्रयाऽहंवृत्तिरित्यङ्गीकारान्नाऽऽत्मनि सविशेषत्वशङ्केत्याह । प्रत्यभिज्ञेति । अहंवृत्तेरन्तःकरणाश्रयत्वे साभासमन्तःकरणमेव ज्ञानाज्ञानरूपभोगभ्युपगन्तव्यमित्याह । द्रष्टैवेति ॥ ५२ ॥

निर्विभागात्मकत्वात्तु सर्वकोशातिवर्तिनः ।
रूपं नानात्मवन्न्याय्यं प्रत्यभिज्ञासमाश्रयम् ॥ ५३ ॥

ज्ञानाज्ञानयोरात्मगतत्वेन प्रतिभानादात्माश्रयत्वमेष्टव्यमित्याशङ्क्याऽऽह । निर्विभागेति । अन्तःकरणस्येवाऽऽत्मनो नानाविधं रूपं नोपपद्यते सर्वकोशातिवर्तित्वादतो यदन्तःकरणं साभासं प्रत्यभिज्ञाशब्दितं तदेव ज्ञानाज्ञानविकल्पार्हमित्यर्थः ॥ ५३ ॥

१ (ग. घ.) व °त्वम° । २ (च.) °भागित्यप्यु° । ३ (क. ट.) °णस्यैवा° ।

प्रतिस्मृत्यान्यतः प्राप्तं रूपं यत्पारिणामिकम् ।
ज्ञाता प्रत्यभिजानाति प्रत्यक्षार्थोपसंस्कृतः ॥ ५४ ॥

प्रत्यगात्मनो ज्ञानाज्ञानविकल्पाश्रयत्वं न्यायशून्यमित्युक्तं प्रकटयति ।
प्रतिस्मृत्येति । अहं कर्ता परिणामी साभासो ज्ञातेत्युच्यते स च पूर्ववृत्तम-
त्यपानुभवप्रसूतार्थसंस्कारसंस्कृतो विषयद्रष्टृत्वेन प्राप्तं पारिणामिकं रूपं प्रति-
स्मृत्य तदनुस्मरणपूर्वकं सोऽयमिति वा सोऽहमिति वा प्रत्यभिजानातीतश्च
साभासान्तःकरणगतानुसंधानप्रत्ययवदज्ञानादेरपि तद्गतत्वेन कूटस्थानुभवनि-
ष्ठत्वाभावात्तत्र कल्पनया प्रतीतिरित्यर्थः ॥ ५४ ॥

बुद्धेः स्यादपराधोऽयं यद्बाह्यार्थानुकारिता ।
प्रत्यक्त्वं चिन्निभत्वं च कौटस्थ्यान्नायमात्मनि ॥५५॥

केचित्तु प्रत्यगात्मैव ज्ञातेत्याचक्षते तान्प्रत्याह । बुद्धेरिति । विषयाकारे-
णाऽऽत्माकारेण च परिणामो बुद्धेरेव सिध्यति । न त्वात्मनि परिणामो
युज्यते । तस्य कूटस्थत्वादित्यर्थः ॥ ५५ ॥

अन्वयव्यतिरेकाभ्यां जाग्रत्स्वप्नसुषुप्तिषु ।
बाह्यं निरस्य धीरूपं चिन्मात्रात्मावभासया ॥
धियोपलक्ष्यावाक्यार्थं सर्वदाऽव्यभिचारतः ॥५६॥
व्यभिचारिणश्च बाधेन तत्त्वमस्यादिरूपिणी ।
दहन्त्यखिलमज्ञानं बोधयत्येव केवलम् ॥ ५७ ॥

प्रत्यगात्मनो नियोगगम्यत्वनिराकरणेन केवलशब्दगम्यत्वप्रतिपादनार्थं
स्वयंप्रकाशं निर्विशेषत्वं कूटस्थत्वं ज्ञेयादिद्वैतस्य कल्पितत्वेनाद्वितीयत्वं चो-
क्तम् । इदानीं केवलशब्दगम्यत्वं प्रतीचः साधयति । अन्वयेत्यादिना । मन-
नशब्दितान्वयव्यतिरेकाख्यश्रौतयुक्त्यवष्टम्भाद्बुद्धिग्राह्यं बुद्ध्याकारं बाह्यं सर्व-
मनात्मजातमवस्थात्रये व्यभिचारित्वान्निराकृत्य चिन्मात्रस्य सदैवाव्यभिचारि-
त्वात्केवलचिदाकारज्ञानेनावाक्यार्थात्मकं वाक्यार्थान्वयायोग्यं तदेव चिन्मात्रं
त्वंपदार्थरूपं गृहीत्वा व्यवस्थितस्य मुमुक्षोस्तत्त्वमस्यादिवाक्योत्था ब्रह्माहमि-
त्येवरूपा बुद्धिवृत्तिरात्मगतमज्ञानं तत्कार्यं च स्वोदयनान्तरीयकत्वेन दहन्ती
त्वमर्थस्य ब्रह्मत्वं ब्रह्मणश्चाऽऽत्मत्वं सकलविशेषशून्यं बोधयत्येवेत्यङ्गीकारा-
दुक्तं ब्रह्मणः शब्दैकगम्यत्वमित्यर्थः ॥ ५६ ॥ ५७ ॥

---

१ (ग. घ. च.) °रणे ग°। २ (ग. घ.) °ण वा प°। ३ (क. ग.) °लक्ष्य-
वा°। ४ (ङ.) °चारितः । ५ (ग. ङ.) °न्वययो°। ६ (क. ख. ङ.) °न्मात्र-
त्व°। ७ (ङ.) °दयान्तं (च) दयेना°।

सामानाधिकरण्यादेर्घटेतरखयोरिव ।
व्यावृत्तेः स्यादवाक्यार्थः साक्षान्नस्तत्त्वमर्थयोः ॥५८॥

ब्रह्मात्मनोरन्योन्यान्वयः शब्दबोध्यश्चेन्न शब्दादवाक्यार्थधीरित्याशङ्क्याऽऽह । सामानाधिकरण्यादेरिति । यथा घटाकाशो महाकाश इत्यत्र विरुद्धांशनिराकरणेनाऽऽकाशमात्रं बोध्यते तथा तत्त्वमसीत्यत्र तत्त्वंपदयोः सामानाधिकरण्यात्तदर्थयोश्च वाच्ययोर्विशेषणविशेष्यभावात्पदतदर्थयोश्च लक्ष्यलक्षणभावात्तत्त्वमर्थयोर्विरुद्धांशव्यावृत्तेरवाक्यार्थोऽखण्डैकरसलक्षणो वाक्यादेव साक्षात्प्रतिपन्नः स्यादित्यर्थः ॥ ५८ ॥

वाक्यादेवमवाक्यार्थो यस्मात्साक्षात्प्रसिध्यति ।
अन्यदेवेदमित्यादि सर्वं स्यात्तुषकण्डनम् ॥ ५९ ॥

शब्दादेव वाक्यार्थप्रतिपत्तावित्थं संभवन्त्यां ज्ञानान्तरस्य शाब्दज्ञानातिरिक्तस्य विधेयत्ववचनमनुचितमिति फलितमाह । वाक्यादिति ॥ ५९ ॥

अज्ञानमन्यथाज्ञानं संशयज्ञानमेव च ।
घटादावेव तद्दृष्टं न ज्ञातृज्ञानसाक्षिषु ॥ ६० ॥

शाब्दज्ञानादेवावाक्यार्थसिद्धावपि ज्ञानान्तरमज्ञानादिनिवृत्त्यर्थं विधेयमित्याशङ्क्याऽऽह । अज्ञानमिति ॥ ६० ॥

अज्ञानादि त्रयं तावत्प्रत्ययेऽपि न विद्यते ।
तस्य ह्यव्यवधानेन प्रत्यक्षान्नान्यमानता ॥ ६१ ॥
ज्ञातुरव्यवधानेन संशयो निश्चयोऽपि वा ।
प्रत्ययः प्रथते यस्मान्न मानान्तरकाङ्क्षतः ॥ ६२ ॥

अज्ञानादि त्रितयं ज्ञाने नास्तीत्येतदादौ संक्षेपविस्तराभ्यां वार्तिकद्वयेन दर्शयति । अज्ञानादीति । वक्ष्यमाणपैशुतिकन्यायद्योतनार्थोऽपिशब्दः ॥६१॥६२॥

---

१ (ग. घ. ध.) °पं प्रज्ञपि°। २ (ङ. °काङ्क्षः। ३ (क. ट. घ.) °वि-स्मारा°।

अज्ञानादि त्रयं तावज्ज्ञातर्यपि न विद्यते ।
किमङ्ग सर्वदाऽलुप्तचक्षुष्यात्मनि केवले ॥ ६३ ॥

प्रमातर्यपि न त्रितयमस्ति तस्याप्यव्यवधानेन साक्षिप्रत्यक्षत्वादित्याह ।
अज्ञानादि त्रयमिति । यत्तु साक्षिणि त्रयं नास्तीति प्रतिज्ञातं तदिदानीं कैमु-
तिकन्यायेन साधयति । किमङ्गेति । प्रमात्रादेरप्यात्मप्रसादादेव सिद्धत्वात्त-
त्रापि नाज्ञानादि त्रयं संभाव्यते किमुत साक्षिण्यात्मनीति ततो नाज्ञानादिनि-
वृत्त्यर्थं ज्ञानान्तरं विधेयं शाब्दादेव प्रमाणज्ञानादात्मनि प्रातिभासिकाज्ञानादि-
निवृत्तिरित्यर्थः ॥ ६३ ॥

निर्धूताशेषभेदोऽयमवाक्यार्थात्मकस्तथा ।
सुषुप्ते गम्यतेऽस्माभिर्नानृतं श्रुतिगौरवात् ॥ ६४ ॥

निर्विशेषस्याप्यवाक्यार्थात्मकस्य ब्रह्मात्मनः सुषुप्त्यवस्थायामनुभूयमानत्वाच्च
तत्सिद्धये ज्ञानान्तरं न विधेयमित्याह । निर्धूतेति । न च सौषुप्तं यथोक्तं वस्तु
प्रतिज्ञातं मिथ्येति वक्तव्यं तत्प्रतीतेर्यद्वै तन्न पश्यतीत्यादिश्रुतिमूलत्वादित्याह ।
नानृतमिति ॥ ६४ ॥

सर्वदा चाऽऽत्मरूपत्वादव्यभिचारादनात्मनः ।
ब्रह्मात्मनि स्वतः सिद्धं ज्ञानं मोहापनोदि यत् ॥६५॥

यत्तु ज्ञानान्तरमज्ञानादिनिवृत्त्यर्थमात्मनि विधेयमित्याशङ्क्य निराकृतं
तत्रैव हेत्वन्तरमाह । सर्वदाचेति । आत्मस्वरूपचैतन्यस्यैव वाक्योत्थबुद्धिवृ-
त्त्यभिव्यक्तस्याज्ञानादिनिवर्तकत्वात्कुतो ज्ञानान्तरे विध्यपेक्षेत्यर्थः ॥ ६५ ॥

ज्ञाताज्ञातविभागोऽस्मिञ्ज्ञानाज्ञानात्मता तथा ।
ज्ञोत्रज्ञातृत्वमप्येवं स्वतः सिद्धेर्न साक्षिणः ॥ ६६ ॥

ननु जगतो ज्ञाताज्ञातज्ञानाज्ञानात्मकस्याऽऽत्मनि वस्तुतो विद्यमानत्वात्तन्नि-
वृत्त्यर्थं वेधज्ञानापेक्षेति चेन्नेत्याह । ज्ञातेति । ज्ञाताज्ञातज्ञानाज्ञानात्मकस्य जगतः
स्वतः साक्षिणः सकाशादेव सिद्धेः सत्त्वोपलब्ध्योः साक्ष्यधीनत्वेन तस्य कल्पि-
तत्वान्न तत्र परमार्थतो द्वैतं सिध्यति । तथैव साक्षिणः साक्षित्वमपि वस्तुभूतं
नास्ति । तथा च वस्तुतो जगतः साध्यसाधनात्मकस्य निवृत्त्यर्थं ज्ञानविधिर्न
संभवतीत्यर्थः ॥ ६६ ॥

१ (ग. घ.) °प्यव°। २ (ग. घ. च.) °व सदा सि°। ३ (क. ख. ङ.) °व-
त्साक्षि°। ४ (ग. घ.) °त्मकत्वा°। ५ (ग. घ.) °स्यैतावा°। ६ (ग घ.) ज्ञातुर्ज्ञातृ°।

स्वव्यापारे नियोगोऽपि नियुङ्क्ते पुरुषं बलात् ।
यथाभूतार्थता बुद्धेर्वास्तवी न तु पौरुषी ॥ ६७ ॥

प्रमाणज्ञाने नास्ति विधिरित्यत्र हेत्वन्तरमाह । स्वव्यापार इति । विधिर्हि पुरुषस्य व्यापारे स्वसामर्थ्यात्पुरुषं प्रवर्तयति । प्रमाणज्ञानं तु प्रमाणवस्तुपरतन्त्रत्वान्न विधियोग्यमतोऽपि न विधेयमित्यर्थः । ज्ञानस्य यथार्थबोधकत्वार्थं विधेयत्वमेष्टव्यमित्याशङ्क्य निराचष्टे । यथाभूतेति ॥ ६७ ॥

इदमेव मदो नेति यथैवार्थमृते विधिम् ।
वेत्ति तत्त्वमसीत्येवं किंन वेत्त्यभिधाश्रुतेः ॥ ६८ ॥

किंच कर्मकाण्डाद्विधिव्यतिरेकेण कर्मवाक्यार्थज्ञानवद्ब्रह्मकाण्डादपि विधिव्यतिरेकेण ब्रह्मज्ञानं संभवत्यविशेषादित्याह । इदमिति ॥ ६८ ॥

क्रियायां विधिसंपातः कर्त्रादिषु न सिद्धितः ।
न चानेकार्थतैकस्य वाक्यस्य भवतेष्यते ॥ ६९ ॥

आत्मतज्ज्ञानयोर्विधेयत्वाभावे हेत्वन्तरमाह । क्रियायामिति । किंच ज्ञानस्य विधेयत्वे वाक्यस्य ज्ञानविधिपरत्वात्तस्मादेव वस्तुसिद्धेरयोग्यत्वाद्वाक्यान्तरं वस्तुबोधकमेष्टव्यमित्याह । न चेति ॥ ६९ ॥

प्रत्यक्षादेव भेदोऽयमभिधानानियोगयोः ।
तस्य चेद्व्यभिचारित्वं व्यर्थं सर्वज्ञभाषितम् ॥७०॥

विधायकमेव सर्वं वाक्यं न वस्तुबोधकमस्तीत्याशङ्क्याऽऽह । प्रत्यक्षादेवेति । नियोगशब्देन विधायकं वाक्यं गृह्यते । तत्त्वमस्यादेरभिधानवाक्यस्य विधायकवाक्यस्य च श्रोत्रेन्द्रियेण भेदग्रहणाद्विधायकमेव सर्वं वाक्यमिति न शक्यं वक्तुम् । केवलवस्तुबोधिनोऽपि तत्त्वमस्यादिवाक्यस्य प्रत्यक्षत्वादित्यर्थः । प्रत्यक्षं व्यभिचारि भ्रान्तमित्याशङ्क्य सत्संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म प्रत्यक्षमिति प्रत्यक्षलक्षणसूत्रस्य तद्भाष्यस्य च यद्व्यभिचरति न तत्प्रत्यक्षं यन्न व्यभिचरति तत्प्रत्यक्षमित्यस्य विरोधान्नैवमित्याह । तस्य चेदिति ॥ ७० ॥

---

१ ( छ. ) °त्मतज्ज्ञा°। २ ( ग. घ. ) °क्यस्याप्र°। ३ ( क. ख. ) °मत्रं म°।
४ ( ग. घ. च. ) °न्न तत्प्रत्य°।

कर्तुः क्रियायां स्वातन्त्र्यं वस्तुवृत्ते ह्यनीश्वरः ।
वस्तुवृत्तं च नो मुक्तिः क्रियातश्चेदनित्यता ॥ ७१ ॥

वस्तुनि तज्ज्ञाने च विधिर्नास्तीत्युक्तम् । इदानीं[१] वस्तुनि विध्यभावे हेत्वन्तरमाह । कर्तुरिति । क्रियायां पुरुषस्य स्वातन्त्र्यात्तत्र युक्तो विधिः । वस्तुस्वरूपे तु पुरुषस्यानैश्वर्यान्न तत्र विधिः संभवतीत्यर्थः । वस्तुनि विध्यभावेऽपि मुक्तेर्वैधक्रियासाध्यत्वमित्याशङ्क्य तस्या वस्तुस्वरूपत्वान्नैवमित्याह । वस्तुवृत्तं चेति । वस्तुत्वेऽपि क्रियासाध्यत्वे तैस्याविवक्षिते नित्यत्वानुपपत्तिरित्याह । क्रियातश्चेदिति ॥ ७१ ॥

यथावस्तु हि या बुद्धिः सम्यक्ज्ञानं तदेव नः ।
पौरुषायासमात्रोत्थमज्ञानं रजतादिवत् ॥ ७२ ॥

वस्तु[२]नि विधेयत्वं निराकृत्य तज्ज्ञानस्य विधेयत्वे दूषणान्तरमाह । यथावस्त्विति । प्रमाणवस्तुतन्त्रं ज्ञानं न विधेयम् । विधेयत्वे तु पुरुषतन्त्रत्वेन रजतादिज्ञानवदप्रमाणमेव स्यादित्यर्थः ॥ ७२ ॥

वस्तुमात्रानुरोधित्वात्सम्यग्ज्ञानस्य दुष्करम् ।
नियोगानुप्रवेशेन वस्तुतत्त्वावबोधनम् ॥ ७३ ॥

सम्यग्ज्ञानस्य मानवस्त्वनुरोधित्वान्नियोगानुप्रवेशद्वारा वस्तुस्वरूपबोधनं वेदान्तानां दुष्करमित्युपसंहरति । वस्तुमात्रेति ॥ ७३ ॥

नियोगानुप्रवेशे वा हेतोर्व्याप्तिः प्रदर्श्यताम् ।
गमकत्वमृते व्याप्तिं नैव हेतोः प्रसिध्यति ॥ ७४ ॥

किंच वेदान्तेषु नियोगानुप्रवेशे वाक्यत्वं प्रमाणत्वं वा हेतू कर्तुं न शक्यते । परपक्षे प्रत्यक्षादौ च व्याप्त्यभावादित्याह । नियोगेति । यद्यपि परपक्षरूपे[३] वाक्ये नियोगानुप्रवेशाभावाद्वाक्यत्वस्य न व्याप्तिः प्रत्यक्षादौ च प्रमाणत्वेऽपि नियोगानुप्रवेशाभावात्प्रमाणत्वस्य न व्याप्तिरस्ति तथाऽपि हेतुद्वयस्य गमकत्वे का क्षतिरित्याशङ्क्य व्याप्तिमन्तरेण गमकत्वस्याप्रसिद्धत्वान्नैवमित्याह । गमकत्वमिति ॥ ७४ ॥

१ (ग. घ.) °नीं वि° । २ (क. ग. घ.) वस्य वि° । ३ (ग. घ.) °पक्षेरि° । ४ (ङ.) °स्तुविषय° । ५ (ग.घ.) वेशाद्वाक्य° । ६ (घ च.) °पक्षरूपे वाक्ये प्र° ।

**विधिशून्यस्य वाक्यस्य प्रामाण्यं प्रत्यगात्मनि ।**
**येषां प्रकाश्यत इति न तेषां मतिरीदृशी ॥ ७५ ॥**

वेदान्तेषु त्वयाऽपि क्वचित्कचिन्नियोगाङ्गीकारान्नियोगनिराकरणमस्थाने संभ्रममात्रमित्याशङ्क्याऽऽह । विधिशून्यस्येति । उपनिषद्वाक्यस्य विधिविधुरस्य प्रत्यगात्मविषये प्रकाश्यते प्रतिपाद्यते प्रामाण्यमिति येषां मतं तेषां वेदान्तेषु नियोगोऽस्तीत्येवंप्रकारा मतिर्न भवति । तत्र क्वचित्कचिन्नियोगाङ्गीकारस्तु श्रवणादिक्रियाविषयो ज्ञानविषयनियोगनिषेधाविरोधीत्यर्थः ॥ ७५ ॥

**प्रकाश्यत्वाश्रयश्चायं व्यापारः सर्व एव च ।**
**तस्मिन्नसति तन्मिथ्या यदेतद्भवतेरितम् ॥ ७६ ॥**

किंच शाब्दज्ञाने वा तदभ्यासे वा तदुत्थे ज्ञानान्तरे वा विधिव्यापारो ब्रह्मणो ज्ञानगम्यत्वसापेक्षत्वात्तदभावे न संभवतीत्याह । प्रकाश्यत्वेति ॥७६॥

**अस्थूलाशब्दतावादिप्रकाश्यत्वादि कुप्यति ।**
**नियोगानुप्रवेशेन यदि वस्तु प्रकाश्यते ॥ ७७ ॥**

किंचास्थूलाशब्दतावादिना वाक्येन ब्रह्मणः सर्वविशेषनिषेधद्वारेण प्रतिपाद्यत्वं तत्फलं च विधेयज्ञानगम्यत्वे विरुध्येत तस्मादस्थूलादिवाक्यविरोधो ब्रह्मात्मनो विधेयज्ञानबोध्यत्वे स्यादित्याह । अस्थूलेति ॥ ७७ ॥

**न चाप्रमाणता तस्य नियोगोत्सङ्गसंश्रयात् ।**
**एवमप्यप्रमाणं चेन्नियोगोऽविषयो भवेत् ॥ ७८ ॥**

किंचास्थूलादिवाक्ये नियोगानुप्रवेशे तस्य नियोगनिष्ठत्वेन स्वरूपे प्रामाण्यं न स्यान्न च प्रमाणस्यैव सतोऽन्यसंश्रयादप्रामाण्यं युक्तमित्याह । न चेति । नियोगाननुप्रवेशेऽपि वाक्यं विधिरहितवाक्यत्वादनाप्तवाक्यवदप्रामाण्यमेवेत्याशङ्क्यानूद्य दूषयति । एवमपीति । विधिरहितवाक्यस्याप्रमाणत्वे ब्रह्मणस्तद्गम्यत्वाभावादन्यस्य च तत्र प्रमाणस्यानिष्टत्वात्तदसिद्धौ तद्विषयज्ञानासिद्धेर्ज्ञाननियोगो निर्विषयो निरवकाशः स्यादिति दूषणभागस्यार्थः ॥ ७८ ॥

---

१ ( ङ. ) °काशत । २ ( ग. घ. ) °त्येव प्र° । ३ ( क. ग. घ. ) °कारम° । ४ ( ग. घ. ) °र्न संभ° । ५ ( ङ. ) °काशत्वा° । ६ ( क. ख. ) °दभासे । ७ ( क. ग. ) °म्यत्वे सा° । ८ ( ङ. ) °काशत्वे° । ९ ( ङ. ) °काशत्वा° । १० ( क. ख. ) °दिना° । ११ (च.) °रुध्यते त° । १२ (क.) °स्य स्वतो° । १३ ( च . °।

अदृश्यं पश्य इत्येवं [1]नियुक्तोऽपि न शक्नुयात्।
शक्नुयात्संनियोगाच्चेत्कुर्यात्तस्करकन्दुवत् ॥ ७९ ॥

अविषयत्वेऽपि ब्रह्मणस्तज्ज्ञाने नियोगः स्यादित्याशङ्क्य वस्त्वन्यथाकरणे पुरुषस्यासामर्थ्यान्नैवमित्याह । अदृश्यमिति । नियोगसामर्थ्यादविषयमपि विषयीकर्तुं पुरुषः शक्ष्यतीत्याशङ्क्याशक्येऽर्थे प्रवृत्तस्य प्रयासवैफल्यमित्युक्तं स्मारयति । न शक्नुयादिति ॥ ७९ ॥

वि[4]दितेतराति[5]रेकित्वाद्ब्रह्मरूपानुवादिभिः।
नियोगगर्भवचनैः पश्येदिति विरुध्यते ॥ ८० ॥

यत्तु नियोगसहितवचनैर्ब्रह्म पश्येदित्युच्यते तदन्यदेव तद्विदितादित्यादिवाक्यैर्ब्रह्मणोऽविषयत्ववादिभिर्विरुध्यते । ततोऽपि न ब्रह्मज्ञानस्य विधेयत्वमित्याह । विदितेति ॥ ८० ॥

विज्ञातारमरे केन विजानीयादिति श्रु[6]तिः।
न दृष्टेरिति दृश्यत्वं नियोगैरेव वार्यते ॥ ८१ ॥

नियोगसहि[7]तवाक्यैर्ब्रह्मणो विषयत्वनिषेधाच्च तज्ज्ञानस्य विधेयत्वासिद्धिरित्याह । विज्ञातारमिति ॥ ८१ ॥

सदावगतिरूपस्य ज्योतिश्चक्राव[8]भासिनः।
स्वयंज्योतिःस्वभावस्य न्याय्यं तस्मान्न दर्शनम् ॥ ८२ ॥

इतश्च ब्रह्मणो दृश्यत्वानुपपत्तेर्न तज्ज्ञानस्य विधेयत्वासिद्धिरित्याह । सदेति ॥ ८२ ॥

द्रष्टा चेद्दृश्यते दृश्यं प्रत्यक्षाविषयः कथम्।
कर्मकर्तृत्वमेकस्य दोषो ब्रह्मात्मदर्शने ॥ ८३ ॥

द्रष्टात्मना रूपादिजगतो दृश्यत्वात्तस्य चाहमिति प्रत्यक्षविषयत्वादविषयत्वस्यैवाभावादात्मज्ञाने विधिः संभवतीति शङ्कते । द्रष्टा चेदिति । ब्रह्मात्मनो दर्शनकर्मत्वे कर्त्रन्तराभावात्कर्मकर्तृविरोधः स्यादिति दूषयति । कर्मेति ॥ ८३ ॥

---

१ (ङ.) नियोक्ताऽपि । २ (ग. घ. ङ.) °त्सनियो° । ३ (क.) °पस्य सा° । ४ (ग. घ.) °दितव्यतिरेकित्वं ब्रह्म° । ५ (ख. ङ.) °कित्वब्रह्म° । ६ (ग. घ.) °श्रुतेः । न । ७ (ग. घ.) °हितैर्वा° । ८ (क. ख.) मासनः । ९ (क.) °त्यक्षवि° । १० (ग. घ.) °कर्तृत्वे ।

अदृष्टं तदकर्मत्वात्कौटस्थ्यान्नापि दृष्टिकृत् ।
जन्यादिविक्रियापह्नुनिषेधोऽप्येवमर्थवान् ॥ ८४ ॥

ब्रह्मात्मनश्चेदेकस्योभयरूपत्वमयुक्तं तर्हि कर्मत्वं कर्तृत्वमेव वा स्यादित्याशङ्क्याऽऽह । अदृष्टमिति । ब्रह्मात्मनो न कर्मत्वं नापि कर्तृत्वमित्यत्र हेत्वन्तरमाह । जन्यादीति ॥ ८४ ॥

प्रमातृत्वादिभेदेन यत्स्वरूपं प्रतीयते ।
तत्प्रकाश्यत इत्याहुरप्रकाशस्वरूपतः ॥ ८५ ॥

आत्मनो दर्शनकर्मत्वाभावे कस्य दर्शनकर्मत्वमित्याशङ्क्याऽऽह । प्रमातृत्वादिति । अप्रकाशस्वरूपत्वं जडत्वम् ॥ ८५ ॥

प्रमातैव प्रमेयं चेत्प्रमाणं प्रमितिस्तथा ।
स्वरूपाच्चैकरूपत्वान्न तदेभिर्निरुच्यते ॥ ८६ ॥

यत्तु पूर्ववादिना प्रमेयत्वं द्रष्टुरुपदिष्टं तदनूद्य दूषणान्तरमाह । प्रमातैवेति । प्रमेयस्य प्रमातृत्वे प्रमाणतत्फलयोरपि साक्षिमात्रत्वं स्यादित्यर्थः । यदि साक्षिस्वरूपाच्चैतन्यमात्रान्मेयत्वादेरेकत्वं तदा मेयत्वादेश्चिन्मात्रत्वेनाद्वयत्वादेभिर्मेयत्वादिशब्दैर्मेयत्वादिर्नोच्यते । मेयत्वादेश्चैतन्यातिरिक्तस्याभावादतो न मेयत्वादि साक्षिणो युक्तमिति फलितमाह । स्वरूपादिति ॥ ८६ ॥

प्रामाण्यमनुवादानां न चेत्स्वविषये मतम् ।
पयोगुणस्य संबन्धो न प्राप्नोति जुहोतिना ॥ ८७ ॥

किंच पदानामर्थवादानां चानुवादशब्दितानां स्वार्थे प्रामाण्यमेष्टव्यमन्यथा पयोद्रव्यस्य दधिद्रव्यस्य च जुहोतिना संबन्धो न सिध्येत्तत्तत्पदेन तत्तदर्थस्यासिद्धत्वात्तथा च पयसा जुहोति दध्ना जुहोतीत्यादिवाक्यमप्रमाणमापद्येतातश्च पदप्रामाण्ये विधिरहितवाक्यस्य किमु वक्तव्यं प्रामाण्यमित्यभिप्रेत्याऽऽह । प्रामाण्यमिति ॥ ८७ ॥

---

१ ( ग. घ. च. ) °रूपादि° । २ ( क. ख. ) °र्नोच्येत । मे° । ३ ( क. ग. घ. ) °स्वार्थेप्रा° । ४ ( ग. घ. ) °माण्यवि° ।

स्वर्गेणैवाभिसंबन्धः पयसश्चेदनुत्तरम् ।
स्वर्गस्य सिद्धये नालं द्रव्यमात्रं पयो यतः ॥ ८८ ॥

पयोदध्यादेर्जुहोतिना संबन्धो न भवति किंतु स्वर्गेणेति शङ्कते । स्वर्गेणैवेति । अनुवादाप्रामाण्ये दध्यादिगुणस्य जुहोतिना संबन्धो न सिध्यतीति प्रचोद्यस्य स्वर्गेण संबन्धो दध्यादेरित्युत्तरं न भवति । अनुवादाप्रामाण्ये स्वर्गेणापि दध्यादिगुणस्य संबन्धासिद्धेरित्युत्तरमाह । अनुत्तरमिति । पयोदध्यादेः स्वर्गेण संबन्धमङ्गीकृत्यानुत्तरमित्युक्तं न च तस्य क्रियाद्वारमन्तरेण संबन्धोऽस्तीत्याह । स्वर्गस्येति ॥ ८८ ॥

प्रणयः साधनत्वं च प्राप्तं तस्मादनूद्यते ।
विशिष्टोपाश्रयं द्रव्यमतोऽलं पशुसिद्धये ॥ ८९ ॥

पदानां पदार्थस्मारकत्वेऽपि पदार्थस्मृतीनामधिगतपदार्थासाधारण्येन तत्प्रामाण्योपपत्तेस्तद्धेतूनां तेषामपि प्रामाण्यं दुरपह्नवमित्यभिप्रेत्य द्रव्यस्य क्रियाद्वारेणैव पुमर्थसाधनत्वमित्येतत्प्रसङ्गेन चमसेनापः प्रणयेदित्यत्र विवक्षितं विशेषं दर्शयति । प्रणय इति । अतःशब्दो यस्मादर्थे । यस्माद्गोदोहनद्रव्यं स्वर्गसाधनीभूतदर्शपूर्णमासक्रत्वर्थविशिष्टमपां प्रणयनमुपाश्रित्य पशुकामस्य पशुसिद्धये समर्थंभवति तस्माद्दर्शपूर्णमासप्रकरणे चमसेनापः प्रणयेदित्यत्र प्रणयस्तस्यापूर्वसाधनत्वं च प्राप्तमेव पशुकामवाक्येऽनूद्यते । तच्चोभयमाश्रित्य गोदोहनद्रव्यं पश्वर्थे विधीयते । क्रियोपरागमन्तरेण द्रव्यस्य पुमर्थसाधनत्वानुपपत्तेरित्यर्थः ॥ ८९ ॥

गोदोहनस्य भिन्नत्वाद्भिन्नं चेत्साधनं मतम् ।
प्राप्ता प्रणयतीत्यस्य साध्यभेदाद्विभिन्नता ॥ ९० ॥

चमसात्प्रणयतिकारकात्तथाविधस्य गोदोहनस्य भिन्नत्वात्प्रणयनाख्यमपि साधनं भिद्येतेति शङ्कते । गोदोहनस्येति । यदि गोदोहनचमसभेदात्प्रणयतिभेदस्तदा स्वर्गपशुसाध्यभेदादपि प्रणयतिभेदः स्याज्ज्योतिष्टोमदर्शपूर्णमासवदुभयथाऽप्याश्रित्य विधानप्रक्रियां बाध्येतेति दूषयति । प्राप्तेति ॥ ९० ॥

---

१ ( ङ. 'ति तच्चो' । २ ( च. ) 'रित्येतदुत्त' । ३ ( ग. ) 'रं भ' । ४ ( क. ख. ) 'र्गेण द' । ५ ( ग. घ. च. ) 'पि गु' । ६ ( ग. घ. ) 'देः सं' । ७ ( ग. घ. ) 'दार्थमा' । ८ ( च. 'घ नचोभ' । ९ ( ग. घ. ) 'श्रित्यागो' । १० ( ग. घ. च. ) 'हन द्र' । ११ ( क. ख. ) 'सा प्रण' । १२ ( घ. च. ) 'या बोध्ये' ।

हानोपादानशून्यत्वादप्रामाण्यं ॰ यदि ।
ब्रह्मास्मीति परिज्ञानमप्रमाणं ॰ ॥ ९१ ॥

अनुवादप्रामाण्यप्रसङ्गप्रोक्षमेव परिसमाप्याभि॰ प्रकृतं प्रतिपाद-
यितुं पूर्वपक्षयति । हानेति । प्रवर्तकं निवर्तकं वा ॰रूपत्वविरहे
नास्ति प्रामाण्य वाक्यस्येत्यभ्युपगमेऽपि ॰ वेदान्तानां
प्रवर्तकत्वनिवर्तकत्वविरहितत्वात्तेभ्यो ॰ जा॰ ॰प्रमाणं
स्यादित्याह । ब्रह्मेति ॥ ९१ ॥

आत्मत्वादनुपादेयमनन्यत्वादहेय॰॥
अभिधाश्रुतेश्चेदेतत्किमन्यत्प्रार्थ्यते विधेः ॥

वेदान्तेभ्यो ब्रह्मात्मैकत्वज्ञाने सति कर्तव्यप्रवृत्तिनिवृत्त्योरभावे सर्वकर्तव्यतानिवृत्त्या कृतकृत्यत्वसिद्धेर्विध्यपेक्षामन्तरेण तत्त्वमस्यादिश्रुतेरनतिशयपुरुषार्थहेतुज्ञानजनकत्वात्प्रामाण्यसिद्धिरित्युत्तरमाह । आत्मत्वादिति ॥ ९२ ॥

अनूक्तेरपि मानत्वं नैव ध्वाङ्क्षैर्विलुप्यते ।
नियोगानुप्रविष्टत्वाद्यथैवेहाभिधाश्रुतेः ॥ ९३ ॥

॰भिधाश्रुतेर्विध्यपेक्षामन्तरेणेत्थं प्रामाण्येऽपि यदनुवादशब्दितानां पदाना॰ ॰ादानां च स्वार्थे प्रामाण्यमुक्तं तन्न सिध्यति तेषां नियोगानुप्रविष्टत्वादि॰ ॰शङ्क्याऽऽह । अनूक्तेरिति । यथाऽभिधाश्रुतेः स्वार्थे प्रामाण्य नियोगानुप्र॰ ॰मन्तरेण संभवतीत्युक्तं तथैवानूक्तिशब्दितानां पदानामर्थवादानां च स्वार्थे ॰त्वं नियोगानुप्रविष्टत्वावष्टम्भेन काकोपमैर्मीमांसकैर्न निवारयितुं शक्यते । ॰ामर्थवादानां च नियोगनिरपेक्षमेव स्वार्थं प्रतिपाद्य पश्चात्कैमर्थ्यवशेन ॰नुप्रवेशाभ्युपगमादित्यर्थः ॥ ९३ ॥

एवं च सति दृष्टान्तो भवतां नोपपद्यते ।
॰दे विज्ञानमित्येवं नियमः कुतः ॥ ९४ ॥

॰ प्रामाण्ये सिद्धे नियोगानुप्रविष्टमेव वाक्यं ॰स्तीति फलितमाह । एवं चेति । दृष्टान्ताभावे च ॰मा भवतीति नियमासिद्धिरित्याह । नियोगादिति ॥ ९४ ॥

वादानुवादयोरर्थौ यदि भिन्नः प्रतीयते ।
अगतार्थाधिगन्तृत्वादस्त्वनूक्तेः प्रमाणता ॥ ९५ ॥

किंच वादानुवादयोरर्थैक्ये वादवदनुवादस्यापि प्रामाण्याभ्युपगमध्रौव्यादर्थ-
भेदे वक्तव्ये प्रामाण्यमविशिष्टमेष्टुं शक्यमित्याह । वादेति ॥ ९५ ॥

अन्वक्षं भिन्नरूपा धीरिह वादानुवादयोः ।
अपूर्वाधिगतिः पूर्वमिह बुद्धाववबोधनम् ॥ ९६ ॥

अनूक्तिशब्देन पदान्यर्थवादवाक्यानि च गृहीतानीत्यङ्गीकृत्योक्तमेव प्रपञ्च-
यति । अन्वक्षमिति ॥ ९६ ॥

मृगतोयादिवन्मिथ्या यद्यनूक्तेर्भवेन्मतिः ।
विधेर्निर्विषयत्वं वः सर्वत्रैव प्रसज्यते ॥ ९७ ॥

किंच पदोत्था बुद्धिर्मिथ्या चेन्नियोगस्य निर्विषयत्वं स्याद्यागाद्यनुवादेन
तस्मिन्नियोगाभ्युपगमात्पदजन्यबुद्धेर्मिथ्यात्वे च तदयोगादित्याह । मृगतो-
येति ॥ ९७ ॥

स्वाभिधेयं निराकाङ्क्षो ह्यनुवादः प्रबोधयेत् ।
तत्र चेदप्रमाणं स्यात्स्यात्तदुच्चारणं वृथा ॥ ९८ ॥

अन्यापेक्षामन्तरेण स्वार्थबोधकत्वाच्च पदस्य प्रामाण्यमप्रत्याख्येयमित्याह।
स्वाभिधेयमिति । विपक्षे दोषमाह । तत्र चेदिति ॥ ९८ ॥

साकाङ्क्षत्वानुवादत्वे कुतश्चावगते त्वया ।
अप्रामाण्यान्न चेत्ताभ्यां विधेयप्रक्षयाद्विधेः ॥ ९९ ॥

किंच पदस्य साकाङ्क्षत्वमनुवादत्वं चेष्यते तच्चोभयं पदाद्वा विधेर्वा ज्ञातव्य-
मिति पृच्छति । साकाङ्क्षत्वेति । ताभ्यां साकाङ्क्षत्वानुवादत्वाभ्यां विशिष्टात्प-
दादेव तद्गतमुभयं ज्ञायत चेत्तन्न युक्तं पदप्रमाण्यानङ्गीकारादन्यथा तत्प्रामा-
ण्यप्रसङ्गादित्याह । अप्रामाण्यादिति । न च विधिवशादेव साकाङ्क्षत्वमनुवादत्वं
च पदगतं ज्ञातव्यं तस्य विधेयार्थप्रतिपादनोपक्षीणत्वादित्याह । विधेयेति ।
नञ्पदमत्राप्यनुपपद्यते ॥ ९९ ॥

१ (च.) °ण्यवि°। २ (ङ.) °याविधेः ॥ ९९ ॥ ३ (क.ङ.) °यादाभ्या°।
४ (ग. घ. च.) °दकत्वं°। ५ (ग.) °ज्ञानं त°।

स्वशब्दानभिधेयं यत्तदेवापेक्षते पदम् ।
स्वार्थे तदप्रमाणं चेद्वाक्यार्थस्यान्वयः कुतः ॥७००॥

स्वाभिधेयं निराकाङ्क्षो ह्यनुवादः प्रबोधयेदित्यत्र पदस्य निराकाङ्क्षत्वमुक्तं साधयति । स्वशब्देति । वाक्यार्थप्रतिपत्तिजननार्थं पदं स्वशब्दानभिधेयं पदार्थान्तरमपेक्षते । स्वार्थे तु पदं निराकाङ्क्षमेवेत्यतः स्वाभिधेयं निराकाङ्क्षो बोधयेदिति युक्तमेवेत्यर्थः । पदस्य पदार्थे निराकाङ्क्षप्रामाण्याभावे वाक्यार्थप्रतिपत्तिरयुक्ता स्यादित्याह । स्वार्थ इति ॥ ७०० ॥

अप्रमाणमिति ज्ञानं कस्मादज्ञायि कथ्यताम् ।
विद्यमानोपलम्भानि न ह्यभावं प्रमिण्वते ॥ १ ॥

पदमप्रमाणमिति पदस्य प्रमाणत्वाभावज्ञानं प्रत्यक्षादिभ्यो वा पदादेव वा सिध्यतीति पृच्छति । अप्रमाणमिति । प्रथमं प्रत्याह । विद्यमानेति ॥ १ ॥

परस्वभावविध्वंसवर्त्मनैवाऽऽत्मवस्तुनः ।
वक्ष्यत्यवगतिं चोर्ध्वं विधिनैवेतिदुःस्थितम् ॥ २ ॥

द्वितीये पदप्रामाण्यमप्रतिहतमित्यभिप्रेत्याभिधाश्रुतेर्विध्यनपेक्षं प्रामाण्यमित्यत्र हेत्वन्तरमाह । परस्वभावेति । अन्नमाणमनोविज्ञानानामनात्मस्वभावानां प्रतिषेधद्वारेणैवाऽऽत्मवस्तुनो ब्रह्मणोऽवगतिमुत्तरत्र भृगुवल्ल्यां श्रुतिर्वक्ष्यति । अतोऽपि विधिं विनैवावगतिरित्यस्यार्थस्य स्थितत्वादभिधावाक्यमेवात्र प्रमाणमित्यर्थः ॥ २ ॥

व्यावृत्तिः परतोऽभावो न च तस्येन्द्रियेण हि ।
संबन्धोऽस्ति ततो भेदः प्रमाणैर्नोपलभ्यते ॥ ३ ॥

अन्नप्राणादिनिराकरणेन वस्तुसिद्धिर्विधिवादिना नेष्यते किंतु ततो भिन्नत्वेन तत्सिद्धिरिष्टेति चेत्तत्रान्नादेर्वस्तुनोभेदो व्यावृत्तिर्भावोऽभावो वा । भावश्चेत्पृथक्त्वादिरूपस्य तस्य परस्पराश्रयत्वादिदुष्टत्वादप्रामाणिकत्वमित्यभिप्रेत्य द्वितीयं प्रत्याह । व्यावृत्तिरिति । अभावस्येन्द्रियसंप्रयोगाभावे तत्पूर्वकस्य प्रमाणान्तरस्यापि तत्र न प्रवृत्तिरित्याह । तत इति ॥ ३ ॥

---

१ (ग. च) °निरपेक्षप्रा° । २ (ग. घ.) °लम्भानि । ३ (च.) °मितीति । ४ (क ख.) °स्यप्यान° । ५ (ग.) °स्थित° ॥२॥ ६ (ग.) °प्यम° । ७ (ठ.) आवृ° ।

प्रमाभावस्वरूपत्वान्नाप्यभावाद्भिदेष्यते ।
संवित्त्यभावो नैवेह प्रकाशयति किंचन ॥ ४ ॥

अभावाऽऽत्मनो भेदस्याभावंप्रमाणादेव सिद्धिरित्याशङ्क्य प्रमाणाभावाद्वा संविदभावाद्वा तत्सिद्धिरिति विकल्प्याद्यं दूषयति । प्रमेति । प्रमाणाभावस्य प्रमाणत्वं व्याहतमित्यर्थः । न द्वितीयः प्रकाशाभावस्य प्रकाशकत्वविरोधादित्याह । संवित्तीति ॥ ४ ॥

इति स्वाभिमतं सर्वं तेन चास्य विरुद्धता ।
वस्तुवृत्तानुरोधेन व्यापारः फलवानिह ॥ ५ ॥

किंच प्रमाणाभावः संविदभावो मेयाभावश्चेत्यभावमात्रमेव प्राभाकरैर्नाभ्युपगम्यते । तथा चाभावादभावात्मनो भेदस्य सिद्धिरिति स्वोक्तविरुद्धमित्याह । इति स्वाभिमतमिति । अप्रमाणादिभ्यो भिन्नत्वेनाऽऽत्मवस्तुनो बोधनं यतः श्रुत्या नोपपद्यतेऽतस्तन्निषेधेनैवाभिधायकवाक्यस्यात्मबोधने व्यापारः स्यादित्याह । वस्तुवृत्तेति ॥ ५ ॥

न कुलालवशाद्व्योम शरावायाप्यलं यतः ।
आत्मज्ञानं प्रसिद्धं चेद्विधेरेव विधिः कुतः ॥
अथाप्रसिद्धं नितरां विधिर्नैवोपपद्यते ॥ ६ ॥

अभिधाश्रुतिजनितस्य ज्ञानस्य स्वतोऽप्रमाणत्वात्तत्प्रामाण्याय ज्ञाने विधिरित्याशङ्क्याऽऽकाशं स्वतः शरावभवनायोग्यं कुलालवशान्न शरावो भवति तथा स्वतोऽप्रमाणस्य विधिवशात्प्रामाण्यायोगान्नैवमित्याह । नेत्यादिना । किंचाऽऽत्मज्ञानस्य प्रसिद्धत्वेऽप्रसिद्धत्वे च न तत्र विधिः संभवतीत्याह । आत्मज्ञानमिति ॥ ६ ॥

कैवल्यकारिता बुद्धेर्नियोगादेव चेद्भवेत् ।
नियोगार्थावगतये नियोगोऽन्योऽपि मृग्यताम् ॥ ७ ॥

ज्ञानस्य मोक्षसाधनत्वसिद्धये ज्ञाने विधिः स्यादिति शङ्कते । कैवल्येति । तर्हि नियोगस्यापि पुमर्थसाधनत्वाभ्युपगमान्नियोगात्पुमर्थसिद्धये नियोगे नियोगान्तरमन्वेष्टव्यमिति निराचष्टे । नियोगार्थेति ॥ ७ ॥

---

१ (ग. घ.) °प्रमामाण्यादे°। २ (ग. घ.) °विदाभावात्तत्सि°। ३ (ग. घ.) °त्वेन ना°। ४ (ङ.) °ते तत्रि°। ५ (ग. घ. च.) °वात्विधा°। ६ (ग. घ.) °स्यावबो°। ७ (ग. घ. च.) °बोधेन व्या°। ८ (क. ख.) °भेरिव°। ९ (ग. घ.) °तोऽप्रामाण्यस्य°।

तत्त्वमस्यादिवाक्योत्थं विज्ञानं स्वफलं स्वतः ।
अतोऽवगम्यतेऽस्माभिस्तृप्त्याख्यफलवद्भुजेः ॥ ८ ॥

अतिप्रसङ्गपरिहारार्थं वाक्योत्थं ज्ञानं स्वारस्येनैव पुमर्थं साधयतीति फलितमाह । तत्त्वमस्यादीति ॥ ८ ॥

स्वाध्यायोऽध्येतव्य इति विध्यन्तरमृते यथा ।
विध्यर्थावगमस्तद्वदस्त्विहाप्यभिधाश्रुतेः ॥ ९ ॥

अभिधाश्रुतेः स्वार्थबोधकत्वं विधिव्यतिरेकेण नास्तीत्याशङ्क्याध्ययनविधिदृष्टान्तेन परिहरति । स्वाध्याय इति ॥ ९ ॥

नियोगविरहादस्य यद्यर्थावगमोऽमृषा ।
इहापि तदमानत्वमभिधानश्रुतेरिव ॥ १० ॥

नियोगमन्तरेणाभिधावाक्यादर्थावगमो मिथ्येत्याशङ्क्याध्ययनविधिवाक्यादपि तर्हि विध्यन्तरमन्तरेण वाक्यार्थप्रतिपत्तिर्मिथ्या स्यादित्याह । नियोगेति ॥ १० ॥

भवेद्विध्यनुकूला वा अभिधा यदि वा विधिः ।
अभिधावर्त्मयायी स्यात्तत्र दोषगुणाविमौ ॥ ११ ॥

वेदान्तवाक्ये विध्यभ्युपगमेऽपि किं विधेरभिधानगुणत्वं किं वाऽभिधाया विध्यनुगुणत्वमिति विकल्पयति । भवेदिति । तत्राभिधाश्रुतेर्विध्यनुगुणत्वे स्वपक्षसिद्धिर्मत्पक्षासिद्धिश्च विधेरभिधाश्रुत्यनुगुणत्वे स्वपक्षासिद्धिर्मत्पक्षसिद्धिश्चेत्यभिप्रेत्याऽऽह । तत्रेति ॥ ११ ॥

स्याद्द्युलोकाग्निवज्ज्ञानं यदि विध्यनुरोधिनी ।
अभिधाश्रुतिरदृष्टार्था सम्यग्ज्ञानं तु दुर्लभम् ॥१२॥

अभिधाया विध्यनुगुणत्वे सूचितं दोषं विशदयति । स्यादिति ॥ १२ ॥

अथाभिधानुरोधी स्यान्नियोगोऽयं तथाऽपि च ।
अभिधानुविधायित्वाद्विध्यर्थोऽत्र सुदुर्लभः ॥१३॥

विधेरभिधानुरोधित्वेऽपि सूचितं दोषं प्रकटयति । अथेति ॥ १३ ॥

---

१ ( क. ख. ग. ) °स्वार्थं बो° । २ ( ङ ) °वाक्यैर्विध्य° । ३ ( ङ ) °विट° ।
४ ( ङ ) °धा तु रोधि स्या° ।

प्राक्तु वाक्यार्थविज्ञानात्तन्निविष्टपदार्थयोः ।
अन्वयव्यतिरेकाख्यविवेकाय विधिर्भवेत् ॥ १४ ॥

आत्मज्ञाने विध्यभावेऽपि वेदान्तेषु विध्यभावे मुमुक्षूणां प्रवृत्तिर्याद्दच्छिकी स्यादित्याशङ्क्य पदार्थविवेके विध्यभ्युपगमान्मैवमित्याह । प्राक्त्विति ॥ १४ ॥

वाक्यार्थप्रतिपत्तौ हि पदार्थज्ञानमेव च ।
प्रतिबन्धो यतस्तस्मादन्वयार्थवलोकनम् ॥ १५ ॥

वाक्यार्थज्ञानस्यापेक्षितत्वात्तत्प्रतिबन्धनिवृत्त्यर्थे विधावर्थ्यमाने किमिति पदार्थपरिशोधने विधिरित्याशङ्क्याऽऽह । वाक्यार्थेति ॥ १५ ॥

वाक्यार्थज्ञानकाले यः पदार्थो नैव विद्यते ।
कर्तव्यः कारकापेक्षो विधेयः स न संशयः ॥ १६ ॥

कर्मकाण्डे विधेयमंशं यागादिकं दर्शयति । वाक्यार्थज्ञानेति ॥ १६ ॥

विपरीतस्ततो यस्तु वाक्यादेवावगम्यते ।
नित्योऽकर्मविमुक्तः सन्न विधेयः कथंचन ॥ १७ ॥

कर्मकाण्डवज्ज्ञानकाण्डेऽपि किंचिद्विधेयं भविष्यतीत्याशङ्क्य ज्ञाने वा तद्विषयो वा निदिध्यासनं वाऽत्र विधेयमिति विकल्प्य ज्ञाने विधेर्निरस्तत्वात्तद्विषये च अज्ञातमभावे नित्यसिद्धे विधेरसंभवान्न कल्पद्वयमित्याह । विपरीत इति ॥१७॥

स्वसिद्धेः कारणं नान्यज्ज्ञानमज्ञानहानये ।
यस्मादपेक्षते तस्मान्न निदिध्यासनाय तत् ॥ १८ ॥

ज्ञानस्य निदिध्यासनापेक्षस्याज्ञाननिवर्तकत्वात्तस्य तच्छेषत्वान्निदिध्यासनं विधेयमिति कल्पान्तरं मत्याह । स्वसिद्धेरिति । ज्ञानस्य स्वोत्पत्तिमात्रेणाज्ञाननिवर्तकत्वान्निदिध्यासनशेषत्वाभावान्न तस्य विधेयत्वमित्यर्थः ॥ १८ ॥

सिद्धमप्यात्मकार्यस्य कारणं सिद्धये न चेत् ।
विध्यपेक्षं तदेव स्यान्न स्वसिद्धिप्रकाशकम् ॥ १९ ॥

उक्तमेव प्रपञ्चयति । सिद्धमपीति । कारणमज्ञाननिवृत्तौ ज्ञानं तद्यदि लब्धात्मकमपि स्वफलस्याज्ञाननिवृत्तिलक्षणस्य प्राप्तये न भवति तर्हि तदेव निदिध्यासनविध्यपेक्षं स्वसिद्धेः स्वफलस्य प्रागुक्तस्य प्रकाशकं साधकमित्येतन्न स्यात् । न हि स्वतोऽसती शक्तिः कर्तुमन्येन शक्यत इतिन्यायादित्यर्थः ॥ १९ ॥

---

१ (ग. घ.) °कात्मवि°। २ (क.ख.) °क्यार्थप्र°। ३ (ख. ङ.) °दार्थज्ञा°। ४ (ग.घ.) °थविलोचन°। ५ (ग.घ) °त्वात्प्र°। ६ (ग.घ.) °नं च त°। ७ (ग. घ.) °रक सि°। ८ (ग. घ. च.) °न प्रम°।

परमात्मधियैतस्मिन्प्रत्यगात्मनि केवले।
निरस्तायामविद्यायां भयं नास्ति कुतश्चन ॥ २६ ॥

उक्तमेवार्थं विवृणोति। परमात्मेति ॥ २६ ॥

निर्धूतपदवाक्यार्थमित्येवं प्रतिपत्तये।
यतो वाचो निवर्तन्त इत्येवं वचनं श्रुतेः ॥ २७ ॥
तथा मनोविकल्पानां निषेधाय परात्मनि।
धिया सहेत्यतो वक्ति श्रुतिर्याथात्म्यबोधिनी ॥२८॥

एवं मन्त्रं व्याख्याय तदीयपूर्वार्धस्य तात्पर्यार्थमाह। निर्धूतेति॥२७ ॥ २८ ॥

निषिध्य नायमात्मेति भिन्नमात्मोपलम्भनम्।
अनन्यानुभवं ब्रह्म यमेवेत्याह नः श्रुतिः ॥ २९ ॥

प्रत्यगात्मा न पदार्थो न वाक्यार्थो नापि विकल्पज्ञानानां विषयो भवतीत्यस्मिन्नेवार्थे नायमात्मा प्रवचनेन लभ्य इत्यादिश्रुत्यन्तरसंवादं दर्शयति। निषिध्येति ॥ २९ ॥

प्रत्यग्ब्रह्मावसायित्वाद्भेदानां रज्जुसर्पवत्।
उदाहारि ततः श्रुत्या ह्ययं श्लोको मनोमये ॥३०॥

यदि कोशपञ्चकातिरिक्तप्रत्यग्ब्रह्मविषयोऽयं श्लोकस्तर्हि किमिति मनोमयकोशे यथोक्तश्लोकस्योदाहरणमित्याशङ्क्य कोशपञ्चकस्य प्रत्यगात्मातिरेको नास्तीति प्रतिपादनायेत्याह। प्रत्यगिति ॥ ३० ॥

विद्वानेव परं ब्रह्म आत्मनाऽऽत्मानमद्वयम्।
न बिभेत्येकलोऽद्वन्द्वो भयहेतोरसंभवात् ॥ ३१ ॥

द्वैतस्य भयकारणत्वात्तस्य चाविद्याकार्यत्वाद्विद्ययाऽविद्यानिवृत्तौ भयहेतोरभावाद्विद्वानभयं ब्रह्मैव भवतीति मन्त्रार्थमुपसंहरति। विद्वानिति। अद्वयमात्मानमवगच्छतीतिशेषः ॥ ३१ ॥

तस्मात्कूटस्थविज्ञानं प्रत्याख्याताखिलद्वयम् ।
आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चन ॥ २० ॥

विधेयज्ञानात्पुरुषार्थसिद्धिरिति वक्तुमशक्यत्वाद्वास्योत्थज्ञानादेव परिपूर्णपुरुषार्थसिद्धिरिति वाक्यद्वयोपादानपूर्वकं विचारफलमुपसंहरति । तस्मादिति ॥ २० ॥

ब्रह्मणो ब्राह्मणस्येति भेदश्चात्रौपचारिकः ।
राहोः शिरोवन्मुख्यस्तु नैव स्यान्निर्गुणत्वतः ॥२१॥

आनन्दं ब्रह्मणो विद्वानिति भेदनिर्देशादानन्दब्रह्मणोर्गुणगुणिभावः स्यादित्याशङ्क्याऽऽह । ब्रह्मण इति । ब्रह्मविदो ब्राह्मणस्य ब्रह्मीभूतस्य स्वरूपभूतमानन्दं साक्षात्कुर्वतो भयहेत्वभावान्नास्ति भयमित्यस्यार्थस्यात्र विवक्षितत्वाद्ब्रह्मणि गुणगुणिभावस्याभावाद्भेदस्यात्र राहोः शिरोवत्कल्पितत्वाद्वस्तुतोऽभावादर्थशून्या षष्ठीत्यर्थः ॥ २१ ॥

महिमा ब्राह्मणस्यैष हानिवृद्धिविवर्जितः ।
स्वतः सिद्धेर्विजानंस्तं न बिभेति कुतश्चन ॥ २२ ॥

विद्वानित्यादेरर्थं विवृणोति । महिमेति ॥ २२ ॥

विद्वान्सन्न बिभेतीति विद्याकालं भवेत्फलम् ।
न तु स्वर्गादिवत्प्राप्यं भुञ्जानस्तृप्यतीतिवत् ॥२३॥

विद्वान्न बिभेतीति विद्यातत्फलयोः समानकालत्वनिर्देशस्य तात्पर्यमाह । विद्वानिति ॥ २३ ॥

यतोऽविद्यातिरेकेण प्रतिबन्धो न विद्यते ।
तन्नाशानन्तरां मुक्तिं विद्वानिति ततोऽवदत् ॥२४॥

ज्ञानोदयनान्तरीयकत्वेन मुक्तिव्यवधानस्याज्ञानस्य निवृत्तेश्च ज्ञानसमानकालत्वं मुक्तिर्वक्तव्येत्याह । यत इति ॥ २४ ॥

भयहेतुर्द्वयं यस्मात्तच्चाविद्यासमुद्भवम् ।
प्लुष्टायां विद्यया तस्यां न कुतश्चन भीर्भवेत् ॥२५॥

इतोऽपि ज्ञानतत्फलयोरेककालत्वं युक्तमित्याह । भयेति ॥ २५ ॥

---

१ (ग. घ.) °र्णसि° । २ (ग.) वाक्यादद्व° । ३ (ग.) °लमित्युप° । ४ (ख.) °स्यैव हा° । ५ (ग. घ.) °मजेरफ° । ६ (ग. घ. ङ.) °वन्नयाय्यं मु° । ७ (घ.) °न्तरं मु° । ८ (क. ङ.) °दयाना° । ९ (ग. घ.) °काले मु° । १० तीरयाशम् । दग्धायां । ११ (ग. घ.) °तोज्ञा° । १२ (च.) °लत्वमुक्त° ।

परमात्मधियैतस्मिन्प्रत्यगात्मनि केवले।
निरस्तायामविद्यायां भयं नास्ति कुतश्चन ॥ २६ ॥

उक्तमेवार्थं विवृणोति। परमात्मेति ॥ २६ ॥

निर्धूतपदवाक्यार्थमित्येवं प्रतिपत्तये।
यतो वाचो निवर्तन्त इत्येवं वचनं श्रुतेः ॥ २७ ॥
तथा मनोविकल्पानां निषेधाय परात्मनि।
धिया सहेत्यतो वक्ति श्रुतिर्याथात्म्यबोधिनी ॥२८॥

एवं मन्त्रं व्याख्याय तदीयपूर्वार्धस्य तात्पर्यार्थमाह। निर्धूतेति॥२७ ॥ २८ ॥

निषिध्य नायमात्मेति भिन्नमात्मोपलम्भनम्।
अनन्यानुभवं ब्रह्म यमेवेत्याह नः श्रुतिः ॥ २९ ॥

प्रत्यगात्मा न पदार्थो न वाक्यार्थो नापि विकल्पज्ञानानां विषयो भवतीत्यस्मिन्नेवार्थे नायमात्मा प्रवचनेन लभ्य इत्यादिश्रुत्यन्तरसंवादं दर्शयति। निषिध्येति ॥ २९ ॥

प्रत्यग्ब्रह्मावसायित्वाद्भेदानां रज्जुसर्पवत्।
उदाहारि ततः श्रुत्या ह्ययं श्लोको मनोमये ॥३०॥

यदि कोशपञ्चकातिरिक्तप्रत्यग्ब्रह्मविषयोऽयं श्लोकस्तर्हि किमिति मनोमयकोशे यथोक्तश्लोकस्योदाहरणमित्याशङ्क्य कोशपञ्चकस्य प्रत्यगात्मातिरेको नास्तीति प्रतिपादनायेत्याह। प्रत्यगिति ॥ ३० ॥

विद्वानेव परं ब्रह्म आत्मनाऽऽत्मानमद्वयम्।
न बिभेत्येकलोऽद्वन्द्वो भयहेतोरसंभवात् ॥ ३१ ॥

द्वैतस्य भयकारणत्वात्तस्य चाविद्याकार्यत्वाद्विद्ययाऽविद्यानिवृत्तौ भयहेत्वभावाद्विद्वानभयं ब्रह्मैव भवतीति मन्त्रार्थमुपसंहरति। विद्वानिति। अद्वयमात्मानं गच्छतीतिशेषः ॥ ३१ ॥

ननु साध्वक्रियाहेतुः पापानुष्ठानमेव च ।
इत्येतस्य निषेधार्थमेतं हेत्युच्यतेऽधुना ॥ ३२ ॥

एतं हेत्यादिवाक्यस्य व्यावर्त्यामाशङ्कामाह । नन्विति । हेतुर्विदुषोऽपि भयस्येतिशेषः । तत्रोत्तरत्वेन वाक्यमवतारयति । इत्येतस्येति ॥ ३२ ॥

नैतमेवंविदं यस्माद्ध्वावेतीहावधारणे ।
न तपत्यन्तकाले तमकर्तृत्वात्मवेदिनम् ॥ ३३ ॥

अवतारितस्य वाक्यस्यार्थमाह । नैतमिति । यस्मादेवंविदमकर्तृत्वाभोक्तृत्वोपलक्षितब्रह्मात्मवेदिनं निषिद्धसेवनं विहिताकरणं चान्तकाले नैव तपति प्रकृते वाक्ये वावेतिनिपातस्यावधारणे प्रयुक्तत्वात्तस्मान्निषिद्धसेवनादि विदुषोऽपि भयकारणमस्तीत्येवं न शङ्कितव्यमित्यर्थः ॥ ३३ ॥

क्रियाफलस्य सर्वस्य कर्तृगामित्वकारणात् ॥ ३४ ॥
धिङ्मां योऽहं शुभं कर्म जीवन्नाकरवं क्वचित् ।
अकार्षं च सदा पापं ह्यतो भयमुपस्थितम् ॥३५॥

विहितानुष्ठानं निषिद्धानुष्ठानं च विदुषोऽकर्तुरपि किमिति भयकारणं न भवतीत्याशङ्क्याऽऽह । क्रियेति । किमहमित्यादिवाक्यद्वयं योजयति । धिगिति ॥ ३४ ॥३५॥ . *

अस्माद्धेतोर्महांस्तापोऽविद्यासंवीतचेतसाम् ।
जायते मृतिकाले हि हिक्किकावशवर्तिनाम् ॥३६॥

पुण्यस्याकरणात्पापस्य करणाच्च महद्भयं कदा केषां चेत्यपेक्षायामाह । अस्मादिति ॥ ३६ ॥

फलस्यायं स्वभावो हि यत्स्वकर्त्रनुगामिता ।
अतो न तपतो ज्ञात्थावकर्तारं शुभाशुभौ ॥ ३७ ॥

पुण्यपापयोर्मरणकाले तापकत्वं विशेषाभावाद्विदुषोऽपि भविष्यतीत्याशङ्क्याऽऽह । फलस्येति ॥ ३७ ॥

कस्मान्न तपतस्तौ चेद्धर्माधर्मौ विपश्चितम् ।
कौटस्थ्याददयत्वाच्च पुण्यस्येव शुभाशुभे ॥ ३८ ॥

विदुषोऽपि पुण्यपापयोरतापकत्वे हेत्वन्तरं वक्तुं पृच्छति । कस्मादिति । विवक्षितं हेत्वन्तरमुदाहरति । कौटस्थ्यादिति । वस्तुसामर्थ्यादेव सर्वप्रकारविक्रियाविरहितत्वाद्द्वैताभावोपलक्षितपूर्णस्वभावत्वाच्च विद्योदयनान्तरीयकत्वेन विद्वानविद्यया सह पुण्यपापे दग्ध्वा स्वस्थोऽवतिष्ठते । तथा च पुण्यपापयोर्नास्ति विदुषि तापकत्वमित्यर्थः ॥ ३८ ॥

स य एवं यथोक्तार्थं विद्वानेते शुभाशुभे ॥ ३९ ॥
साधुकर्मक्रिया या च पापानुष्ठानमेव च ।
अकर्ताऽस्मीतिविज्ञानहुताशेनाञ्जसा हुतम् ॥ ४० ॥
दग्ध्वा निरन्वये कृत्वा ह्यात्मानं स्पृणुते यतः ।
स्पृणोतिर्बलकर्माऽयमात्मानं बलयत्यतः ॥ ४१ ॥

उक्तेऽर्थे स य इत्यादिवाक्यं योजयति । स य इति । यथोक्तार्थं सत्यज्ञानादिलक्षणमेवमुक्तेन प्रकारेण प्रत्यगात्मतया यो विद्वानवतिष्ठते स पुनरविद्याकार्ये शुभाशुभे दग्ध्वाऽऽत्मानं स्पृणुते बलयतीत्यर्थः । शुभाशुभे दग्ध्वेत्युक्तमेव व्यनक्ति । साधुकर्मेति । यस्मादात्मानं विद्वानुक्तरीत्या स्पृणुते तस्मान्नास्ति तस्मिन्धर्मादेस्तापकत्वमितिशेषः । स्पृणुत इति क्रियापदस्य विवक्षितमर्थमाह । स्पृणोतिरिति । अत इत्यहं ब्रह्मेतिज्ञानादित्यर्थः ॥ ३९ ॥ ४० ॥ ४१ ॥

अविद्यासंश्रयादात्मा बलीयानपि दुर्बलः ।
अविद्याराजयक्ष्माऽस्य कार्श्यमेति तया यतः ॥
ध्वस्तायां विद्यया तस्यामात्मानं बलयत्यतः ॥४२॥

आत्मनो बलस्य स्वाभाविकत्वात्किं विद्याकृतेन बलेनेत्याशङ्क्याऽऽह । अविद्येति । आत्मबलस्य स्वाभाविकत्वेऽप्यविद्याकृतदौर्बल्यस्य विद्यया निरसने स्वाभाविकबलाभिव्यक्तेर्विद्याधीनमस्य बलमभीष्टमित्यर्थः ॥ ४२ ॥

---

१ ( ङ. ) °स्येकशु° । २ ( ग. घ. च. ) °दुषि पु° । ३ ( क. ङ. ) °क्षितहे° । ४ ( ग. घ. ) °यार° । ५ ( ग. घ. ) °सा हुव° ( ङ. ) °सा हुत° । ६ ( ग. घ. ) दग्ध्वा सुक° । ७ ( ग. घ. च. ) °ज्ञास्मि° । ८ ( च ) विद्यया कृ° ।

बोधेनैव निरस्तायां निद्रायां स्वप्नदर्शनम् ।
बुद्धात्मशेषतामेति तथैहैकलशेषताम् ॥ ४३ ॥

अविद्यातत्कार्ययोर्विद्यानिरस्तयोरात्मनः सकाशाद्भेदेनावस्थानमाशङ्क्य दृष्टान्तेन निराचष्टे । बोधेनेति ॥ ४३ ॥

अथवा एष एवोभे सत्यादृश्यादिलक्षणः ।
शुभाशुभे यतस्तस्मादात्मानं वलयत्ययम् ॥ ४४ ॥

एते पुण्यपापे विद्यया दग्ध्वाऽऽत्मानं वलयतीति पूर्ववाक्यस्यार्थो व्याख्यातः । उभे ह्येवैष इत्यादिसमनन्तरवाक्यस्यार्थं कथयति । अथवेति । उक्तलक्षणो विद्वान्विद्याबलादुभे पुण्यपापे स्वात्मानमेव करोतीति कुतस्तयोस्तापकत्वाशङ्केत्यर्थः ॥ ४४ ॥

लिङ्गदेहाश्रितं कार्श्यं तच्च कर्मनिबन्धनम् ।
कर्म कर्त्रादिसंभूतं कर्त्राद्यज्ञानहेतुकम् ॥ ४५ ॥
अहं ब्रह्मेत्यतो ज्ञानाद्ध्वस्तायां प्रत्यगात्मनि ।
कार्श्यहेतावविद्यायामेकत्वाद्बलयत्ययम् ॥ ४६ ॥

वाक्यद्वयार्थमुपसंहरति । लिङ्गदेहेति ॥ ४५ ॥ ४६ ॥

स्वतो बुद्धं स्वतः शुद्धं स्वतो मुक्तं यथोदितम् ।
वेदैवं यः स्वमात्मानं फलं तस्येदृशं स्मृतम् ॥ ४७ ॥

य एवं वेदेत्यस्यार्थमाह । स्वत इति । ईदृशमविद्यानिरासद्वारेण बलात्मकमिति यावत् ॥ ४७ ॥

ईतीत्युक्तपरामर्शो ब्रह्मणोऽद्वयरूपिणः ।
साक्षात्तद्बोधहेतुत्वाद्वल्ली ह्युपनिषद्भवेत् ॥ ४८ ॥

इत्युपनिषदित्यत्रेतिशब्दार्थमाह । इतीत्युक्तेति । उपनिषच्छब्दस्यौपचारिकमर्थं कथयति । साक्षादिति ॥ ४८ ॥

विद्यैवोपनिषज्ज्ञेया तयैवोपेत्य निर्द्वयम् ।
विन्दते निर्भयात्मानं तस्मादुपनिषत्स्मृता ॥ ४९ ॥

मुख्यमुपनिषच्छब्दार्थं कथयति । विद्यैवेति ॥ ४९ ॥

---

१ ( ग. घ. ) °धेनेव° । २ ( क. ख. ) बुद्धः स्व° । ३ ( ग. घ. ) °निरसनद्वा° ।
४ ( क. ख. ) इति युक्त° ( ग. घ. ) इतिरुक्त° ।

इमां वल्लीं तु तादर्थ्यात्परब्रह्मविदो गुणात् ।
सदोपनिषदित्यूचुस्त्यक्तसर्वैषणाः शुभाम् ॥ ७५० ॥
इति ब्रह्मवल्ल्या वार्तिकानि समाप्तानि ॥

वल्ल्यामुपनिषच्छब्दमवृत्तिमौपचारिकीमुक्त्वामुपसंहरति । इमामिति ॥७५०॥

॥ इति ब्रह्मवल्लीवार्तिकटीका समाप्ता ॥

---

## अथ भृगुवल्ली ।

सत्यं ज्ञानमनन्तं यद्ब्रह्मोक्तं प्रत्यगात्मनि ।
तदभिन्नं परं ज्ञानमुक्तं मोहापनोदि यत् ॥ १ ॥

पूर्वोत्तरवल्ल्योः संगतिकीर्तनार्थं वृत्तं संकीर्तयति । सत्यमिति । यद्ब्रह्म सत्यज्ञानाद्यात्मकं तत्प्रत्यगात्मनि स्वरूपभूतं यो वेद निहितं गुहायामित्यत्रोक्तं तेन च ब्रह्मणा मत्यंगभूतेनाभिन्नमेकीभूतं यत्परं ज्ञानं तदेव मोहनिवर्तकमिति चोक्तम् । स्वरूपज्ञानस्यैव वाक्योत्थबुद्धिवृत्त्यवच्छिन्नस्याज्ञाननिवर्तकत्वादित्यर्थः॥ १ ॥

अभिधित्सुरथेदानीं यथोक्तज्ञानसिद्धये ।
यत्साधकतमं तस्य प्राप्त्यै प्रववृते श्रुतिः ॥ २ ॥

आनन्दवल्लीतात्पर्यार्थमनूद्य भृगुवल्लीतात्पर्यार्थमाह । अभिधित्सुरिति । सकार्याज्ञाननिवर्तकस्य ब्रह्मात्मैकत्वज्ञानस्य साधनोपन्यासार्थं भृगुवल्लीप्रवृत्तिरित्यर्थः ॥ २ ॥

गुरुद्वारैव विद्येयमाचार्याद्धेति नः श्रुतिः ।
शिष्योपाध्यायरूपेयमत आख्यायिकोच्यते ॥ ३ ॥

किमित्येषा वल्ली शिष्याचार्यक्रमेणोपन्यस्यते तत्राऽऽह । गुरुद्वारेति ॥३॥

अधीहि भगवो ब्रह्मेत्येतन्मन्त्राभिशब्दितम् ।
अन्तर्णीतणिजर्थस्य ह्यधीहीति भवेद्यतः ॥ ४ ॥

आख्यायिकातात्पर्यं दर्शयित्वा वाक्यद्वयाभिप्रायमुक्त्वा तृतीयं वाक्यमुपसदनमन्त्रप्रदर्शनार्थमित्याह । अधीहीति । अध्यापयेत्यस्मिन्नर्थे भवत्यधीहीति पदम् । यथाश्रुतार्थस्यात्रासंभवादित्याह । अन्तर्णीतेति ॥ ४ ॥

---

१ (ग.) °सर्वेष° । २ (ग. घ.) शुभम् । ३ (ग. घ.) न ब्र । ४ (च.) °त्यगात्मभूते° । ५ (ङ.) °त्यैव मत्र° । ६ (ग. घ. ङ.) °स्य त्वधी° ।

जिज्ञासुः परमं ब्रह्म श्रद्धाभक्तिपुरःसरः ।
उपसीदेद्वरीयांसं मन्त्रेणानेन शुद्धधीः ॥ ५ ॥

उक्तार्थे मन्त्रस्य विनियोगं दर्शयति । जिज्ञासुरिति ॥ ५ ॥

मोक्षादर्वाक्षु भोगेषु व्यावृत्तकरणो भृगुः ।
अध्यापय परं ब्रह्मेत्यपृच्छद्वरुणं गुरुम् ॥ ६ ॥

यथोपसदने बुद्धिशुद्धिरधिकारिविशेषणं तथा वैराग्यमपीत्याह । मोक्षादिति । अध्यापय स्मारय ज्ञापयेति यावत् ॥ ६ ॥

अन्नं प्राणमितीत्यादि वरुणो भृगवेऽवदत् ।
देहकारणमन्नं स्यात्प्राणः प्राणादिकारणम् ॥
चक्षुः श्रोत्रं मनो वाक्च करणान्युपलब्धये ॥ ७ ॥

तस्मा एतदित्यादिवाक्यद्वयमुत्थापयति । अन्नमिति । अन्नप्राणचक्षुरादिशब्दानामसंकीर्णमर्थं कथयति । देहेति । प्राणादीन्पञ्चवृत्तिभेदान्करोतीति प्राणादिकारणो वृत्तिमान्वायुरेवेत्यर्थः ॥ ७ ॥

अन्वयव्यतिरेकोक्तिर्ब्रह्मणो वोपलब्धये ॥ ८ ॥
अनिर्देश्यस्य वा भूम्नो लक्षणस्य प्रवृत्तये ।
अन्नं प्राणमितीत्यादि प्रत्यग्धर्मोपदिश्यते ॥ ९ ॥

ब्रह्म मां ज्ञापयेति प्रष्टे भृगवे किमित्यन्नादिसंकीर्तनमित्याशङ्क्यान्नप्राणादिव्यभिचारित्वादनात्मा स्रगादिवदात्मा त्वव्यभिचारीत्येवंविधान्वयव्यतिरेकयोर्ब्रह्मज्ञानोपायत्वेन कथनार्थमन्नादिसंकीर्तनं क्रियते । न हि तदन्नादिना विनाऽन्वयव्यतिरेकवचनमुचितमित्याह । अन्वयेति । वाशब्दो वक्ष्यमाणविवक्षया प्रयुज्यते ॥ ८ ॥

अन्नप्राणादिसंकीर्तनं ब्रह्मस्वरूपविवक्षयेति पक्षान्तरमाह । अनिर्देश्यस्येति ॥ ९ ॥

---

१ (ग घ.) शुध्यति । २ (ग. घ. ङ.) °क्तार्थस्य म° । ३ (च.) °ने शुद्धबुद्धिर° । ४ (ग.) °रण । चं° । ५ (ग घ.) °दिकरणवृ° । ६ (क.ख.) °दिको° ।

प्राणस्य प्राणमित्येवं श्रुतिरप्याश्रिता भवेत् ।
कर्मश्रुतिश्च ब्रह्मत्वे वाचमित्यादि युज्यते ॥ १० ॥

प्रत्यगात्मस्वरूपलक्षणार्थत्वेन प्राणादिसंकीर्तने श्रुत्यन्तरमपि संगृहीतं भवतीत्याह । प्राणस्येति । प्राणादिशब्देन प्रत्यग्भूतब्रह्मग्रहणे प्राणं वाचमित्यादिद्वितीयाश्रयणमन्यशेषत्वमन्तरेण मुख्यार्थं सिध्यतीतिद्वितीयपक्षस्य गमकमाह । कर्मेति ॥ १० ॥

अन्नादयः पदार्था वा अन्वयव्यतिरेकयोः ।
इहोच्यन्ते प्रवृत्त्यर्थं सौकर्यं स्यात्कथं न्विति ॥ ११ ॥

प्रथमपक्षमुपसंहरति । अन्नादय इति ॥ ११ ॥

उत्पत्तिस्थितिनाशेषु ब्रह्मादिस्थावरावधि ।
नात्येति ब्रह्मरूपं यत्तद्ब्रह्मेति प्रतीयताम् ॥ १२ ॥

तं होवाचेत्यादिवाक्यतात्पर्यमाह । उत्पत्तीति । पत्पृष्टं ब्रह्म तस्य लक्षणं यतो वा इत्यादिनोच्यते । जगदुत्पत्तिस्थितिलयकारणं ब्रह्मेति ब्रह्मणस्तटस्थलक्षणमित्यर्थः ॥ १२ ॥

विजिज्ञासस्व तद्ब्रह्म यदेवंलक्षणं भवेत् ।
अनुत्पन्नमहीनं च जगदुत्पत्तिहानिभिः ॥ १३ ॥

तद्विजिज्ञासस्वेत्यादेर्विवक्षितमाह । विजिज्ञासस्वेति ॥ १३ ॥

तपश्चचार तच्छ्रुत्वा भृगुर्ब्रह्मोपलब्धये ।
प्रतिपेदे तपोऽनुक्तं सावशेषोक्तिकारणात् ॥ १४ ॥

स तपोऽतप्यतेत्यस्यार्थमाह । तप इति । पित्राऽनुक्तस्य तपसो ज्ञानसाधनत्वेन ग्रहणे कारणमाह । प्रतिपेद इति ॥ १४ ॥

शृङ्गग्राहिकयोक्त्वाऽपि ह्यन्नं ब्रह्मेति लक्षणम् ।
पितोवाच यतस्तस्मात्तपो भेजे स्वयं भृगुः ॥ १५ ॥

सावशेषोक्तिकारणादित्युक्तं प्रकटयति । शृङ्गेति । अन्नं प्राणमित्यादिना ब्रह्म प्रत्यक्त्वेन साक्षादुक्त्वाऽपि यतो वा इमानीति ब्रह्मलक्षणं तटस्थत्वेन द्योतकमुक्तवान् । अतस्तस्य प्रत्यक्तया प्रतिपत्तिसाधनमनुक्तमपि तपः स्वयमेव भृगुरवगतवानित्यर्थः ॥ १५ ॥

---

१ (क. ख.) °श्रवण°। २ (च.) °न्यत्व°। ३ (ग. घ.) °यं त्विति। ४ (ग. घ.) °दर्थं ल°। ५ (च.) °धकत्वे°। ६ (ग. घ.) °स्थत्वद्यो°। (ङ. च.) °स्थत्वे द्यो°। ७ (ग. घ.) °स्तस्याप्र°।

ब्रह्म साक्षान्न निर्दिष्टं लक्षणोक्तेरतो भृगुः ।
नूनमाकाङ्क्षते योग्यं साधनं ब्रह्मवित्तये ॥ १६ ॥

यद्यन्नं प्राणमित्यादिना साक्षादेव ब्रह्म प्रत्यक्त्वेन पित्रा निर्दिष्टं तर्हि यतो वा इमानीत्यादिना लक्षणोक्तिरविवक्षिता स्यात् । अतो ब्रह्मणः प्रत्यक्त्वेन साक्षात्प्रतिपत्तिसिद्धये योग्यं साधनं प्रायेणाऽऽकाङ्क्षते पितेति तपश्चरणकाले कल्पितवान्भृगुरित्याह । ब्रह्मेति ॥ १६ ॥

तपोविशेषा दित्सा स्यात्तत्साधनमतत्त्वतः ।
यद्दुस्तरं यद्दुरापमिति स्मृत्यनुशासनात् ॥ १७ ॥

ब्रह्मप्रतिपत्तौ योग्यं साधनं पितुराकाङ्क्षितमस्तु तथाऽपि भृगोस्तपोविशेषान्वेषणा कुतः स्यादित्याशङ्क्याऽऽह । तपोविशेषेति । तपसः सार्धकतमत्वं सप्रमाणं प्रकटयति । यद्दुस्तरमिति ॥ १७ ॥

मनसश्चेन्द्रियाणां चेत्येवमाध्यात्मिकं तपः ।
इह न्याय्यं प्रसिद्धं तु ह्यारादुपकरोति नः ॥ १८ ॥

तपःशब्दार्थमाह । मनसश्चेति । इहेत्यध्यात्माधिकारो गृह्यते । कृच्छ्रचान्द्रायणादेरनुपयोगं व्यावर्तयति । प्रसिद्धं त्विति ॥ १८ ॥

अन्वयव्यतिरेकादिचिन्तनं वा तपो भवेत् ।
अहं ब्रह्मेतिवाक्यार्थबोधायालमिदं यतः ॥ १९ ॥

तपःशब्दस्य प्रकृतोपयोगित्वेनार्थान्तरमाह । अन्वयेति । वाक्यतात्पर्यपर्यालोचनं साधनविशेषानुसंधानं फलविशेषचिन्तनं चाऽऽदिशब्देन गृह्यते ॥१९॥

कोऽहं कस्य कुतो वेति कः कथं वा भवेदिति ।
प्रयोजनमतिर्नित्यमेवं मोक्षाश्रमी भवेत् ॥
व्यासः प्राहात एवेदं मुमुक्षोर्मुक्तये तपः ॥ २० ॥

अन्वयव्यतिरेकव्यापारस्य वाक्यार्थबोधं प्रत्यन्तरङ्गसाधनत्वे प्रमाणमाह । कोऽहमिति ॥ २० ॥

---

१ (ग. घ.) °येण का°। २ (ग. घ.) °षणं कु°। ३ (ग. घ.) °स्याह । ४ (ग घ.) °मनत°।

यतो वा इति चैवं स्यादुक्तमेव परं तपः ॥ २१ ॥
उक्तलक्षणसंपन्नं तपस्तप्त्वा प्रयत्नवान् ।
अन्नं ब्रह्मेति भूतानामुत्पत्त्यादिसमन्वयात् ॥ २२ ॥

उत्पत्त्यादिभाक्त्वाद्भूतानामनात्मत्वं ब्रह्मणस्तु तद्राहित्यादात्मत्वमित्येवमन्वयव्यतिरेकरूपं तपोविवक्षितत्वाल्लक्षणवाक्यमपि प्रवृत्तमित्याह । यत इति ॥२१॥ स तपस्तप्त्वेत्यादेरर्थं कथयति । उक्तेति । इति प्रथमः खण्डः ॥ १ ॥ अन्वयव्यतिरेकाख्यं तपो ब्रह्मज्ञानसाधनत्वेन निर्धार्य गुरुणोक्तं लक्षणमन्नस्यास्तीति संभाव्यान्नं ब्रह्मेति प्रतिपन्नवान्भृगुरित्यर्थः । अन्ने ब्रह्मलक्षणसंपत्तिमेव साधयति । भूतानामिति ॥ २२ ॥

उक्तान्यन्नमयादीनि यानि तेषां तु कारणम् ।
अन्नादिप्रतिपत्तव्यं न हि कार्येऽस्ति लक्षणम् ॥ २३॥

आनन्दवल्ल्यामुक्तानां मयडर्थानां कारणान्यन्नादिशब्दवाच्यानीत्याह । उक्तानीति । कार्यत्वादन्नमयादेः सर्वभूतोत्पत्त्यादिहेतुत्वासंभवादित्युक्तेऽर्थे हेतुमाह । न हीति ॥ २३ ॥

शुक्लं ह्यन्नमयाद्येतदन्नादेरुपजायते ।
कार्यप्रविलयंश्रुत्या कारणानन्दमेत्यतः ॥ २४ ॥

कार्यत्वमन्नमयादेरुपपादयति । शुक्लमिति । अग्रं कार्यं शुक्लमिति पर्यायाः । अन्नमयादेरुक्तकार्यत्वे फलितमाह । कार्येति ॥ २४ ॥

कार्याणि कारणेष्वेवं तानि चैवोत्तरोत्तरम् ।
प्रविलाप्य परानन्दं यायाद्वाचामगोचरम् ॥ २५ ॥

कार्याणां प्रविलयद्वारेण कारणभूतमानन्दमेति विद्वानिति वदता कार्यकारणविलक्षणं तत्त्वं मुक्तोपसृप्यमित्येतदुपेक्षितमित्याशङ्क्याऽऽह । कार्याणीति । अन्नमयादीन्मयडर्थान्नादिषु प्रकृतिषु प्रविलाप्यान्नं प्राणे प्राणं मनसि मनो विज्ञाने विज्ञानं समस्तजगत्कारणे ब्रह्मण्यानन्दे तच्चाज्ञातं कारणं कार्यकारणविलक्षणे नित्यशुद्धत्वादिलक्षणे ब्रह्मणि प्रत्यगात्मनि ज्ञानबलात्प्रविलाप्य तद्रूपेण विद्वान्पर्यवस्यतीत्यर्थः ॥ २५ ॥

अन्नं ब्रह्मेति विज्ञाय कार्यत्वं तस्य वीक्ष्य सः ।
संशयोच्छित्तये भूयो गत्वाऽपृच्छद्गुरुं भृगुः ॥ २६ ॥

तद्विज्ञायेत्यादेस्तात्पर्यमाह । अन्नमिति ॥ २६ ॥

१ (ग. घ.) प्रपन्नवा°। २ (च.) वयोर्विव°। ३ (ग. घ.) °णोक्तल°। ४ (ग.घ.) °त्यस्मृत्या°। ५ (ग. घ.) अन्नका°। ६ (ग. घ.) °र्यायः। अ°। ७ (ग. घ. ङ. च.) °रुक्ते का°। ८ (ग. घ.) °ज्ञानं का°।

अन्नादेर्ब्रह्मणश्चैवं दोषं दृष्ट्वा सकार्यताम् ।
भूयो भूयः परं ब्रह्म पप्रच्छाऽऽतृष्णिवर्तनात् ॥ २७ ॥

यथाऽन्नस्य ब्रह्मत्वविज्ञानानन्तरमपि तस्य कार्यत्वोपलम्भान्निराकाङ्क्षयाभावात्पुनरपि वरुणं प्राप्याधीहि भगवो ब्रह्मेति भृगुरप्राक्षीत्तथैव प्राणस्य मनसो विज्ञानस्य च ब्रह्मत्वं ज्ञात्वाऽपि तत्र तत्र कार्यत्वप्रतीत्यानिराकाङ्क्षत्वासंभवात्पुनरपि गुरुं गत्वा भृगुराकाङ्क्षाशान्त्यर्थं पृष्टवानेव ब्रह्मेत्याह । अन्नादेरिति । प्राणादेरित्यर्थः ॥ २७ ॥

यावत्साक्षात्परं ब्रह्म करविन्यस्तबिल्ववत् ।
न वेत्ति निर्बुभुत्सुः सन्न तावद्विनिवर्तते ॥ २८ ॥

एवमित्याद्यं पर्यायं दृष्टान्तयति । तर्हि प्रश्नस्यापर्यवसानमित्याशङ्क्य तत्त्वसाक्षात्कारानन्तरमाकाङ्क्षोपरमात्प्रश्नपरिसमाप्तिरित्याह । यावदिति ॥ २८ ॥

विजिज्ञासस्व तद्ब्रह्म तपसेति पुनः पुनः ।
ब्रुवञ्ज्ञापयतीहास्मांस्तपसैवाऽऽत्मवीक्षणम् ॥ २९ ॥

भृगोराकाङ्क्षोपशान्तिपर्यन्तं प्रश्नाभ्यासेऽपि तपसा ब्रह्म विजिज्ञासस्वेति पुनः पुनर्वचनं वरुणस्य केनाभिप्रायेणेत्याशङ्क्याऽऽह । विजिज्ञासस्वेति ॥२९॥
इति द्वितीयतृतीयचतुर्थपञ्चमखण्डाः ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥

अन्वयव्यतिरेकाभ्यामेवं स शनकैर्भृगुः ।
तपसैव परं ब्रह्म विजज्ञौ प्रत्यगात्मनि ॥३०॥

आनन्दो ब्रह्मेति व्यजानादित्यादेस्तात्पर्यमाह । अन्वयेति ॥ ३० ॥

यस्मादेवमतः कार्यं संसारं प्रजिहासुभिः ।
प्रत्यग्ब्रह्मावबोधाय सदा निष्कल्मषं तपः ॥ ३१ ॥

अन्वयव्यतिरेकाख्येन तपसा प्रत्यगात्मनि प्रतिष्ठितं ब्रह्म वाक्येन ज्ञातुं शक्यमिति स्थिते फलितमाह । यस्मादिति ॥३१॥

व्युत्थायाऽऽख्यायिकारूपा तन्निर्वृत्तमथाधुना ।
श्रुतिः स्वेनैव रूपेण व्याचष्टेऽर्थं प्रयत्नतः ॥ ३२ ॥

सैषेत्यादि वाक्यद्वयमवतारयति । व्युत्थायेति ॥ ३२ ॥

---

१ ( ग. घ. ) °क्षात्करणान° । २ ( च. ) °न्याह ।

भृगुणा विदिता यस्माद्भार्गवीयं भवेदतः ।
वारुणी वरुणोक्तत्वाद्विद्या स्याद्ब्रह्मवेदनात् ॥ ३३ ॥

भार्गवीत्यादि पदत्रयं व्याचष्टे । भृगुणेति ॥ ३३ ॥

युष्मदस्मद्विभागोऽयं यत्र व्यावर्ततेऽञ्जसा ।
स आत्मा तत्परं व्योम तत्र विद्या प्रतिष्ठिता ॥३४॥

आनन्दाद्ध्येवेत्यादिदर्शनादानन्दशब्दस्य कारणविषयत्वात्कार्यकारणविलक्षणब्रह्मविषयत्वासिद्धिरित्याशङ्क्य परमेव्योमन्प्रतिष्ठितेत्यत्र व्योमशब्दस्य कार्यकारणविनिर्मुक्तमत्यगात्मविषयत्वान्मैवमित्याह । युष्मदिति ॥ ३४ ॥

आत्मता ब्रह्मणो यत्र आत्मनो ब्रह्मता तथा ।
अहं ब्रह्मेत्यवाक्यार्थमेवं वाक्यात्मपद्यते ॥ ३५ ॥

यथोक्तस्य ब्रह्मात्मैकत्वस्यालौकिकत्वादसिद्धिरित्याशङ्क्याऽऽत्मनो ब्रह्मत्वं ब्रह्मणश्चाऽऽत्मत्वं वेदान्तवाक्यादेव सिध्यतीत्याह । आत्मतेति ॥३५॥

अन्योऽपि भृगुवत्तप्त्वा तपं ऐकाग्र्यलक्षणम् ।
कोशान्निरस्य पञ्चापि प्रतिष्ठां लभते पराम् ॥ ३६ ॥

य एवं वेद प्रतितिष्ठतीत्यस्यार्थमाह । अन्योऽपीति ॥३६॥

ब्रह्मपुच्छं प्रतिष्ठेति वल्ल्योक्तं पूर्वया तु यत् ।
तस्यामेव प्रतिष्ठायां विद्वान्संप्रतितिष्ठति ॥ ३७ ॥

कार्यकारणविलक्षणब्रह्मत्वेन परां प्रतिष्ठामेव प्रकटयति । ब्रह्मेति ॥३७॥

अन्नाद्युपासकानां वा फलमेतदिहोच्यते ।
न्याय्यं नावाप्तकामानामन्नादिफलकीर्तनम् ॥ ३८ ॥

अन्नवानित्यादिना प्रकृतस्यैव विज्ञानस्य स्तुत्यर्थं सगुणविद्याफलकीर्तनेमङ्गीकृत्य फलान्तरमाह । अन्नादीति । यदेतदन्नाद्युपासकानामन्नवत्त्वादिफलं तदिह ब्रह्मविद्यायाः स्तुत्यर्थमुच्यते । सगुणविद्याफलेन निर्गुणविद्यायाः स्तुतिसंभवादित्यर्थः । मुख्यमेव ब्रह्मविदोऽन्नादिफलकीर्तनं किं न स्यादित्याशङ्क्याऽऽह । न्याय्यमिति ॥ ३८ ॥

---

१ (ग. घ.) °यतो व्या°। २ (क. ख. ङ.) °प एका°। ३ (ग. घ.) °द्वान्स प्र°। ४ (क. ख.) प्रकाशय°। ५ (ग. घ.) °मनानां°। ६ (ग. घ. च.) °नमित्यङ्गी°।

भूयोऽन्नवान्दीप्तवह्निर्महांश्च स्यात्प्रजादिभिः ।
शान्तिदान्त्यादिहेतुस्त्विद्ब्रह्मवर्चसमुच्यते ॥ ३९ ॥

अन्नवानित्यादि व्याचष्टे । भूयोऽन्नवानिति ॥ ३९ ॥ इति षष्ठः खण्डः ॥ ६ ॥

अन्नमेव गुरुर्न्याय्यमुत्तरज्ञानहेतुतः ।
अन्नं न निन्द्यात्तेनाऽऽदौ व्रतं स्यात्तदुपासितुः ॥४०॥

अन्नं न निन्द्यादित्यादेरर्थमाह । अन्नमिति । अन्नस्योपभुक्तस्योक्तवक्ष्यमाणज्ञानहेतुत्वेन गुरुवदनिन्दनमन्नोपासकस्यावश्यकमित्यर्थः ॥ ४० ॥

अन्योन्यस्थितिहेतुत्वादन्नान्नादत्वमुच्यते ।
शरीरप्राणयोरेवमुत्तरेष्वपि निर्णयः ॥ ४१ ॥

प्राणो वा अन्नमित्यादेरर्थं संक्षिपति । अन्योन्येति । प्राणो वा अन्नम् । शरीरमन्नादमिति प्राणशरीरयोरन्नान्नादत्वमुक्तम् । तत्र प्राणे शरीरं प्रतिष्ठितमित्यादिना हेतुरुच्यते । अन्नवत्त्वादिसंकीर्तनं तु सर्वत्र पूर्ववन्नेतव्यमित्यर्थः । आपो वा अन्नम् । ज्योतिरन्नादम् । पृथिवी वा अन्नम् । आकाशोऽन्नादः । इति पर्यायद्वयेऽपि यथोक्तन्यायमतिदिशति । एवमिति । अब्ज्योतिःपृथिव्याकाशेष्वन्नान्नादत्वमन्योन्यस्थितिहेतुत्वादिति निर्णेतव्यम् । अन्नवत्त्वादिफलसंकीर्तनं तु पूर्ववदेव तत्रापि नेतव्यमित्यर्थः ॥ ४१ ॥ इति सप्तमः खण्डः ॥ ७ ॥

प्राप्तं न परिचक्षीत त्वन्नव्रतमिदं भवेत् ।
अन्नं सुबहु कुर्वीत तथैवेहोत्तरं व्रतम् ॥ ४२ ॥

शरीरप्राणयोरन्नान्नादत्वोपासकस्य प्राप्तान्नाप्रत्याख्यानं व्रतमित्यन्नं न परिचक्षीतेत्यादिवाक्यद्वयस्यार्थमाह । प्राप्तमिति ॥ इत्यष्टमः खण्डः ॥ ८ ॥

अपां ज्योतिषश्चान्नान्नादत्वोपासकस्यान्नबहुकरणं व्रतमित्यन्नं बहु कुर्वीतेत्यादेरर्थमाह । अन्नमिति ॥ ४२ ॥ इति नवमः खण्डः ॥ ९ ॥

वसत्यर्थं तथा यातं प्रत्याचक्षीत नैव तम् ।
वसते चान्नदानार्थं कुर्यादन्नं गृही बहु ॥ ४३ ॥

पृथिव्याकाशयोरन्नान्नादत्वोपासकस्य वसत्यर्थमागतस्याप्रत्याख्यानं व्रतमिति न कंचन वसतावित्यादेरर्थमाह । वसत्यर्थमिति । तस्मादित्यादिवाक्यस्य तात्पर्यार्थमाह । वसते चेति ॥ ४३ ॥

---

१ (च.) °दिपदानि व्या°। २ (ग. घ.) °नं च स°। ३ (च.) °देवापि। ४ (क. ङ.) त्वन्नं व्र°। ५ (ग. घ.) °दं चरेत्। ६ (क. ख.) °न्नं स य°। ७ (क.) °त्तरव्र°।

एतद्वै मुखत इति सत्कारोक्तिस्त्रिधा भवेत् ।
वयोवस्था त्रिधा वा स्यादन्नदानविवक्षया ॥ ४४ ॥

उत्तममध्यमाधमभेदेनान्नसत्कारोक्तिस्त्रिधा भवति । तत्कथनार्थमेतद्वै मुखतोऽन्नमित्यादिवाक्यमित्याह । एतदिति । अन्नदानविवक्षया सत्कारोक्तेस्त्रैविध्यमुक्त्वा तद्विवक्षयैव बाल्ययौवनवार्धकरूपा वयसोऽवस्था त्रिविधा विवक्षितेति पक्षान्तरमाह । वयोवस्थेति ॥ ४४ ॥

राद्धं सिद्धं भवेदन्नं पात्रेभ्यो यस्य तस्य तु ।
यथासत्कारवयसी अन्नदानफलं भवेत् ॥ ४५ ॥

तेष्वेव वाक्येष्वक्षरार्थं संगृह्णाति । राद्धमिति ॥ ४५ ॥

गृहिणो ह्यन्नवन्तोऽपि यत आचक्षते सदा ।
अराधि सिद्धमेवान्नमातिथ्यर्थं न संशयः ॥
यत एवमतः कार्यं बह्वन्नं यत्नतः सदा ॥ ४६ ॥

तस्मादित्यादिवाक्येनान्नस्य बहुकरणमित्युक्तम् । तत्र हेतुत्वेनाराद्धीत्यादि वाक्यं संबध्यते । तथा च हेतुहेतुमद्भावेन वाक्यद्वयं नेतव्यमित्याह । गृहिणो हीति ॥ ४६ ॥

अपि चान्नस्य माहात्म्यमिदमन्यद्यथावयः ॥४७॥
यथाश्रद्धं यथाकालं यथासत्कारमेव च ।
अन्नं ददद्वाप्नोति तत्तथैव न संशयः ॥ ४८ ॥

एतद्वै मुखतोऽन्नमित्यादिवाक्यपञ्चकस्य पूर्वोक्तमेवार्थं संक्षिप्यानुवदति । अपि चेति ॥ ४७ ॥ ४८ ॥

उपात्तरक्षणं क्षेमो ब्रह्मैतद्वाचि संश्रितम् ।
क्षेमहेतुर्यतो वाक्यं तदुपासीत वाच्यतः ॥ ४९ ॥

क्षेम इति वाचीत्यस्यार्थमाह । उपात्तेति ॥ ४९ ॥

अप्राप्तप्रापणं योगः क्षेमश्चोभयरूपभृत् ।
प्राणापानाश्रयं ब्रह्म तदुपासीत तौ ह्यतः ॥ ५० ॥

योगक्षेम इति प्राणापानयोरित्यस्यार्थमाह । अप्राप्तेति ॥ ५० ॥

---

१ (क) °स्त्रिविधा । २ (ग. घ.) °कथमाह । ३ (ग. घ.) °वि तथैवैवान्नं सं । ४ (क. ख.) °तु यतो ।

योगक्षेमात्मकं ब्रह्म प्राणापानसमाश्रयम् ।
कर्मेति हस्तयोस्तद्वदुपासीताप्रमादवान् ॥ ५१ ॥

कथं प्राणापानाश्रयत्वं यथोक्तस्य ब्रह्मणः सिद्धमित्याशङ्क्याऽऽह । योगेति । जीवतो योगक्षेमाविति कृत्वा प्राणापानाश्रयौ योगक्षेमौ विवक्ष्येते । तस्मात्प्राणापानात्मना व्यवस्थितब्रह्मदृष्ट्या योगक्षेमावुपास्याविरयर्थः । कर्मेति हस्तयोरित्यस्यार्थं सूचयति । कर्मेति ॥ ५१ ॥

तथा गतिरिति ध्येयं पादयोर्ब्रह्म सर्वदा ।
विमुक्तिरिति पायौ च समाज्ञा मानुषीः स्मृताः ॥५२॥

गतिरिति पादयोरित्यस्यार्थमाह । तथेति । विमुक्तिरिति पायावित्यस्यार्थं सूचयति । विमुक्तिरिति । मूत्रपुरीषविसर्गो विमुक्तिः । तद्रूपेण ब्रह्म पायौ व्यवस्थितमिति ध्येयमित्यर्थः । इति मानुषीरित्यादेरर्थं वक्तुं वाक्यमुपादत्ते । समाज्ञा इति ॥ ५२ ॥

मनुष्यविषया यस्मादाज्ञा विष्णोरियं ततः ।
समाज्ञा मानुषीस्त्वेवं सदैवाऽऽचक्षते बुधाः ॥ ५३ ॥

तदेव व्याचष्टे । मनुष्येति ॥ ५३ ॥

अथ दैवीः समाज्ञास्तु उपासीत यथाक्रमम् ।
वृष्टौ तृप्तिरिति ध्येयं तृप्तेर्वृष्टिसमन्वयात् ॥ ५४ ॥

अथ दैवीरित्यस्यार्थमाह । अथेति । तृप्तिरिति वृष्टावित्यस्यार्थमाह । वृष्टाविति ॥ ५४ ॥

तेन तेनाऽऽत्मना तद्वदुत्तरेष्वपि चिन्तयेत् ।
ब्रह्मोपस्थ उपासीत प्रजात्यादिगुणात्मकम् ॥ ५५ ॥

बलमिति विद्युतीत्यादिवाक्येषूक्तन्यायमतिदिशति । तेनेति । बलरूपेण विद्युति यशोरूपेण पशुषु ज्योतीरूपेण नक्षत्रेषु व्यवस्थितं ब्रह्मेत्युपासनानि कर्तव्यानीत्यर्थः । प्रजातिरित्यादि व्याचष्टे । ब्रह्मेति ॥ ५५ ॥

---

१ ( क. ख. ङ. ) °वक्षेते । २ ( ग घ. ) °त्मव्य° । ३ (ग.) तथा ग° । ४(ग.घ.) °यं यतः ।

प्रजातिः पुत्रपौत्रादिरमृतत्वं ततः पितुः ।
आनन्दः पुरुषार्थोऽत्र सोऽप्युपस्थाश्रयो भवेत् ॥५६॥

आदिशब्दार्थं कथयति । प्रजातिरिति । सन्तानाविच्छित्त्या शुद्ध्यादिद्वारेण पितुर्ज्ञानोत्पत्त्या भवत्यमृतत्वम् । आनन्दश्च वैषयिकं सुखमुपस्थबलादिति प्रसिद्धम् । तथा च प्रजात्यादिगुणविशिष्टं ब्रह्मोपस्थे व्यवस्थितमिति ध्यातव्यमित्यर्थः ॥ ५६ ॥

आकाशे सर्वमित्येवं ब्रह्मोपास्यं समाहितैः ।
सर्वाश्रयं तदाकाश उपासीनस्य शिष्यते ॥ ५७ ॥

सर्वमित्याकाश इत्यस्यार्थमाह । आकाश इति । सर्वाश्रयत्वादाकाशस्य सर्वप्रपञ्चात्मना ब्रह्माकाशे व्यवस्थितमित्युपासीनस्य सर्वात्मत्वमेव फलं तं यथा यथेत्यादिश्रुतिसिद्धमित्याह । सर्वाश्रयमिति ॥ ५७ ॥

तत्प्रतिष्ठेत्युपासीत प्रतिष्ठावानसौ भवेत् ।
उपासनानुरूपं स्यात्फलं यादृगिदं तथा ॥ ५८ ॥

आकाशात्मना व्यवस्थितं ब्रह्म प्रतिष्ठागुणविशिष्टमित्युपासकस्य प्रतिष्ठेव फलमिति तत्प्रतिष्ठेत्यादेरर्थमाह । तत्प्रतिष्ठेतीति । प्रतिष्ठागुणकब्रह्मोपासने दर्शितन्यायं सर्वोपासकेषु दर्शयति । उपासनेति ॥ ५८ ॥

तद्ब्रह्म मह इत्येवमुपासीत ततः फलम् ।
प्रजादिभिर्महान्स्यात्तं यथेति श्रुतिस्तथा ॥ ५९ ॥

तन्मह इत्यादेरर्थं कथयति । तद्ब्रह्मेति ॥ ५९ ॥

तन्मन इत्युपासीत मनस्वी मानवान्भवेत् ।
प्रह्वीभावो नमोऽर्थः स्यात्फलं तस्येदमुच्यते ॥
नम्यन्तेऽस्य यथाकामं विषया भोगकारिणः ॥६०॥

तन्मन इत्यादेरर्थमाह । तन्मन इति । आकाशात्मकं ब्रह्म मनोगुणविशिष्टमित्युपासकस्य मनस्वित्वं फलमित्यर्थः । तन्नम इत्यादेरर्थमाह । प्रह्वीभाव इति ॥ ६० ॥

---

१ ( ग. घ. ) °तत्त्यां भ° । २ ( क. ख. ङ. ) °तमुपा° । ३ ( घ. च. ) °सनेषु । ४ ( ङ. ) °त्तं तथे° ।

यस्तु ब्रह्मेति तद्ब्रह्म ह्युपासीत यथोदितम् ॥६१॥
फलं तस्य तदेव स्यादिति पूर्वमवादिषम् ।
ब्रह्मणो ब्राह्मणस्यैव परिमरं ब्रह्म तत्तदा ॥ ६२ ॥

तद्ब्रह्मेत्यादेरर्थमाह । यस्त्विति ॥ ६१ ॥
यथोदितमित्याकाशात्मत्वं ब्रह्मणो निर्दिश्यते । तं यथा यथेति श्रुतिमाश्रित्य फलश्रुतिं व्याचष्टे । फलमिति । पूर्वत्र महत्त्वं मजादिभिरुक्तम् । इह तु विद्ययेति विशेषः । तद्ब्रह्मण इत्यादिवाक्यस्यार्थं दर्शयति । ब्रह्मण इति । तदाकाशात्मकं ब्रह्मणो ब्राह्मणस्य परिमरगुणविशिष्टमुपासकस्य तस्यामुपासनायां वक्ष्यमाणं सिध्यतीत्यर्थः ॥ ६२ ॥

विद्युद्वृष्टिः शशी आनुरग्निश्चेति यतः श्रुतिः ।
वायौ म्रियन्त इत्याह परिमरस्तेन कीर्त्यते ॥६३॥

कथमाकाशस्य परिमरत्वमित्याशङ्क्य वायोरादौ संवर्गश्रुत्यवष्टम्भेन परिमरत्वं दर्शयति । विद्युदिति ॥ ६३ ॥

अनन्यश्चायमाकाशो वायुना ब्रह्मणा च खम् ।
द्विषन्तश्चाद्विषन्तश्च म्रियन्ते तस्य शत्रवः ॥ ६४ ॥

वायोरेव परिमरत्वेऽपि किमायातमाकाशस्येत्याशङ्क्याऽऽह । अनन्यश्चेति । अयमाकाशो वायुना सहानन्यो भवति । तत्कारणत्वेन तदात्मत्वात् । आकाशश्च ब्रह्मणो न भिद्यते । तत्कार्यत्वेन ततोऽतिरेकाभावात् । तेनाऽऽकाशो ब्रह्मणः परिमर इति ब्रह्म परिमरगुणकमित्यर्थः । तथागुणकं ब्रह्मेत्युपासकस्य फलमाह । द्विषन्तश्चेति ॥ ६४ ॥

प्राणो वा अन्नमित्यादिवियदन्तस्य पूर्वया ।
अन्नान्नादत्वं श्रुत्योक्तं कार्यत्वात्संहतस्य हि ॥
अन्नान्नादत्वमस्यैव कथं नाम प्रतीयते ॥ ६५ ॥

पर्येणमित्यादिवाक्यद्वयस्यार्थमुक्त्वा प्राणो वा अन्नमित्यारभ्याऽऽकाशोऽन्नाद इत्यन्तेन ग्रन्थेनान्नान्नादव्यवहारस्य प्राणादिगतत्वदर्शनस्याभिप्रायं प्रकटयति । प्राणो वा इति ॥ ६५ ॥

---

१ ( क. ख. ) यत्तु ब्र°। २ ( ग. घ. ङ. ) °स्यैष प°। ३ ( क ख. ) यस्त्विति ४( ग. ) °ति । आका° ( च. ) °ति । यद्वा°। ५ ( क. ख. ) °रत्वगु°। ६ ( च. ) °ष्टमित्युपा° ७ ( ग. घ. ) °मानायां सि°। ८ ( ग. घ. ) °णा च ख°। ९ ( ग. घ. ) न भेद्य°। १० ( ग. ) °त्र । आ°। ११ ( क. ) प्रमीय°। १२ ( ग. घ. च. ) °त्वमद°।

मा भूद्ब्रह्मणि तत्सक्तिर्मनोवाचामगोचरे ॥ ६६ ॥
अविद्याविषयस्तस्माद्भोक्तृभोज्यादिलक्षणः ।
व्यवहारोऽवसेयः स्यान्न तु सत्यादिलक्षणे ॥ ६७ ॥

अस्यैवेत्यवधारणार्थं कथयति । मा भूदिति ॥ ६६ ॥

व्यवहारविशेषस्याविद्याकृतत्वं न वास्तवत्वमित्युपसंहरति । अविद्येति । प्रत्यगविद्याविलसितत्वेनानात्मगतः संसारो नाऽऽत्मनि संभवति । आत्मन्यविद्ययाऽध्यस्तो भातीत्यर्थः ॥ ६७ ॥

अविद्योत्थं द्वयाभासं भोज्यभोक्तृत्वलक्षणम् ।
यत्र हि द्वैतमित्याद्या श्रुतिर्नः प्रत्यपीपदत् ॥६८॥

यदविद्योत्थत्वं संसारस्योक्तं तत्र प्रमाणमाह । अविद्योत्थमिति ॥ ६८ ॥

यत्र त्वस्येति विध्वस्तसर्वाविद्यातिलक्षणे ।
निषेधति सदाऽविद्याध्यस्तं द्वैतमिहात्मनि ॥६९॥

अविद्यामन्तरेण वस्तुतस्त्वात्मनि संसारो नास्तीत्यत्रापि श्रुतिमुदाहरति । यत्र त्विति ॥ ६९ ॥

एकत्वाच्च न संसारः क्रियाकारकलक्षणः ।
कुतस्तदिति चेत्तत्र स यश्चायमितीर्यते ॥ ७० ॥

आत्मनि संसारस्याविद्याकल्पितत्वे श्रुतिमुक्त्वा तत्रैवोपपत्तिमुपन्यस्यति । एकत्वाच्चेति । आत्मनो ब्रह्माभिन्नत्वे न तत्र भातसंसारस्य स्यादेव कल्पितत्वं न चाऽऽत्मनो ब्रह्माभिन्नत्वं मानाभावादिति शङ्कते । कुत इति । आत्मनो ब्रह्मणा सहैकत्वे प्रमाणत्वेन वाक्यमवतारयति । तत्रेति ॥ ७० ॥

स ह ब्रह्मणेति यच्चोक्तं निर्णयस्तस्य सांप्रतम् ।
कथं नु सकलान्कामानश्नुते युगपद्बुधः ।
प्रतिपत्तयेऽस्यार्थस्य श्रुतिः प्रववृते परा ॥ ७१ ॥

वाक्यत्रयमात्रस्य तात्पर्यमुक्त्वा समनन्तरसंदर्भस्य समस्तस्यैव तात्पर्यमाह । सहेति । सोऽश्नुते सर्वान्कामान्सहेति यदुक्तं तन्निर्णयार्थम् । स यश्चायमित्यादिरुत्तरो ग्रन्थः सर्वोऽपीत्यर्थः । तदेव प्रश्नद्वारा प्रकटयति । कथमिति ॥ ७१ ॥

---

१ (ग. च.) °वसु° । २ (च.) न स्यात्म° ।

न सहार्थे तृतीयेयं न्यायोऽत्र प्राक्समीरितः ।
यतोऽतोऽत्र तृतीयेयं ग्राह्येत्थंभूतलक्षणा ॥ ७२ ॥

सर्वकामावाप्तिंविदुषो ब्रह्मरूपेणोक्त्वा तत्प्रपञ्चनार्थः स यश्चायमित्यादिरुत्तरो ग्रन्थ इत्युक्तमेव व्यक्तीकर्तुं ब्रह्मणा विपश्चितेति तृतीयार्थमविवक्षितमपाकृत्य विवक्षितं कथयति । नेत्यादिना । विदुषो ब्रह्मणश्च भेदासंभवो न्यायः ॥ ७२ ॥

हेत्वर्था वा भवेदेषा तृतीया ब्रह्मणेति या ।
सर्वकामाशनं यस्माद्ब्रह्मणैवोपपद्यते ॥ ७३ ॥

अर्थान्तरं तृतीयाया दर्शयति । हेत्वर्थेति । तमेव हेतुरूपमर्थं स्फोरयति । सर्वकामेति । सर्वस्य ब्रह्ममात्रत्वाद्ब्रह्मणा हेतुना ब्रह्मविदः सर्वकामाशनमुपपन्नमित्यर्थः ॥ ७३ ॥

निरात्मकस्य सर्वस्य ब्रह्मात्मा येन तत्परम् ।
सत्यज्ञानादिरूपत्वात्तदेतदधुनोच्यते ॥ ७४ ॥

सर्वस्य ब्रह्ममात्रत्वं साधयति । निरात्मकस्येति । सर्वस्य प्रपञ्चस्य ब्रह्मात्मा स्वरूपं यस्मादिष्यते तस्मात्तस्य स्वतो रूपहीनस्य ब्रह्ममात्रत्वं युक्तमित्यर्थः । सत्यज्ञानानन्तानन्दात्मकत्वेन परमार्थत्वं ब्रह्मणो यस्मादिष्टं तस्माद्ब्रह्मात्मा सर्वस्य प्रपञ्चस्येत्येतदुपपादयति । सत्येति । सर्वस्य प्रपञ्चस्याऽऽत्मा ब्रह्मेत्यत्र वाक्यमवतारयति । तदेतदिति ॥ ७४ ॥

स यश्चायमिति ह्युक्तिरन्नान्नादादिकस्य हि ।
ग्रन्थस्य ग्रसनार्थाय ब्रह्मविद्यापरस्य तु ॥ ७५ ॥

स यश्चायमित्यादेरुत्तरस्य ग्रन्थस्य तात्पर्यान्तरमाह । स यश्चेति । अन्नान्नादत्वेन प्रस्तुतस्य समस्तस्य प्रपञ्चस्य ग्रसनं ज्ञानबलेन बाधनम् । तदर्थं च स यश्चायमित्यादिकस्योत्तरग्रन्थस्य ब्रह्मविद्यापरस्योक्तिरत्र क्रियते । तस्माज्ज्ञानबाध्यं द्वैतमद्वैतं पारमार्थिकमित्यर्थः ॥ ७५ ॥

संक्रम्य विद्यया सर्वानविद्योत्थाननात्मनः ।
आत्मनाऽऽत्मानमापन्नः सत्याद्दश्यादिलक्षणम् ॥७६॥

एवं तात्पर्यं प्रदर्श्याक्षरार्थं कथयति । संक्रम्येति । स यश्चायमित्यादिवाक्योत्थब्रह्मात्मैकत्वज्ञानात्कोशपञ्चकमनात्मभूतमुपमृद्याऽऽत्मनाऽऽत्मानमद्वितीयं सत्यज्ञानादिरूपमप्रपञ्चं ब्रह्म प्रतिपन्नो विद्वानास्ते कृतार्थतयेत्यर्थः ॥ ७६ ॥

१ (ग. घ) °मानाप्ति° । २ (ख. ग. घ.) °णोक्त्वा त° । ३ (ग.) न्याय्यः । ४ (ग. ख) स्फोटय° । ५ (च.) °त्यर्थे वा° । ६ (ग. घ.) °ति चान्तोक्ति° । ७ (ग. घ. ङ.) °य ज्ञा° ।

उत्कृष्टेतरहीनः सन्निमाँल्लोकान्क्रियोद्भवान् ।
कामान्नी कामरूपी सन्नुपाधीननुसंचरन् ॥ ७७ ॥

इमाँल्लोकान्कामान्नीत्यादेरक्षरार्थमाह । उत्कृष्टेति । प्रकृतो हि विद्वान्ब्रह्मभूतः सन्नुत्कर्षापकर्षहीनो बाधितानुवृत्त्या प्रतिभासमानानुपाधीननुसंचरन्नास्त इति संबन्धः ॥ ७७ ॥

न हि संचरणं साक्षाद्ब्रह्मणोऽस्त्यविकारिणः ।
यत्र हि ध्यायतीवेति तथा च श्रुतिशासनम् ॥७८॥

परमार्थतोऽनुसंचरणमित्याशङ्क्य श्रुतियुक्तिविरोधान्मैवमित्याह । न हीति ॥ ७८ ॥

सर्वात्मत्वादिमाँल्लोकान्पश्यन्नात्मतया बुधः ।
एतद्ब्रह्म समं साम गायन्नास्ते कृतार्थतः ॥ ७९ ॥

विदुषोऽक्रियस्य कथं लोकानुसंचरणमित्याशङ्क्य गत्यर्थानुबुद्ध्यर्था इतिन्यायादनुसंचरणमनुभवमात्रमित्यङ्गीकृत्यैतत्सामेत्यादिं व्याचष्टे । सर्वात्मत्वादिति ॥ ७९ ॥

द्वेधा भिन्नमिदं सर्वमन्नमन्नाद एव च ।
सत्यादृश्यादिरूपात्मा अहमेवैतदीक्ष्यताम् ॥ ८० ॥

अहमन्नमहमन्नाद इत्यादि सामद्वयं तस्यार्थमाह । द्वेधेति । अन्नान्नादविभक्तं समस्तं जगत्सत्यादृश्याद्यात्मकमात्मरूपमेवेति द्रष्टव्यमिति विदुषो वचनमित्यर्थः ॥ ८० ॥

तयोः श्लोकश्च संबन्धो भोज्यभोक्तृत्वलक्षणः ।
अहमेव यथोक्तात्मा न मत्तोऽन्यस्ततोऽस्ति हि ॥८१॥

अहं श्लोककृदिति सामान्तरं व्याकरोति । तयोरिति । भोक्ता भोज्यं तयोः संबन्धश्चाहमेवेत्यर्थः ॥ ८१ ॥

क्रियाकारकनिर्मुक्तं पश्यन्नात्मानमात्मनि ।
त्रिरहो इति भवेत्स्तोभो विस्मयार्थश्च स स्मृतः॥८२॥

यथोक्तं जगदात्मत्वेन कोऽनुभवतीत्यपेक्षायां विद्वानेवेति वक्तुं तं विशिनष्टि । क्रियेति । हा३वु हा३वु हा३वु । इति स्तोभत्रयम् । तस्यार्थमाह । त्रिरिति ॥८२॥

---

१ ( च. ) °न्नमाश्न°। २ ( ग. घ. च. ) °र्थानु°। ३ ( च. ) °दिवाक्यमाच°।
४ ( ङ. ) °दीक्षता°। ५ ( ग. घ. ङ. ) °योक्तज°।

त्रिरुक्तिश्चादरार्थेयमहमन्नमितीष्यते ।
अश्रद्दधानलोकस्य प्रतिपत्त्यर्थमुच्यते ॥ ८३ ॥

अहमन्नमित्यादावभ्यासत्रितयमस्ति तस्य तात्पर्यमाह । त्रिरुक्तिरिति । अन्नग्रहणमन्नादश्लोककृतोरुपलक्षणम् ॥ ८३ ॥

मूर्तामूर्तात्मकस्यास्य ह्यन्नान्नादत्वरूपिणः ।
अतद्दानग्रजोऽहं वै न तदश्नाति हि श्रुतिः ॥ ८४ ॥

अहमस्मीत्यादिवाक्यस्यार्थमाह । मूर्तेति । ऋतं सत्यं भूतपञ्चकं तस्य मूर्तामूर्तरूपस्यान्नान्नादात्मकस्य प्रसिद्धस्य समस्तस्य प्रपञ्चस्य प्रथमजोऽग्रे विद्यमानोऽहं वस्तुतस्तद्विलक्षणोऽस्मीत्यत्र प्रमाणमाह । न तदिति । कार्यात्कारणाच्च ब्रह्मभूतस्य विदुषो विलक्षणत्वात्तद्रूपस्य च तद्व्यतिरेकेणाभावाद्युक्तं विदुषो द्विधाभूतात्मपञ्चात्तदस्पर्शित्वेनाग्रे स्थितत्वमित्यर्थः ॥ ८४ ॥

देवेभ्यः पूर्वमेवाहं नाभिरस्म्यमृतस्य च ।
कारणत्वाद्भवेन्नाभिर्मन्निष्ठो वाऽमृतात्मता ॥ ८५ ॥

पूर्वं देवेभ्य इत्यस्यार्थं कथयति । देवेभ्य इति । ऋतशब्देनोपाधीनां गृहीतत्वादेवशब्देन चैतन्याभासानां जीवानां ग्रहणात्तेभ्योऽहमाभासाभासिविभागविकलः शुद्धः सन्नग्रे स्थितोऽस्मीत्यर्थः । अमृतस्येत्यादेरर्थमाह । नाभिरिति । प्रसिद्धममृतं गृहीत्वा प्रत्यगात्मनस्तदाश्रयत्वं नाभित्वं साधयति । कारणत्वादिति । अमृतशब्दस्य कैवल्यार्थत्वं गृहीत्वा कैवल्यस्य ब्रह्मणः स्वरूपं प्रत्यगात्मैवेत्यर्थान्तरमाह । मन्निष्ठेति ॥ ८५ ॥

अदत्वाऽन्नं तु पात्रेभ्यो यो मामश्नाति घस्मरः ।
अहमन्नमदन्तं तं प्रत्यद्मीहान्नवन्नरम् ॥ ८६ ॥

अहमन्नमन्नमदन्तमित्यादेरर्थं कथयति । अदत्त्वेति ॥ ८६ ॥

यो मां ददाति पात्रेभ्यो देशकालसमन्वितम् ।
ददद्दित्थमसावन्नं मामवत्येव सर्वदा ॥ ८७ ॥

देशकालपात्रानुरूपमन्नदानमकुर्वन्प्रत्यवायीत्युक्त्वा तदनुसारेणान्नदानं कुर्वन्नभ्युदयभागी भवतीत्येतदाह । यो मामिति ॥ ८७ ॥

---

१ (क ख.) °वाक्यार्थं । २ (ङ.) °ष्टा चामृ । ३ (ग घ) त्यार्थं मृ । ४ (ग. घ. ङ. च.) °गात्मेव्य° ।

सत्यज्ञानादिरूपोऽहमविद्योत्थमशेषतः ।
अहं ह्यभिभवाम्येको दिनकृच्छार्वरं यथा ॥ ८८ ॥

यो मां ददातीत्यादिना सविशेषरूपस्योक्तत्वाद्ब्रह्म सप्रपञ्चं प्राप्तमित्याशङ्क्य तन्निवृत्त्यर्थमहं विश्वमित्यादेरर्थमाह । सत्येति । कार्यकारणविरही प्रत्यगात्मा ऽहमित्युच्यते । स चाविद्यामविद्याकार्यं च सर्वं वाक्योत्थबुद्धिवृत्त्यभिव्यक्तः सन्न-भिभवति बाधत इत्यर्थः । वाक्योत्थबुद्धिवृत्त्यभिव्यक्तोऽपि प्रत्यगात्मा कर्मज्ञा-नाभ्यासं वा सहकारित्वेनोपादायाज्ञानमज्ञानकार्यं वा परिहरिष्यति न स्वात-न्त्र्येणेत्याशङ्क्य सुवरित्यादिवाक्यस्य तात्पर्यमाह । अहं हीति । एषा तावदु-पनिषदेवं प्रवृत्ता । यश्चैतामुपनिषदमुक्तेन प्रकारेण प्रतिपद्यते स विद्वान्यथोक्ते परमानन्दे निर्भये ब्रह्मणि तन्मात्रत्वेन प्रतिष्ठितो निर्वृणोतीत्यर्थः ॥ ८८ ॥

इति दशमः खण्डः ॥ १० ॥

ध्यानैकताननिबिडाहितचेतसोऽजं
प्रध्वस्तकृत्स्ननिजमोहसमस्तदोषम् ।
प्रत्यक्तया शुभधियो यतयोऽभ्युपेत्य
यं देवमेकममलं प्रविशन्ति सोऽव्यात् ॥८९॥

इदानीं वल्लीद्वयस्यार्थं संक्षिप्य रक्षणव्याजेन दर्शयन्नुपसंहरति । ध्यानेति । परमात्मनि प्रत्यग्भूते प्रत्ययप्रवाहो ध्यानं तस्यैकतानं नामैकविस्तारः सजा-तीयप्रत्ययनिष्ठत्वं तस्य च निबिडत्वं विजातीयप्रत्ययानन्तरितत्वेन नैरन्तर्यं तत्र ध्यानस्यैकताने निबिडे विशेषणत्रयवति विषयेभ्यः सर्वेभ्यो व्यावर्त्या-हितं तदेकनिष्ठमापादितं चेतो येषां ते ध्यानैकताननिबिडाहितचेतसः श्रवण-मननिदिध्यासनाभ्यासवन्तो यतयो मुख्याः संन्यासिनो यं प्रविशन्ति सोऽ-व्यादिति संबन्धः । मुक्तोपसृप्यं परमात्मानं जन्मादिसमस्तविक्रियाशून्यत्वेन कूटस्थं दर्शयति । अजमिति । तस्यैव निराकृतस्वाविद्यातत्कार्यत्वेन नित्यशु-द्धत्वमाह । प्रध्वस्तेति । पुनरुन्मज्जनायोग्यत्वेन ध्वंसगतो विशेषो वाक्योत्थ-बुद्धिवृत्तिवशादखण्डो दण्डायमानो निजे स्वात्मन्याश्रयविषये च वर्तमानो मोहो नैसर्गिकस्तज्जन्यदोषश्च कर्तृत्वादिः समस्तः संसारो यत्र तं परमात्मानमिति योजना । तस्यैव शास्त्रयुक्तिसिद्धं स्वयंप्रभत्वमाह । देवमिति । तस्यैव सर्वप्रकारभे-

१ ( ग. घ. च. ) °यं चापह° । २ ( ङ. ) °वाऽपह° । ३ ( ग. घ. ) °तान-त्ता ना° । ४ ( क. ख. ) °विस्तरः । ५ ( च. ) °त्र च ध्या° । ६ ( क. ) परात्मा° । ७ ( ङ. ) °शेषवा° । ८ ( ग. घ. ) °प्रभावत्व° । ९ ( ख. ङ. ) °भवत्व° ।

दशून्यत्वेनाद्वितीयत्वमाह । एकमिति । प्रध्वस्तेत्यादिना नित्यशुद्धत्वस्योक्तत्वान्नित्यमुक्तत्वं कथयति । अमलमिति । केन मार्गेण संन्यासिनो यथोक्तं परमात्मानं प्रविशन्तीत्यपेक्षायां पदार्थपरिशोधनद्वारेण प्रकृतपरमात्मानमभ्युपेत्याऽऽभिमुख्येन प्रत्यगात्मत्वेन वाक्याज्ज्ञात्वा तेन ज्ञानमार्गेण ते प्रविशन्तीत्याह । प्रत्यगिति । येषां यतीनां ज्ञानप्राप्तिद्वारा परमात्मप्रवेशस्तान्यथोक्तज्ञानप्राप्तियोग्यान्विशिनष्टि । शुभेति । वर्णाश्रमानुरोधिशुभकर्मानुष्ठानापेक्षया निर्मलान्तःकरणविवेकवैराग्यद्वारेण सर्वकर्मसंन्यासिनो भूत्वा शमदमादिसाधनसामग्रीसंपन्ना मोक्षमेवापेक्षमाणा यथोक्ततत्त्वज्ञानद्वारा यं प्रविशन्ति सोऽव्यात् । आत्मप्रदानेन मुमुक्षून्ब्रह्मनिष्ठान्परिरक्षतादित्यर्थः ॥ ८९ ॥

तैत्तिरीयकसारस्य वार्तिकामृतमुत्तमम् ।
मस्करीन्द्रप्रणीतस्य भाष्यस्यैतद्विवेचनम् ॥ ९० ॥

आशीर्वादव्याजेन वल्लीद्वयार्थं संक्षिप्योपसंहृत्य प्रकृतं वार्तिकमिदानीमुपसंहरति । तैत्तिरीयकेति । मस्करो वैणवो दण्डः । तदुपेतानां संन्यासिनां श्रेष्ठो भगवान्भाष्यकारः । तेन प्रणीतं यत्तैत्तिरीयकशाखासारस्योपनिषदो भाष्यं तस्यैतद्विवेचनम् । वार्तिकामृतं सर्वदोषरहितं निरतिशयपुरुषार्थसाधनम् । सुरेशाख्यो यतिश्चकारेति संबन्धः ॥ ९० ॥

मुमुक्षुसार्थवाहस्य भवनामभृतो यतेः ।
शिष्यश्चकार तद्भक्त्या सुरेशाख्यो महार्थवित् ॥९१॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकरभगवत्पादपूज्यशिष्यस्य श्रीमत्सुरेश्वराचार्यस्य कृतिषु तैत्तिरीयकोपनिषद्भाष्यवार्तिकं संपूर्णम् ॥

संप्रदायपूर्वकत्वेनास्य वार्तिकस्य विद्वदुपादेयत्वं सूचयति । मुमुक्षुसार्थवाहस्येति । मुमुक्षवो मोक्षमेवापेक्षमाणाः साधनचतुष्टयविशिष्टाः संन्यासिनस्तेषां सार्थः समूहस्तं वहति तत्र निर्वाहकत्वेन वर्तते भगवान्भाष्यकारस्तस्य यतीनाम-

---

१ (क. ख.) °ण ते प्र° । २ (ङ.) °द्विलोच° । ३ (क. ख.) °रेश्वराख्यो । ४ (ग. घ.) °मधुवो । ५ (क. ख.) °रेश्वराख्यो ।

ग्रेसरस्य भवस्य भगवतो महादेवस्य नाम शंकराख्यं बिभ्रतस्तेनैव नाम्ना सर्वत्र प्रख्यातस्य सुरेश्वरसंज्ञया लोके विख्यातो यतिः शिष्योऽभूत्। स च तस्यैवाऽऽचार्यस्याऽऽज्ञां परिपालयन्नाचार्यभक्तिमेव पुरस्कृत्य यथोक्तं वार्तिकं चकारेति योजना। भक्तिमात्रेण कृतस्य वार्तिकस्य कथं विद्वद्भिरुपादेयत्वं तत्राऽऽह। महार्थविदिति। महान्तं बहुप्रकारमबाधितं चार्थं वेत्तीति तथोच्यते। तथा च तेन प्रणीतमिदं वार्तिकामृतं वृद्धैः श्रद्धेयमेवेत्यर्थः ॥ ३ ॥

परापरगुरून्नत्वा संप्रदायानुसारतः। व्याकृतं संग्रहेणैव तैत्तिरीयकवार्तिकम् ॥ १ ॥

सा चेयं व्याक्रिया प्रीतिं भगवत्येव कुर्वती। चिराय वर्ततां कृष्णे तृष्णां त्यक्त्वाऽन्यगामिनीम् ॥ २ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीशुद्धानन्दपूज्यपाद-
शिष्यभगवदानन्दज्ञानविरचिता तैत्तिरीयक-
वार्तिकटीका समाप्ता ॥

दशून्यत्वेनाद्वितीयत्वमाह । एकमिति । प्रध्वस्तेत्यादिना नित्यशुद्धत्वस्योक्तत्वान्नित्यमुक्तत्वं कथयति । अमलमिति । केन मार्गेण संन्यासिनो यथोक्तं परमात्मानं प्रविशन्तीत्यपेक्षायां पदार्थपरिशोधनद्वारेण प्रकृतपरमात्मानमभ्युपेत्याऽऽभिमुख्येन प्रत्यगात्मत्वेन वाक्याज्ज्ञात्वा तेन ज्ञानमार्गेण तं प्रविशन्तीत्याह । प्रत्यगिति । येषां यतीनां ज्ञानमाप्तिद्वारा परमात्मप्रवेशस्तान्यथोक्तज्ञानमाप्तियोग्यान्विशिनष्टि । शुभेति । वर्णाश्रमानुरोधिशुभकर्मानुष्ठानापेक्षया निर्मलान्तःकरणविवेकवैराग्यद्वारेण सर्वकर्मसंन्यासिनो भूत्वा शमदमादिसाधनसामग्रीसंपन्ना मोक्षमेवापेक्षमाणा यथोक्ततत्त्वज्ञानद्वारा यं प्रविशन्ति सोऽव्यात् । आत्मप्रदानेन मुमुक्षून्ब्रह्मनिष्ठान्परिरक्षतादित्यर्थः ॥ ८९ ॥

तैत्तिरीयकसारस्य वार्तिकामृतमुत्तमम् ।
मस्करीन्द्रप्रणीतस्य भाष्यस्यैतद्विवेचनम् ॥ ९० ॥

आशीर्वादव्याजेन वल्लीद्वयार्थं संक्षिप्योपसंहृत्य प्रकृतं वार्तिकमिदानीमुपसंहरति । तैत्तिरीयकेति । मस्करो वैणवो दण्डः । तदुपेतानां संन्यासिनां श्रेष्ठो भगवान्भाष्यकारः । तेन प्रणीतं यत्तैत्तिरीयकशाखासारस्योपनिषदो भाष्यं तस्यैतद्विवेचनम् । वार्तिकामृतं सर्वदोषरहितं निरतिशयपुरुषार्थसाधनम् । सुरेशाख्यो यतिश्चकारेति संबन्धः ॥ ९० ॥

मुमुक्षुसार्थवाहस्य भवनार्मभूतो यतेः ।
शिष्यश्चकार तद्भक्त्या सुरेशाख्यो महार्थवित् ॥९१॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकरभगवत्पादपूज्यशिष्यस्य श्रीमत्सुरेश्वराचार्यस्य कृतिषु तैत्तिरीयकोपनिषद्भाष्यवार्तिकं संपूर्णम् ॥

संप्रदायपूर्वकत्वेनास्य वार्तिकस्य विद्वदुपादेयत्वं सूचयति । मुमुक्षुसार्थवाहस्येति । मुमुक्षवो मोक्षमेवापेक्षमाणाः साधनचतुष्टयविशिष्टाः संन्यासिनस्तेषां सार्थः समूहस्तं वहति तत्र निर्वाहकत्वेन वर्तते भगवान्भाष्यकारस्तस्य यतीनाम-

१ (क. ख.) °ण ते प्र°। २ (ङ.) °द्विलोच°। ३ (क. ख.) °रेश्वराख्यो। ४ (ग. घ.) °मधुवो। ५ (क. ख.) °रेश्वराख्यो।